॥ श्रीः ॥

मिथिला-ग्रन्थमाला

२६

॥ श्रीः ॥

# पितृकर्म-निर्णयः

विविधविरुदावलीविराजमानमानोन्नतमहाराजाधिराजश्रीमन्मिथिलेश-
संस्थापितमहारानीरमेश्वरलतासंस्कृतमहाविद्यालयाध्यक्ष-
पण्डित श्रीत्रिलोकनाथमिश्रेण विरचितः

पण्डित श्रीरामचन्द्रझा व्याकरणाचार्येण सम्पादितः



प्रकाशकः—
चौखम्बा संस्कृत पुस्तकालय, बनारस—१

सं० २००८ ] मूल्यं ३) सन् १९५१ ]

# अत्र किञ्चिद्वक्तव्यम्

विदितमेवैतत् तत्रभवतां भवतां यद् अनादाविह संसारे सनातनपरमात्मना सनातनजीवकल्याणाय सनातनवेदद्वारा संस्थापितः सनातनधर्मरूपो मार्गो विजयतेतमामिति। यदनुसरणेन भारतीयमानवाः सदा (अन्येच्छानधीनेच्छाविषयत्वात्) स्वतः पुरुषार्थभूतं सुखं दुःखाभावञ्च प्राप्नुवन्ति प्रापयन्ति च।

तत्रापि भवन्तो विशेषतो भाविसन्ततिकल्याणाय परमपरिश्रमेण परम्पराप्राप्तकुलमर्यादामर्थागमसंरक्षणादिपद्धतिञ्च परिपालयितुं यत्नं विदधतां पित्रादीनां सर्वविधकल्याणाय तज्जीवनकाले तदनन्तरञ्च "जीवतो वाक्यकरणात् क्षयाहे भूरिभोजनात्। गयायां पिण्डदानाच्च त्रिभिः पुत्रस्य पुत्रता॥" इत्याद्यनुसारेण निरन्तरं यतमाना विलसन्ति।

अत एव मिथिलामण्डलान्तर्गतद्वारवङ्ग(दरभङ्गा)स्थ-महारानीरमेश्वरलतासंस्कृत-महाविद्यालयाध्यक्षाः प्रख्यातव्याकरण-न्याय-वेदान्त-मीमांसा-साहित्यधर्मशास्त्राद्यनेकशास्त्रपाण्डित्याः पण्डितप्रवराः श्रीमन्त आचार्याः त्रिलोकनाथमिश्रमहोदयाः सेवितपित्रादीनां भवताम्पुरतः "श्रुतिर्विभिन्ना स्मृतयो विभिन्ना नैको मुनिर्यस्य मतं न भिन्नम्। धर्मस्य तत्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥" इत्यादिप्रतिपादितमनुसरणीयपन्थानं समुपस्थापयितुकामाः "पितृकर्मनिर्णय" नामकं ग्रन्थरत्नं यथासम्भवं श्रुतिस्मृतिपुराणादिवचनसमन्वयपूर्वकं व्यरीरचन्। यत्परिशीलनेन मैथिला अन्ये च साधारणसंस्कृतज्ञा अपि तत्र विषये सकलवेदादिशास्त्रसारभूतं सिद्धान्तमल्पायासेनैव विज्ञाय तदनुष्ठानेन कृतार्था भविष्यन्तीति निश्चप्रचम्।

ग्रन्थे चास्मिन् स्थलविशेषे काशीस्थचौखम्बा-संस्कृतपुस्तकालयान्तर्गत मिथिला-ग्रन्थमालासम्पादकत्वेन सम्पादिता मया टिप्पणीरवलोक्य प्रायः समेषां हृदये अमन्दानन्दसन्दोहधारैव प्रवहेदिति मे विश्वासः।

अत्र च धर्मशास्त्रनिबन्धग्रन्थशिरोभूषणायमाने ग्रन्थमणौ पितृकर्माङ्गाशेषविषयाणां समीक्षणसमये मैथिलाचारेणैव ग्रन्थकृतां दृष्टिराप्लावितेति सुरभारतीप्रेयोभिः सकलमैथिलैः प्रकृतपुस्तकं क्रीत्वा केवलमैथिलोपकाराय बहुवित्तव्ययेन मिथिलाग्रन्थमाला-ख्यसंस्थासंस्थापकेभ्यो श्रेष्ठिवर्यश्रीजयकृष्णदासहरिदासगुप्तमहोदयेभ्यो धन्यवादमात्रमपि प्रददद्भिः तेभ्य आनृण्यं प्राप्येतावश्यमेवेति दृढमाशासे।

पितृपक्षः, सं. २००८

श्रीरामचन्द्र झा

# विषयसूची

॥ श्रीगणेशाय नमः ॥

॥ ॐ महाकाली–महालक्ष्मी–महासरस्वतीभ्यो नमः ॥

# पितृकर्मनिर्णयः

काञ्चनप्रतिमां काङ्क्षितकमलां कमलाऽऽसनाम् ।
सेवकाभीष्टदामिष्टदेवतां हृदि भावये ॥ १ ॥
तत्तन्निबन्धसम्बद्धपदार्थप्रतिपत्तये ।
सर्वविद्यानिधिं तातं 'पदार्थ'[1]मनुचिन्तये ॥ २ ॥
चारित्रचित्रितधरं[2] गुरुं 'चित्रधरं'[3] स्तुवे ।
यत्कण्ठाऽऽश्लेषसोत्कण्ठा हृद्या विद्या न काऽभवत् ॥ ३ ॥
विस्मरतु मानसं मे कथमिव 'हरिशङ्करं'[4] गुरुं जातु ।
यत्पदनिर्मलनखराऽऽदर्शेऽदर्शि त्रयीमुखं[5] रुचिरम् ॥ ४ ॥
'बालकृष्ण'[6]चरणाम्बुजद्वयीमाश्रयाऽऽश्रय मनोमिलिन्द मे ।
यन्मनोहरमरन्दसौरभे सस्पृहाः सुमनसो[7]ऽपि सन्ततम् ॥ ५ ॥
पाणिनीयमनुशासनं, वनं केसरीव, कलयन् कविः क्षमः ।
हन्तुमस्ति दुरितद्विपं मनस्तामसञ्च 'रविनाथ'[8] एव नः ॥ ६ ॥
विवादजातं परिहृत्य सर्वतो बहून्निबन्धानवलोक्य यत्नतः ।

---

१. 'पदार्थमिश्र'नामानं पितरम् । २. चारित्रेण चित्रिता धरा येन तम् । ३. महामहोपाध्याय'चित्रधरमिश्र'नामानम् । ४. 'ठाढ़ी'ग्रामवास्तव्य'हरिशङ्करझा'-नामानम् । ५. त्रय्याः = ऋक्सामयजुषां मुखं=व्याकरणमित्यर्थः, दर्पणे हि मुखदर्शन-मुचितमेव । ६. वाराणसेयहिन्दुविश्वविद्यालयसंस्कृतकालेजाध्यक्षमहामहोपाध्यायगुरुवर-'बालकृष्णमिश्रे'त्यर्थः । पक्षान्तरे बालकृष्णः=शैशवावस्थाऽऽपन्नः कृष्णः । ७. 'सुमनस्' शब्दोऽयं पुष्पार्थको नित्यबहुवचनान्तः स्त्रीलिङ्गश्च, विद्वदर्थकस्तु पुंलिङ्गो विवक्षाकृतबहु-वचनान्तश्च । ८. ठाढ़ीग्रामवास्तव्य'रविनाथझा'नामा, पक्षे रविश्चासौ नाथ इति ।

जनोपकाराय तनोति मैथिल'स्त्रिलोकनाथः[1]' पितृकर्मनिर्णयम्" ॥७॥

आदौ श्रीहरिशङ्कराद् गुरुवराद्यः शब्दशास्त्रं ततः
शब्दन्यायमुपेयिवान् सुयशसः श्रीबालकृष्णाभिधात् ।
मीमांसामखिलाञ्च चित्रधरतः साहित्यशास्त्रं स्वयं
स्मार्त्तज्ञः पितृकर्मनिर्णयमसौ निर्मातुमारब्धवान् ॥ ८ ॥

अथ पितृकर्मनिर्णयस्तत्र तावद्ये केचिज्जीवतामेव पित्रादीनां पुत्रादिभिराप्तसम्बन्धिभिः श्रद्धया सम्पाद्यमानं चरणशुश्रूषादि दीयमानञ्च तृप्तिकरमन्नादि श्राद्धं न तु तदितरन्मरणोत्तरं क्रियमाणं (करिष्यमाणं), पाञ्चभौतिकतनुत्यागोत्तरं "वासांसि जीर्णानि यथा विहाय"(गीता) "यथा तृणजलौका"( श्रीमद्भागवत ) इत्यादि शास्त्रप्रामाण्यात्सद्य एव शरीरान्तरमाश्रयतो जीवस्य, पितृत्वेन कर्त्रुद्देश्यतयाऽवस्थानासम्भवेन मृतकश्राद्धस्य बालक्रीडायितत्वाद्गगनकुसुमायमानत्वाद्वेत्यर्वाञ्चो ब्रुवते, तान्प्रति ब्रूमः-नायं श्राद्धशब्दः प्रज्ञादित्वणान्त इति केवलयौगिकः, अपि तु पङ्कजादिवद्योगरूढस्तथा च श्रद्धया दीयमानमपि तदेव श्राद्धं भवितुमर्हति यच्छ्राद्धकल्लक्षणालक्षितं स्यत्तात्र यथाऽऽह मरीचिः—

प्रेतान् पितॄँश्च निर्दिश्य भोज्यं यत्प्रियमात्मनः ।
श्रद्धया दीयते यत्र तच्छ्राद्धं परिकीर्त्तितम् ॥

पराशरः—देशे काले च पात्रे च विधिना हविषा च यत् ।
तिलैर्दर्भैश्च मन्त्रैश्च श्राद्धं स्याच्छ्रद्धया युतम् ॥

मनुः—यद्यद्दाति विधिवत्सम्यक् श्रद्धासमन्वितः ।
तत्तत्पितॄणां भवति परत्रानन्तमक्षयम् ॥

निर्णयसिन्धौ कमलाकरः—"ब्राह्मण-स्वीकारान्तश्चतुर्थ्यन्तपदोपनीतपित्राद्युद्देश्यकस्त्यागः श्राद्धम्" ।

शब्दकल्पद्रुमः-"सम्बोधनपदोपनीतान् पित्रादीँश्चतुर्थ्यन्तपदेनोद्दिश्य हविस्त्यागः श्राद्धम्"।

पुलस्त्यः—संस्कृतव्यञ्जनाढ्यञ्च पयोदधिघृतान्वितम् ।
श्रद्धया दीयते यस्माच्छ्राद्धं तेन निगद्यते ॥

---

१. गोपुरग्रामवास्तव्यो विश्वनाथ-बदरीनाथ-केदारनाथेति सोदरत्रयस्यानुजः श्रीकाशीनाथेति सोदरस्याग्रजः पं०श्रीत्रिलोकनाथमिश्रः ।

नह्येवमादिषु वचनेषु जीवन्तं पित्रादिमुद्दिश्य दीयमानं भोज्यादि श्राद्धत्वेन लक्षितं, नवा कोऽपि सचेतास्तिल-दर्भ-मन्त्रादिकरणक-चतुर्थ्यन्तपदोपादानपूर्वकहविष्प्रदानेन जीवन्तं पित्रादिं सेवमानो दृश्यते ।
प्रत्युत जीवतः पित्रादेस्तु—

"ध्रियमाणे[1] तु पितरि पूर्वेषामेव निर्वपेत्"

इत्यादिवाक्येन मन्वादिभिर्मुखतः श्राद्धं प्रतिषिद्धमेवास्ति ।

श्रुतयश्च मृत-श्राद्धबोधिकाः सन्त्यनेकशः ।
पञ्चषास्तु प्रदर्श्यन्ते सार्थाः सन्देह-शान्तये ॥

❀ तथा हि—ये निखाता ये परोप्ता ये दग्धा ये चोद्धिताः ।
सर्वांस्तानग्न आवह पितॄन् हविषे अत्तवे ॥
(अथर्व० १८-२-३४)

अयमर्थः—हे अग्ने! मम ये पितरो भूमौ निखाता ये जलादौ वनादावितरत्र वा परिक्षिप्ता यद्वा मरणोत्तरं यथावदेवावस्थिताः ये दग्धाः सन्तः प्रेतलोकमधिष्ठिता ये च पितृलोकं गता यद्वा पूर्वं भूम्यादौ निखाताः पश्चात्केनचिदुद्धृताः = उपर्यानीताः सन्ति, त्वं तान् सर्वान् पितॄन् मया दीयमानस्य हविषो भोजनाय (श्राद्धदेशेऽस्मिन्) आवह = आवाहय-आनयेति यावत् । इति ।

आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः ।
अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् ॥ (यजुर्वे० १९-५८)

अयमर्थः—अस्माकमग्निष्वात्ताः = अग्निना स्वदिताः-दग्धा इति यावत्, 'स्वद आस्वादने' इत्यस्याग्निपूर्वकस्य वैदिकं रूपमिदं कृतषत्वम् । तथा च चातुर्मास्ययागस्य तृतीये साकमेध-पर्वणि विहितं महापितृयज्ञं प्रक्रम्य श्रूयते—

"यानग्निरेव दहन् स्वदयति ते पितरोऽग्निष्वात्ताः" इति ।
(शतपथ० २ काण्डम्)

अथैक्यञ्चाग्निष्वात्ताग्निदग्धशब्दयोः[2]—

"ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते"
(ऋग्वेद म० १० सू० १५ म० १४ अथर्ववेदोऽपि)

---

१. अवतिष्ठमाने । २. यस्तु "अग्निदग्धानग्निदग्धान् काव्यान् बर्हिषदस्तथा ।

"ये अग्निष्वात्ता ये अनग्निष्वात्ता मध्ये दिवः स्वधया मादयन्ते" इति ।

(यजुर्वे० १९-६०)

सोम्यासः=प्रसन्नाः पितरो देवयानेन वर्त्मना (श्राद्धभूमाविह) आगच्छन्तु, आगत्य चास्मिन् श्राद्धरूपे यज्ञे स्वधया="स्वधा वै पितॄणामन्नम्" इति श्रुतेः स्वीयान्नग्रहणेन मदन्तो=हृष्यन्त, अधिब्रुवन्तु=आशीर्वचो वितरन्तु, अस्मान् ते=पितरः अवन्तु=रक्षन्तु (च) इति ।

"ये अग्निदग्धा ये अनग्निदग्धा मध्ये दिवः स्वधया मादयन्ते ।
त्वं तान् वेत्थ यदि (ति) ते जातवेदः स्वधया यज्ञं स्वधितिं जुषन्ताम्"

(अथर्ववे० १८-२-३५)

अयमर्थः—हे अग्ने ! ये अग्निदग्धाः=येषां पाञ्चभौतिकं वपुश्चितायां भस्मीभूतं, येऽनग्निदग्धाः=येषां तन्नाग्निदाग्धमर्थान्निखातं परोप्तं वा, (ये च) द्युलोकेऽमृतमयेनान्नेन मादयन्ते=प्रसीदन्ति; यदि त्वं तान् जानासि (तदा) हे जातवेदः ! त्वया ते स्वधारूपेण यज्ञमन्नञ्च सेवन्ताम् । इति ।

"स्वधा पितृभ्यः पृथिवीषद्भ्यः स्वधा पितृभ्योऽन्तरिक्षसद्भ्यः स्वधा पितृभ्यो दिविषद्भ्यः" (अथर्ववे० १८-४-८०)

अयमर्थः— ये पृथिव्यां येऽन्तरिक्षे ये च दिवि सीदन्ति (वर्त्तन्ते) पितरस्तेभ्योऽहं कव्यं वितरामि । इति ।

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु पराङ्गतिम् ॥ (अथर्ववे०)

निगद-व्याख्यातोऽयम् ।

"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः ।
असुं य ईयुरवृका ऋतज्ञास्तेनोऽवन्तु पितरो हवेषु ॥" (अथर्ववे०)

अयमर्थः—सोम्यासः=सोमसम्पादिनो मञ्जुला वाऽधमा मध्यमा उत्तमाश्च पितरो ये असुम्=प्राणान् ईयुः=(यज्ञकर्त्रे) ददति यद्वा

---

अग्निष्वात्तांश्च सौम्यांश्च विप्राणामेव निर्दिशेत्"

इति मनुनाऽग्निदग्धाग्निष्वात्तयोर्भेदो दर्शितः, स योगरूढत्वमादाय नैतावता तदुभयशब्द-योगार्थ-भेदः समस्ति ।

प्राणानपजहुस्ते गताऽहिंसाः सत्यवादिनश्च हवेषु=यज्ञेषु यद्वा आहूताः सन्तो नः=अस्मान् अवन्तु=रक्षन्तु। इति। ❀।

नहि जीवन् पित्रादिः केनापि भूमौ निखन्यते जलादौ वनादौ वा निक्षिप्यतेऽग्निना वा दह्यते, न वा—

"उपरिष्टाच्च जलाद्यस्थाग्निष्वात्तादयः पितृगणा निवसन्ति" इत्यादि स्मृतेः "विधूर्ध्वलोके पितरो वसन्ति" "उदन्वती द्यौरवमापीलुमतीति मध्यमा तृतीया ह प्रद्यौरिति यस्यां पितर आसते" (अथर्ववेद १८-२-४८) इत्यादिश्रुतेश्च चन्द्रलोकादप्यूर्ध्वभागस्थे पितृलोके निवसति।

न च जीवन् पित्रादिरग्निष्वात्तो नापि च भोजनादिग्रहणवेलायां देवयानेन मार्गेणाऽऽगच्छन् क्वापि श्रुत-दृष्टः। न वाऽयमग्निदग्धः सन् द्युलोकमधिष्ठितः श्रद्धापूर्वकान्नादिदानेन पुत्रादिभिः शुश्रूष्यते। नापि च जीवन् पित्रादिरन्तरिक्षे दिवि च निषीदत्यसम्भवात्। नापि वा जीवच्छ्राद्धपक्षपातिनो जीवन्तमग्निदग्ध-(मग्निना भस्मीकृत-)म्पित्रादिमुद्दिश्यान्नादिकं वितरन्ति तदपि च भूमौ; नापि च भूमौ दत्तेन तेनान्नेनासौ तृप्तुमर्हति; न वा तृप्तोऽपि परां गतिं गच्छन्नवलोक्यते। न च जीवन् पित्रादिरुत्तमाधममध्यमश्रेणीकः सम्भवति, न वा सोमं सम्पादयितुमर्हति, निष्प्राणो वा बुभूषति। तस्माज्जीवतः श्राद्धमिति भ्रान्ति-विजृम्भितमिति श्राद्धं मृतस्यैवेति निर्विचिकित्सम्। तथा सति 'वासांसि जीर्णानी'-त्यादिशास्त्र-विरोधस्तु न, तत्तच्छास्त्रेण हि जीवो निःशरीरः क्षणमपि नावतिष्ठते, मृत्वाऽपि सद्यः शरीरान्तरं गृह्णातीत्येव प्रतिपाद्यते तच्चास्मत्पक्षे युक्तमेव—

"आप्य-तैजस-वायव्यानि लोकान्तरेशरीराणि"(न्यायद.सू.३-१-२८)

इत्यादिशास्त्रप्रामाण्यान्मरणानन्तरं सूक्ष्ममातिवाहिकसंज्ञकं[2] वायव्य(वीर्य)व्यं शरीरं सद्य एव जीव आप्नोति-यत्पूर्त्तये दशगात्रपिण्डदानं क्रियते, तत्र च सन्तिष्ठमानः क्षुत्पिपासातिदाहाद्याकुलो मूर्छित इवासौ जीवो भवति। तथा च मार्कण्डेयः—

प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्त्तिता।
क्षुत्तृष्णे प्रत्यहं तत्र भवेतां भृगुनन्दन॥

---

१. जलमयलोकाच्चन्द्रलोकादित्यर्थः।
२. अतिवाहः = अतिगमनं प्रयोजनमस्येत्यर्थः।

विज्ञानेश्वरोऽपि—"क्षुत्तृष्णोपजनितात्यन्तदुःखानुभवावस्था प्रेतत्वम्"।
इदमत्र गूढम्—

यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम्।
तं तमेवैति कौन्तेय सदा तद्भावभावितः ॥ (गीताअ० ८ श्लो० ६)

इति भगवद्वाक्यान्मरणकालिकभावनानुकूलामेव दशामासादयति जीव इति बहूनां जीविनामाजीवनं पुत्र-दार-धनादि-ममत्व-निमग्नतया मरणकालेऽपि तद्भाव-भावितात्मत्वेन पाञ्चभौतिकं वपुरपहाय वायवीयमातिवाहिकं तदधितिष्ठन् जीवो मूर्छन्निव दाहाद्याकुलः प्रतिक्षणं तत्रैव पुत्र-दार-धनादावासज्जते, आसज्जमानश्च तदलाभेन महद्दुःखमनुभवति। तदेव दुःखाद्यपनोद्य तच्छरीरमुन्मोच्य च पितृ-लोकं प्रापयितुं पितृ-लोक-प्राप्तञ्च तं तत्र सुखेनावस्थापयितुं ताड(र)-यन्त्रादिद्वारा वार्त्तादि-प्रेषणवदनादिवैदिकमन्त्रद्वारा श्राद्धं सम्पाद्यते। तथा च श्रुतिः—

"ये सूर्यं न तितिक्षन्त आतपं तममुं दिवः। आरायान् बस्तवासिनो दुर्गन्धीन् लोहितास्यान् मककान्नाशयामसि" ( अथर्ववे० ८-३-६ )

अयमर्थः—ये प्रेताः सूर्यतेजः सोढुमसमर्था दिवा निलीय[1] वर्तन्ते ये च श्रीहीना मेषचर्म-परिधाना दुर्गन्धा रक्तमुखाश्चताननेन श्राद्धेन ( मनःशक्त्या मन्त्रशक्त्या द्रव्यशक्त्या च ) नाशयिष्यामि = तेषां तदतिदुःखदं प्रेतशरीरं मोचयिष्यामि। इति।

"चन्द्रमा मनसो जातः" इति श्रुतेः, "आत्मा वै पुत्रनामासि" इति श्रुतेश्च मनसश्चन्द्रलोकेन पितुश्च पुत्रेण सह महान् घनिष्ठः सम्बन्धः सुप्रतीत इति श्राद्धवेलायां पुत्रादिराप्तसम्बन्धी परिशुद्धेन मनोयोगेन पितनावाहयति तदानीमेतन्मनस उत्पद्यमानो भावतरङ्ग ऐकात्म्याच्चन्द्रलोकपर्यन्तं स्वसम्बन्धमाधाय तदुपरितनलोके वर्त्तमानाँस्तान् पितॄन् दूरतोऽपि समाकर्षति।

ईदृशमनःशक्तिसञ्चयार्थमेवाशौचाभ्यन्तरे कर्त्तुः संयमविधिस्तादृङ्मनःशक्तिमतामेव च ब्राह्मणानां निमन्त्रणानुज्ञा, मनःशक्तिवर्द्धके तीर्थादौ

---

१. दिवानिलीनाः प्रेताः सायं प्रातश्च सञ्चरन्तीत्यत एव स्त्रियो बालान् सायं प्रातरेकाकितया गन्तुं न ददति, ब्रुवते च यदिदानीमेकाकिना न भ्रमणीयं प्रेताः सञ्चरन्तीति।

"......'एषु तीर्थेषु यच्छ्राद्धं तत्कोटिगुणितं भवेत्"
"न कालनियमस्तत्र गङ्गाम्प्राप्य सरिद्वराम्"
"गङ्गातीरे तु सम्प्राप्ते इन्दोः कोटीरवेर्दश"

इत्यादि—मत्स्यपुराण-हारीतादि-वाक्यैः कृता श्राद्धप्रशंसा च सङ्गच्छते।

एवमेव मन्त्रशक्त्या परलोकस्थस्यात्मन आकर्षणं तदीयसुखशान्त्यादिप्राप्तिश्च सुकरा भवति। तथाहि—

लोकेऽपि भूयान्मन्त्रशक्तेर्महिमा दृश्यते—सर्पहारमन्त्रशब्दश्रुत्या सर्पाः सर्पहारमुपसर्पन्ति, विषहारमन्त्रशब्दश्रुत्या च दत्तमपि विषं निर्हरन्ति। व्याध-तुम्बी-वीणादि-निनादमाकर्ण्य मोहिता मृगा घातकमपि व्याधं दूरादनुधावन्तीत्येवञ्च लौकिकशब्दानामप्येतावति महिमनि वैदिकदिव्यशब्दाँस्तत्तत्पुत्रादिमुखा-( यत्राऽऽजीवनमात्मतोऽपि निरतिशयं स्नेहं वितरन्त आसन् )च्छ्रावं श्रावं सद्य एव स्वस्थानाच्छ्राद्धदेशमवतरन्ति संस्कारतः स्थितेन तेन चिरन्तनेन स्नेहातिशयेन प्रेरिताः श्राद्धमादित्सवः पितर इति न किञ्चिदपि चित्रम्। वैदिकादिमन्त्रैः पितरस्तृप्यन्तीत्याह मनुः—

ब्रह्मोद्याश्च कथाः कुर्यात्पितृणामेतदीप्सितम्।
स्वाध्यायं श्रावयेत्पित्र्ये धर्म्मशास्त्राणि चैव हि॥

द्रव्यशक्तिरपि तावन्तमेव महिमानमाधत्ते, तथाहि—प्रतिद्रव्यं स्वभावतो वैद्युतकशक्तिरस्ति-यन्मिथः संयोगेनाद्यत्वे वैज्ञानिका दूरतमप्रदेशेऽपि पलमात्रेण वार्तां प्रेषयन्ति परस्परं जनानालापयन्ति च, क्वचिदेकत्र ( शक्तिकेन्द्रे[1] ) यन्त्रचालनमात्रेण सर्वत्रैव नगरादौ प्रकाशं विदधति, प्रतिगृहं प्रत्यपवरकं[2] प्रतिस्थानञ्च स्वभावसञ्चारीणि व्यजनानि सम्पादयन्ति, वह्नियान-वायुयान-विद्युद्यान-मुष्टिल (मोटर)-यानादि-निर्माणेन जगतः श्रेयश्चातन्वन्ति।

तदित्थम्भूतयैतया मिथः सम्बद्धया द्रव्यीयवैद्युतकशक्त्या श्राद्धकाले पितृसम्बन्धस्थापनं न किमपि दुष्करमित्यत एव पितृकार्येषु कुशतिलजलानि देवकार्येषु च कुशयवजलानि सुवर्णरजतादिपात्रभेदाँश्च

१. 'पावर-हाउस' इति लोकप्रसिद्धे। २. अपवरकं = कोठरी ( ली )।

त्रिकालज्ञाः सूक्ष्मदृशो वैज्ञानिका महर्षयः श्राद्धार्थमकल्पयन्, यदिदानीं पाश्चात्यवैज्ञानिका अपि मुक्तकण्ठं प्रशंसन्ति मन्यन्ते च।

पितरश्च श्राद्धदेशे न साक्षादपि तु निमन्त्रितयोग्यब्राह्मणशरीरम्प्रविश्यायान्ति। तथा च मनुः—

निमन्त्रितांस्तु पितर उपतिष्ठन्ति[1] तान् द्विजान्।
वायुवच्चानुगच्छन्ति तथाऽऽसीनानुपासते॥

मत्स्यपुराणम्—

ब्राह्मणैस्ते सहाश्नन्ति पितरो ह्यन्तरिक्षगाः।
वायुभूताश्च तिष्ठन्ति भुक्त्वा यान्ति पराङ्गतिम्॥

वायुरूपमास्थाय पितरः श्राद्धदेशमायान्तीत्याह वायुपुराणे—

पिण्डं श्राद्धस्य पश्यन्ति वायुभूता न संशयः।

यदाऽरण्ये महाराजस्य पितुर्दशरथस्य श्राद्धमनुतिष्ठन् भगवान् रामचन्द्रो ब्राह्मणान्भोजयति स्म तदा तैरतिविशुद्धाऽऽशयैर्महर्षिभिर्ब्राह्मणैः सहाऽऽच्छन्नं तं निजश्वशुरं दशरथमलोक्य व्रीडया सीताऽलीयत, यदवलोक्य रामेण निलयनकारणं पृष्टा सीता प्रोवाच—

पिता तव मया दृष्टो ब्राह्मणाङ्गेषु राघव। (पद्मपुराणम्)

श्रुतिः—"इममोदनं निदधे ब्राह्मणेषु विष्टारिणं लोकजितं स्वर्गम्[2]। स मे मा क्षेष्ट स्वधया पिन्वमानो विश्वरूपा धेनुः कामदुघा मे अस्तु")॥

(अथर्ववे० ४-३४-८)

अयमर्थः—विस्तृतं लोकजित्स्वर्गसाधकञ्चैतदन्नमहं ब्राह्मणेभ्योऽर्पयामि। जलयोगेन वर्द्धमानमिदमन्नं विश्वरूपा कामधेनुरिव मह्यं सकल-फल-प्रदायकमस्तु। इति।

एतच्च प्रेतादिशरीरं सूक्ष्मं ज्ञानदृग्भिरेवावलोकयितुं शक्यं नास्माभिः स्थूलदृग्भिस्तदुक्तं महाभारतेऽश्वमेधपर्वणि—

यथान्धकारे खद्योतं लीयमानमितस्ततः।
चक्षुष्मन्तः प्रपश्यन्ति तथा च ज्ञानचक्षुषः॥
पश्यन्त्येवंविधं सिद्धा जीवं दिव्येन चक्षुषा।

---

इति प्रसिद्धम्। १. छान्दसत्वात्परस्मैपदमत्र बोध्यम्। २. स्वः=स्वर्गं गच्छतीति गमयतीति वा स्वर्गस्तम्। स्वर्ग्यमिति पाठे स्वर्गाय हितमित्यर्थे यदन्तं पदम्।

च्यवन्तं जायमानञ्च योनिं चानुप्रवेशिनम् ॥

गीता—उत्क्रामन्तं स्थितं वापि भुञ्जानं वा गुणान्वितम्।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥

तस्मात् पाञ्चभौतिकशरीर-प्रहाणोत्तरं सूक्ष्मं वायव्य(वीय)-मातिवाहिकं शरीरं, तद्द्वारा पश्चात्पितृलोकञ्चाधिष्ठितान् पितॄनुद्दिश्य क्रियमाणं सर्वमेव श्राद्धं विज्ञानदशाऽपि प्रबलफलमित्यगत्या मन्तव्यम्।

अथोच्येत—यः प्रेतलोकात्पितृलोकाद्वा पाञ्चभौतिकं शरीरम्प्रविष्ट-स्तमुद्दिश्य क्रियमाणं वार्षिक-पार्वणादिश्राद्धमात्रं विफलमिति। तत्रोत्तरम्-एतदपि सफलं, यतो यां यां योनिं पितर आसादयन्ति पाञ्चभौतिकीमपि तत्र तत्रोपयुज्यमानभोज्यादिरूपेणैव श्राद्धे दीयमानं तदन्नादिकमुपतिष्ठत इति। तदुक्तं हेमाद्रौ—

देवो यदि पिता जातः शुभकर्मानुयोगतः।
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति॥
गान्धर्वे भोगरूपेण पशुत्वे च तृणं भवेत्।
श्राद्धान्नं वायुरूपेण नागत्वेऽप्यनुगच्छति॥
पानं भवति यक्षत्वे राक्षसत्वे तथाऽऽमिषम्।
दानवत्वे तथा मांसं प्रेतत्वे रुधिरोदकम्।
मानुषत्वेऽन्नपानादि नानाभोगरसो भवेत्॥

अतएव—न सन्ति पितरश्चेति कृत्वा मनसि यो नरः।
श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते॥

इत्यादिनाऽऽदित्यपुराणादौ श्राद्धमनातिष्ठतो निन्दा स्मर्यते, आतिष्ठतश्च—

आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च।
प्रयच्छन्ति तथा राज्यं नृणां प्रीताः पितामहाः॥ (याज्ञवल्क्यः)
आयुः प्रजां धनं विद्यां स्वर्गं मोक्षं सुखानि च।
प्रयच्छन्ति तथा राज्यं पितरः श्राद्धतर्पिताः॥ (सुमन्तुः)
आयुः कीर्त्तिं बलं तेजो धनं पुत्र-पशु-स्त्रियः।
ददन्ति[1] पितरस्तस्य आरोग्यं नात्र संशयः"॥ (वराहपुराणम्)

---

१. आर्षोऽयं प्रयोगः।

कन्यां प्रजां वन्दिनश्च पशून्मुख्यान् सुतानपि ।
घृतं कृषिञ्च वाणिज्यं द्विशफैकशफं तथा ॥
ब्रह्मवर्चस्विनः पुत्रान् स्वर्णरूप्ये सकुप्यके ।
ज्ञातिश्रैष्ठ्यं सर्वकामानाप्नोति श्राद्धदः सदा ॥
स्वर्गं ह्यपत्यमोजश्च शौर्यं क्षेत्रं बलं तथा ।
पुत्रश्रैष्ठ्यं ससौभाग्यमपत्यं मुख्यतां सुतान् ॥
प्रवृत्तचक्रतां तद्वद्वाणिज्यं प्रभुतां तथा ।
अरोगित्वं यशो वीतशोकतां परमां गतिम् ॥
धनं विद्यां भिषक्सिद्धिं रूप्यं गाश्चाप्यजाविकम् ।
अश्वानायुश्च विधिवद्यः श्राद्धं सम्प्रयच्छति ॥ (गरुडाग्निपुराणे)

इत्यादिभिर्भूयसी प्रशंसा । एतच्च श्राद्धम्—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं सपिण्डनम् ।
पार्वणञ्चेति विज्ञेयं गोष्ठ्यां शुद्ध्यर्थमष्टमम् ॥
कर्म्माङ्गं नवमं प्रोक्तं दैविकं दशमं स्मृतम् ।
यात्रार्थैकादशं[1] प्रोक्तं पुष्ट्यर्थं द्वादशं स्मृतम् ॥

इत्यादि भविष्यपुराणविश्वामित्रादिस्मृतेर्द्वादशविधम् । एषामेकैकशो लक्षणानि, यथा भविष्यपुराणे—

अहन्यहनि यच्छ्राद्धं तन्नित्यमभिधीयते ।
वैश्वदेवविहीनं तदशक्तावुदकेन तु ॥
एकोद्दिष्टं तु यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तदप्यदैवं कर्त्तव्यमयुग्मानाशयेद्द्विजान् ॥
कामाय विहितं काम्यमभिप्रेतार्थसिद्धये ।
पार्वणेन विधानेन तदप्युक्तं खगाधिप ॥
वृद्धौ यत्क्रियते श्राद्धं वृद्धिश्राद्धं तदुच्यते ।
सर्वं प्रदक्षिणं कार्यं पूर्वाह्णे तूपवीतिना ॥
गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् ।
अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ॥
'ये समाना' इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् ।

---

1. यात्रार्थमेकादशमिति वाच्ये यात्रार्थैकादशमित्यार्षत्वात् ।

नित्येन तुल्यंशेषं स्यादेकोद्दिष्टं स्त्रिया अपि ॥
अमावास्यां यत्क्रियते तत्पार्वणमुदाहृतम् ।
क्रियते वा पर्वणि यत्तत्पार्वणमिति स्थितिः ॥
गोष्ठ्यां यत्क्रियते श्राद्धं गोष्ठीश्राद्धं तदुच्यते ।
बहूनां विदुषां सम्पत्सुखार्थं पितृतृप्तये ॥
क्रियते शुद्धये यत्तु ब्राह्मणानान्तु भोजनम् ।
शुद्ध्यर्थमिति तत्प्रोक्तं वैनतेय ! मनीषिभिः ॥
निषेककाले सोमे च सीमन्तोन्नयने तथा ।
ज्ञेयं, पुंसवने चैव श्राद्धंकर्माङ्गमेव च ॥
देवानुद्दिश्य यच्छ्राद्धं तद्दैविकमिहोच्यते ।
हविष्येण विशिष्टेन सप्तम्यादिषु यत्नतः ॥
गच्छन्देशान्तरं यत्तु श्राद्धं कुर्याच्च सर्पिषा ।
यात्रार्थमिति तत्प्रोक्तं प्रवेशे च न संशयः ॥
शरीरोपचये श्राद्धमर्थोपचय एव च ।
पुष्ट्यर्थमिति विज्ञेयमौपचारिकमुच्यते ॥

एतत्पञ्चविधमाह बृहस्पतिः, कूर्मपुराणञ्च—

नित्यं नैमित्तिकं काम्यं वृद्धिश्राद्धं तथैव च ।
पार्वणञ्चेति मनुना श्राद्धं पञ्चविधं स्मृतम् ॥
अहन्यहनि नित्यं स्यात्काम्यं नैमित्तिकं पुनः ।
एकोद्दिष्टन्तु विज्ञेयं वृद्धिश्राद्धञ्च पार्वणम् ॥
एतत्पञ्चविधं श्राद्धं मनुना परिकीर्त्तितम् ॥

मात्स्ये तु संक्षिप्य, त्रिविधमेव श्राद्धमुक्तं यथा—

नित्यं नैमित्तिकं काम्यं त्रिविधं श्राद्धमुच्यते ।

विष्णुना तु ततोऽपि संक्षिप्य नित्यं काम्यञ्चेति द्विविधमेवोक्तं, तत्र नित्यपदमावश्यकतया पार्वणैकोद्दिष्टयोरपि संग्राहककाम्यपदञ्चानावश्यकश्राद्धानामिति स्पष्टं श्राद्धविवेकादौ ।

होमश्च पिण्डदानञ्च तथा ब्राह्मणभोजनम् ।
श्राद्धशब्दाभिधेयं स्यादेकस्मिन्नौपचारिकम् ॥

इति श्रीधरोक्तेरेकस्य पिण्डदानादेरपि श्राद्धत्वं लाक्षणिकम् । यत्त

बह्वीभिर्युक्तिभिः श्राद्धे भोजनं पिण्डोऽङ्गं, पिण्डदानमात्रविधिस्त्वङ्गभूतात्पिण्डदानात्कर्मान्तरमेव प्रकरणान्तरन्यायादिति शूलपाणिलेखनं तदनादेयमेव, "न तौ पशौ करोति, न सोमेऽध्वरे" इत्यादिवदुपजीव्यविरोधेन विकल्पापत्तेर्दुर्वारत्वात्। अस्याः श्रुतेर्ह्यर्थः—"तौ = चक्षुषीसंज्ञकावाज्यभागौ, पशौ=पशुयागे, न करोति=न कुर्यात्। दृष्टान्तमाह—'न सोम' इति। न=यथा 'नेत्युपमार्थीय' इति निरुक्तोक्तेः, सोमेऽध्वरे = सोमयाग" इति। किञ्च-

जातश्राद्धे न दद्यात्तु पक्वान्नं ब्राह्मणेष्वपि।
न पक्वं भोजयेद्विप्रान् सच्छूद्रोऽपि कदाचन॥

इत्यादिभिर्जातश्राद्धे शूद्रश्राद्धे च भोजनस्य निषेधेनाङ्गत्वाऽऽपातात्। तस्माच्छ्राद्धशब्दार्थत्वेनोभयोः प्राप्तौ प्रतिषेधः पर्युदासो वा। 'दीक्षितो न ददाति, न जुहोति, नासोमयाजी सन्नये'दितिवदित्यन्यत्र। अत एवोक्तं धर्मप्रदीपेऽपि—

यजुषां पिण्डदानन्तु बह्वृचानां द्विजार्चनम्।
श्राद्धशब्दाभिधेयं स्यादुभयं सामवेदिनाम्॥

इति पिण्डदान-ब्राह्मणभोजनयोरुभयोः श्राद्धशब्दाभिधेयत्वं मुखत एव। एतच्च श्राद्धं यागदानोभयस्वरूपम्, 'पितरो देवता' इति प्रामाण्यात्पित्रुद्देश्यकत्वेन हि श्राद्धस्य यागत्वं ब्राह्मणोद्देश्यकत्वेन च दानत्वमित्यास्तां तावत्।

प्रकृतमनुसरामः—इत्थञ्चेह प्राधान्यादेकोद्दिष्टं सपिण्डीकरणं पार्वणश्राद्धमन्वष्टकादिश्राद्धं वृद्धिश्राद्धञ्च सकालवेलादिकं व्याख्येयं, तत्र पार्वणश्राद्धस्य सर्वश्राद्धप्रकृतित्वेऽपि सूचीकटाहन्यायात्प्रथममेकोद्दिष्टं निरूपणीयं पार्वणापवादत्वाच्च तस्य। तत्र तावत्प्रक्रमभङ्गभियाऽऽद्यश्राद्धादिपूर्वकर्त्तव्यत्वाच्च[1] प्रेतनिर्हरण-दाहाद्यशौचान्त्यदिनपर्यन्तकृत्यान्युच्यन्ते। तथा हि—मृतं शूद्रं दक्षिणपुरद्वारेण, वैश्यं पश्चिमपुरद्वारेण, क्षत्रियमुत्तरपुरद्वारेण, ब्राह्मणञ्च पूर्वपुरद्वारेण निर्हरेत्।

मनुः—दक्षिणेन मृतं शूद्रं पुरद्वारेण निर्हरेत्।
पश्चिमोत्तरपूर्वैस्तु यथायोग्यं द्विजन्मनः[2]॥

---

१. एतच्च श्राद्धाधिकारिनिर्णये प्रपञ्चयिष्यते। २. द्विजन्मनः=

यथायोगं = शूद्राद्यपकृष्टक्रममनतिक्रम्य । निर्हरणजन्यमशौचमशौचनिर्णयप्रकरण एव वक्तुमुचितमपि प्रसङ्गादत्रैवोच्यते, तच्च सजातीयासपिण्डविषये मातृबान्धवविषये च त्रिरात्रम्[1] । तथा च मनुः—

असपिण्डं द्विजं प्रेतं विप्रो निर्हृत्य बन्धुवत् ।
विशुध्यति त्रिरात्रेण मातुराप्तांश्च बान्धवान् ॥

बन्धुवत् = स्नेहानुबन्धेन । मातुराप्ता बान्धवास्तत्सहोदरभगिन्यादयः । धर्मधिया पुनः सजातिमात्रस्य निर्हरणे सद्यःशौचमेव । पराशरः-"अनाथं ब्राह्मणं प्रेतं ये वहन्ति द्विजातयः ।

पदे पदे यज्ञफलमानुपूर्व्यं लभन्ति[2] ते ॥
न तेषामशुभं किञ्चित्पापं वा शुभकर्मणाम् ।
जलावगाहनात्तेषां सद्यः शौचं विधीयते ॥

याज्ञवल्क्यः-प्रवेशनादिकं कर्म प्रेतसंस्पर्शिनामपि ।
इच्छतां तत्क्षणाच्छुद्धिः परेषां स्नानसंयमात् ॥

प्रवेशनादिकमित्यत्रादिः[3] प्रातिलोम्यक्रमाभिप्रायक इति प्रवेशनान्तमित्यर्थः । प्रवेशनञ्च वेश्मनो ग्रामस्य च । संयमः = प्राणायामस्तस्य स्नानेन समाहार इति स्नानप्राणायामाभ्यामिति फलति । संस्पर्शिनामपीत्यपिर्भिन्नक्रमस्तेन परेषामपि प्रेतालङ्कारादिकं निर्हरतां 'तत्क्षणाच्च शुद्धिमिच्छतां स्नानप्रणायामाभ्यामेव शुद्धिरिति वचनार्थः । बन्धुमबन्धुं वा केवलमनुगतम्प्रत्याहतुर्मनुपराशरौ—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा ।
स्नात्वा सचैलः स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति ॥

याज्ञवल्क्येन तु विशेषो दर्शितः—

ब्राह्मणेनानुगन्तव्यो न शूद्रो न द्विजः क्वचित् ।
अनुगम्याम्भसि स्नात्वा स्पृष्ट्वाग्निं घृतभुक् शुचिः ॥

---

ब्राह्मणक्षत्रियवैश्यान् । तथा च याज्ञवल्क्यः—"मातुः सकाशाज्जायन्ते द्वितीयं मौञ्जिबन्धनात् । ब्राह्मणक्षत्रियविशस्तस्मादेते द्विजाः स्मृताः ॥" इति । एतेन द्वाभ्यां = जन्मसंस्काराभ्यां जायत इति व्युत्पत्तिः फलिता ।

१. सम्बन्ध्यसम्बन्धिसामान्येन निर्हरणादावपि त्रिरात्राशौचपालनन्तु व्यवहारादेव ।

२. आर्षमत्र परस्मैपदम् । ३. आदिशब्दः ।

मनुः—यद्यन्नमत्ति तेषां तु दशाहेनैव शुध्यति ।
अनदन्नन्नमह्नैव न चेत्तस्मिन् गृहे वसेत् ॥

अस्यार्थः—यदि निर्हारको मृतस्य सपिण्डानामशौचिनामन्नं भक्षयेत्तदा सोऽपि तदीयसम्पूर्णाशौचभागी स्यात्तद्गृहे निवसन्नपि तदीयमन्नमनश्नँस्त्रिरात्रेण शुध्यति । यस्तु न तदीयमन्नमश्नीयान्नापि च तद्गृहे वसेत्तस्यैकाहमिति । भृतिग्रहण-स्नेहाद्यनुबन्धपरमिदम्, धर्मार्थे सद्यः शौचस्योक्तत्वात् । एतत्सजातीयविषयम्, विजातीयविषये तु यज्जातीयो निर्ह्रियमाणः प्रेतस्तज्जातीयं सम्पूर्णाशौचमेव, "अवरश्चेद्वर्णः पूर्वं वर्णमुपस्पृशेत्पूर्वो वाऽवरं तत्र तच्छवोक्तमाशौचम्" इति गौतमस्मृतेः । अत्रोपस्पृशो निर्हरणमेव न त्वाचमनमसम्भवादयोग्यत्वाच्च ।

मनुः—न विप्रं स्वेषु तिष्ठत्सु मृतं शूद्रेण नाययेत्[1] ।
अस्वर्ग्या ह्याहुतिः सा स्याच्छूद्रसंस्पर्शदूषिता[2] ॥

स्वेषु तिष्ठत्स्वित्यविवक्षितमाहुतेरस्वर्ग्यत्वश्रुतेर्येन शूद्रकर्त्तृकतृणकाष्ठादिवहनेऽपि दोषोक्तेश्च । तथाहि—

यस्यानयति शूद्रोऽग्निं तृणं काष्ठं हवींषि च ।
प्रेतत्वं हि (स्थिरं) सदा तस्य स चाधर्मेण लिप्यते ॥

लोभादिना पुनर्दाहकरणे तु स्वस्वजात्युक्तमेवाशौचं वेदितव्यम्—

यदि निर्दहति क्षिप्रं प्रलोभाक्रान्तमानसः ।
दशाहेन द्विजः शुध्येद्द्वादशाहेन भूमिपः ॥
अर्द्धमासेन वैश्यस्तु शूद्रो मासेन शुध्यति ॥

इत्युशनोवचनात् । ब्राह्मणकर्त्तृकक्षत्रिय-वैश्य-शूद्रानुगमने—

क्षत्रियं मृतमज्ञानाद्ब्राह्मणो योऽनुगच्छति ।
एकाहमशुचिर्भूत्वा पञ्चगव्येन शुध्यति ॥
शवञ्च वैश्यमज्ञानाद्ब्राह्मणो ह्यनुगच्छति ।
कृत्वाऽशौचं द्विरात्रं तु प्राणायामान् षडाचरेत् ॥
प्रेतीभूतं तु यः शूद्रं ब्राह्मणो ज्ञानदुर्बलः ।
अनुगच्छेन्नीयमानं स त्रिरात्रेण शुध्यति ॥

---

१. 'हारयेत्' इति पाठान्तरम् । २. 'सम्पर्क' इति पाठान्तरम् ।

त्रिरात्रे तु ततश्चीर्णे नदीङ्गत्वा समुद्रगाम्।
प्राणायामशतं कृत्वा घृतम्प्राश्य विशुध्यति ॥

इति पराशरोक्तं द्रष्टव्यम्। मतान्तरे तु वैश्यमनुगच्छतो ब्राह्मणस्य पक्षिणी[1]; क्षत्रियमनुगच्छतश्चाहोरात्रम्; शूद्रमनुगच्छतः क्षत्रियस्य पक्षिणी वैश्यमनुगच्छतश्चाहोरात्रम्; शूद्रमनुगच्छतो वैश्यस्य त्वेकाहमित्येवं क्रमः— "मानुषास्थि स्निग्धं स्पृष्ट्वा त्रिरात्रमाशौचमस्निग्धतत्स्पर्शे त्वहोरात्रं शवानुगमने चैकम्" इत्यादिवसिष्ठादिवचनबलात्। ब्राह्मणकर्त्तृकशूद्रदाह आह ब्रह्मवैवर्त्तम्—

"शूद्राणां शवदाही च पूयकुण्डं व्रजेद्ध्रुवम्"।

मृतस्य बान्धवैः सह विलपन्तम्प्रत्याह-पराशरः—

मृतस्य बान्धवैः सार्द्धं कृत्वा तु परिदेवनम्।
वर्जयेत्तदहोरात्रं दानं श्राद्धादि कर्म च ॥

परिदेवनं=विलापः। यत्तु—

कृच्छ्रपादोऽसपिण्डस्य प्रेतालङ्करणे कृते।
अज्ञानादुपवासः स्यादशक्तौ स्नानमिष्यते ॥

इति शङ्खवचनं तल्लोभ-स्नेहादिपरं, प्रायश्चित्तगौरवात्। प्रचेताः—

स्नानं प्रेतस्य पुत्राद्यैर्वस्त्राद्यैः पूजनं तथा।
नग्नदेहं दहेन्नैव किञ्चिद्देयं परित्यजेत् ॥

देयमिति शववस्त्रैकदेशं श्मशानवास्यर्थमित्यर्थः। प्रेतं स्नापयित्वाऽनुलिप्य च दहनीयमित्यत आह मिताक्षराधृतस्मृतिः—

प्रेतं दहेच्छुभैर्गन्धैः स्नापितं स्रग्विभूषितम् ॥

दाहक्रमश्चेत्थम्—

स्नापितो गन्धमाल्यादिभिरलङ्कृतो नववस्त्राऽऽवृतश्चितायामुत्तरशिरा अधोमुखः संस्थाप्य पुरुषो दग्धव्यः, स्त्री चेत्तथैवोत्तानशिराः—

स्वगोत्रजैर्गृहीत्वा तु चितामारोप्यते शवः।
अधोमुखो दक्षिणादिक्चरणस्तु पुमानपि ॥
उत्तानदेहा नारी तु सपिण्डैरपि बन्धुभिः ॥

---

१. दिनद्वयसहिता रात्री रात्रिद्वयसहितं वा दिनम्।

इति ब्रह्माण्डपुराणात् । स्नान-दाहयोर्मन्त्रास्तु श्राद्धरत्नादितोऽवगन्तव्याः । किञ्चात्र विशिष्टमप्याह स एव—

दरिद्रोऽपि न दग्धव्यो नग्नः कस्याञ्चिदापदि ।
केनापि वस्त्रखण्डेन च्छादनीयः प्रयत्नतः ॥
यत्र तत्र भवेद्दुःखी यदि नग्नस्तु दह्यते ।
निःशेषस्तु न दग्धव्यः शेषं किञ्चित्त्यजेत्ततः ।
गच्छेत्प्रदक्षिणं सप्त समिद्भिः सप्तभिः सह ।
देयाः प्रहाराः सप्तैव कुठारेणोल्मुकोपरि ॥
क्रव्यादाय नमस्तुभ्यमिति जल्पेत्समाहितः ।
नावेक्षितव्यः क्रव्यादो गन्तव्या च ततो नदी ॥

प्रचेताः—तथा दग्धशवं त्वेवं प्रादेशाः काष्ठिकास्तथा ।
सप्त प्रदक्षिणाः कृत्वा एकैकान्तु विनिक्षिपेत् ॥

मृतरजस्वलादाह आह पराशरः—

पञ्चभिः स्नापयित्वा तु गव्यैः प्रेतां रजस्वलाम् ।
वस्त्रान्तराऽऽवृतां कृत्वा दाहयेद्विधिपूर्वकम् ॥

मृतसूतिका-दाह-विषये पुनः स एवाह—

सूतिकायां मृतायान्तु कथं कुर्वन्ति याज्ञिकाः ।
कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥
पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत सः ।
तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥

पुण्यर्ग्भिः="यः पावनीरध्येत्यृषिभिः"इत्यादिभिः पावनैर्ऋङ्मन्त्रैः ।

आहिताग्न्यनाहिताग्निभेदेन दाहभेदमाह वृद्धयाज्ञवल्क्यः—

आहिताग्निर्यथान्यायं दग्धव्यस्त्रिभिरग्निभिः ।
अनाहिताग्निरेकेन[1] लौकिकेनापरो जनः ॥

ऊनद्विवार्षिकप्रेत-शरीरं न दाह्यं, किन्तु गन्ध-माल्यानुलेपनवस्त्रादिभिरलङ्कृत्य श्मशानादितरत्र शुचौ भूमौ ग्रामाद्बहिर्निखननीयं तथा च मनुः-

ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।
अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥

---

१. लौकिकाग्निश्च—"चाण्डालाग्निरमेध्याग्निः सूतकाग्निश्च कर्हिचित् ।

नास्य कार्योऽग्निसंस्कारो नापि कार्योदकक्रिया ।
अरण्ये काष्ठवत्त्यक्त्वा क्षपेयुस्त्र्यहमेव तु ॥

निदध्युः = निखनेयुः[1] । अस्थिसञ्चयनादृते = अस्थिसञ्चयनमकृत्वा । केचित्तु-'यत्रान्यस्यास्थिसञ्चयनं न कृतं तस्यां भूमा'विति व्याचक्षते । काष्ठवदिति दृष्टान्तेनारण्याद्यधिकरणककाष्ठत्यागोत्तरं जना यथा तत्रो[2]दासते तथोनद्विवार्षिकप्रेतनिखननोत्तरमेतदीयौर्ध्वदैहिककर्मस्वपि तद्बान्धवा इति दर्शितम् । स्मृत्यन्तरमपि—

ऊनद्विवार्षिकं बालं भूमावेव निधापयेत् ।
नाद्विवर्षस्य कर्त्तव्या बान्धवैरुदकक्रिया ॥

याज्ञवल्क्यः—ऊनद्विवर्षं निखनेन्न कुर्यादुदकं ततः ।

यमः—ऊनद्विवार्षिकं प्रेतं घृताक्तं निखनेद्भुवि ।
यमगाथा गायमानो यमसूक्तमनुस्मरन् ॥

घृताक्तमिति मैथिलेतराऽऽचारपरम् । अहरहर्नयमानो गामश्वं पुरुषं पशुम् । वैवस्वतो न तृप्यति (तु) सुराभिरिव दुर्मतिः ॥ इत्याद्या यमगाथाः । "परेयिवांसं प्रवतामेहारनुबहुभ्यः पन्थामनुपस्पशानम् वैवस्वतं सङ्गमनं जनानां यमं राजानं हविषा दुवस्य" इत्याद्यं यमसूक्तम् । एतच्च-यमगाथा यमसूक्तगानं खनन-दहनोभयसाधारणम् । "यम-गाथां गायन्तो यमसूक्तञ्च जपन्तः" इति पारस्करगृह्यसूत्रस्योभयसाधारण्येन प्रवृत्तेस्तथैव व्यवहाराच्च । अत एव दाहविषयकम्—

"यमसूक्तं तथा गाथा जपद्भिर्लौकिकाग्निना । स दग्धव्यः" इति याज्ञवल्क्यवचनं, प्रागुक्तनिखनन-विषयक-यम-वचनेन सहैकवाक्यतां भजते, यदि खनतीतद्विवर्षमपि प्रेतं प्रमादादिना दहति तदा तद्दाह-जन्याशौच-वृद्धिक्रममाह ब्रह्मपुराणे—

अनतीतद्विवर्षस्तु प्रेतो यत्रापि दह्यते ।
अतिमोहाभिभूतैश्च देशसाधर्म्यमादरात् ॥

---

पतिताग्निर्भक्षिताग्निश्च न शिष्टग्रहणोचिताः" इति देवलप्रतिषिद्धचाण्डालाग्न्याद्यतिरिक्तो ग्राह्यः ।   1. अनुपदवक्ष्यमाणयाज्ञवल्क्य-यमवचनानुरोधान्निदध्युरित्यस्यायमर्थः ।
२. काष्ठेषु ।

अशौचं ब्राह्मणानां तु त्रिरात्रं तत्र विद्यते ।
राज्ञामेकादशाहं तु वैश्यानां द्वादशाहिकम् ॥
अपि विंशतिरात्रन्तु शूद्राणां भवति क्रमात् ॥

यत्त्वत्र "षष्ठमासादूर्ध्वं चतुर्विंशमासपूर्त्तेः प्राङ्मृतस्य दहने त्र्यहं ब्राह्मणकुले, षडहं क्षत्रियकुले, नवाहं वैश्यकुले, द्वादशाहञ्च शूद्रकुलेऽशौचम्भवति" इत्याशौचपञ्जिकायां विद्यावाचस्पतिभिर्मैथिलमधुसूदनझामहोदयैरुक्तं तत्प्रमाणशून्यत्वादनादरणीयमेव[1] ।

ब्रह्मचारिविषयेऽपवदति मनुः—

आचार्यं स्वमुपाध्यायं पितरं मातरं गुरुम् ।
निर्हृत्य तु व्रती प्रेतान्न व्रतेन वियुज्यते ॥

अत्र स्वमित्यभिधानात्स्वीयाचार्यादिनिर्हरण एव व्रतलोपाभावः, परकीयाचार्यादिनिर्हरणे तु व्रतलोप एवेत्यवगम्यते । याज्ञवल्क्यः—

आचार्यपित्रुपाध्यायान्निर्हृत्यापि व्रती व्रती ।
सकटान्नञ्च[2] नाश्नीयान्न च तैः सह संवसेत् ॥

व्रती = ब्रह्मचारी आचार्यादीन्निर्हृत्यापि व्रत्येव भवति नास्य व्रतलोपो जायते, किन्तु सकटान्नमशौचोपहतमन्नं नाश्नीयान्न च तैरशौचिभिः सह संवसेत् = सहवासं कुर्यादित्यर्थः । आचार्यादिव्यतिरिक्तप्रेतनिर्हरणे तु व्रतलोपो भवेदेव, प्रमाणाभावाद्वक्ष्यमाणप्रतिषेधाच्च ।

दाहसम्पादनोत्तरं[3] तु पञ्चकाष्ठिका आदाय सर्वे दाहका वाहका अनु-

---

१. "प्रमाणशून्यत्वादनादरणीयमेवे"ति ग्रन्थकर्तृमिश्रोक्तपदमपि दुःखाकरम् । सर्वतन्त्रस्वतन्त्रविद्वच्चूडामणिपूज्यपादैर्मैथिलकुलकमलदिवाकरझोपाह्वविद्यावाचस्पतिमहोदयैस्तु—"दन्तजातेऽनुजाते च कृतचूडे च संस्थिते । अग्निसंस्करणे तेषां त्रिरात्रमशुचिर्भवेत् ॥" इति पराशरस्मृतिमनुसृत्य—"यत्र त्रिरात्रं विप्राणामशौचं सम्प्रदृश्यते । तत्र शूद्रे द्वादशाहः षण्नव क्षत्त्रवैश्ययोः ॥" इति यदुक्तं ऋष्यश्रृङ्गादयैस्तदेवानूदितं स्वकृताऽशौचपञ्जिकायामिति ( सम्पादकः ) । "यस्मिन् देशे य आचारः" इति न विस्मर्तव्यम् ।

२. कटं=प्रेतवाहनसाधनं खट्वादि तदुपलक्षितत्वादशौचं तत्सम्बन्धमन्नं सकटान्नम् । 'सङ्कटान्न'-मिति पाठः, लेखपारम्पर्यात्त्वनुस्वारलोप इति केचित् ।

३. दाहविधिस्तु महामहोपाध्यायलक्ष्मीपतिकृतश्राद्धरत्नादितोऽवगन्तव्यः ।

गन्तारश्च "ओं क्रव्यादाय नमः" इत्यभिधाय चितायां निःक्षिप्य परस्परमसम्बद्धाश्रितामनवलोकमानाः प्रागुक्तां यमगाथां गायन्तो नदीं जलाशयं वा प्रविश्यैकवाससो दक्षिणाभिमुखाः सकृन्निमज्य कृतापसव्याः प्रेताय तिलतोयाञ्जलिं सनामगोत्रोच्चारणं दद्युः, प्रागुक्तब्रह्मपुराणात्।

"शरीरमग्नौ संयोज्यानवेक्षमाणा अपोऽभ्युपयन्ति"

इति शातातपवचनाच्च अभ्युपयन्तीत्युदकदानस्याप्युपलक्षकं तत्प्रयोजनकत्वाज्जलावगाहनस्य। एतच्च जलाञ्जलिदानं यद्यपि—

सप्तमाद्दशमाद्वापि ज्ञातयोऽभ्युपयन्त्यपः।
अपनः शोशुचदघमनेन पितृदिङ्मुखाः॥

इत्यनेन याज्ञवल्क्यः सप्तम-दशम-पुरुष-पर्यन्तमेवाह, तथापि—

"श्वशुरमातामहाचार्यशिष्यसहाध्यायिमित्रदुहितृभागिनेयराजर्त्विजां तद्विधलैषिभिः काम्यमुदकदानञ्च कर्त्तव्यम्"

इति पैठीनसिवचनाद्यावत्सम्बन्धं यावत्स्नेहानुबन्धञ्च कर्त्तव्यं, तथैव शिष्टाचारात्। क्षत्रियादेरुदकदाने दिग्विभागमाह, प्रचेताः—

"प्रेतस्य बान्धवा यथावृद्धमुदकमवतीर्य नोद्धर्षयेयुरुदकान्ते प्रसिञ्चेयुरपसव्ययज्ञोपवीतवाससा दक्षिणामुखा ब्राह्मणस्योदङ्मुखाः प्रत्यङ्मुखाश्च राजन्यवैश्ययोः" इति। व्यवहारस्तु सर्ववर्णानां दाक्षिणामुख्येनैवोदकदानस्य। प्रकृतप्रचेतोवचने शूद्रस्य दिग्विभागाप्रदर्शनेन न्यूनत्वं तु न, राजन्यवैश्यपदयोरुपलक्षणत्वात्। एतच्च तिलतोयाञ्जलिदानमेकैकमित्याह, याज्ञवल्क्यः—

"सकृत्प्रसिञ्चन्त्युदकं नामगोत्रेण वाग्यताः"

प्रचेतास्तु—"त्रिः प्रसेकं कुर्युः प्रेतस्तृप्यतु" इति।

एवञ्च सकृद्वा त्रिस्त्रिर्वोदकप्रसेक इत्येवं विकल्पे एकाञ्जलिदानं नित्यमञ्जलित्रयदानञ्च काम्यमिति वाचस्पतिमिश्रोल्लेखाद्व्यवस्थातव्यम्।

वस्तुतस्तु-दिनेदिनेऽञ्जलीन्पूर्णान्प्रदद्यात्प्रेतकारणात्।
तावद्वृद्धिः प्रकर्त्तव्या यावत्पिण्डः समाप्यते॥

इति प्रचेतोवचनाद्यावदशौचं प्रतिदिनमेकैकवृद्ध्याऽञ्जलिर्देयस्तथैवमथितााचारोऽपि। यत्तु—

नदीकूलं ततो गत्वा शौचं कृत्वा यथार्थवित्।

वस्त्रं संशोधयेदादौ ततः स्नानं समाचरेत् ॥
सचैलस्तु ततः स्नात्वा शुचिः प्रयतमानसः ।
पाषाणं तत आदाय विप्रे दद्याद्दशाञ्जलीन् ॥
द्वादश क्षत्रिये दद्याद्वैश्ये पञ्चदश स्मृताः ।
त्रिंशच्छूद्राय दातव्यास्ततः सम्प्रविशेद्गृहम् ॥
ततः स्नानं पुनः कार्यं गृहशौचञ्च कारयेत् ॥

इति प्रचेतसैवोक्तं दशाद्यञ्जलिदानं तद्देशान्तराऽऽचारपरिप्राप्तत-या मैथिलैरनादेयमेव, यद्वा प्रतिदिनमञ्जलिवृद्ध्याऽशौचान्त्यदिने दशाञ्ज-लिदानं ब्राह्मणानां, द्वादशाञ्जलिदानं क्षत्रियाणां, पञ्चदशाञ्जलिदानं वैश्या-नां त्रिंशदञ्जलिदानं शूद्राणामित्यर्थपरमत एव 'दिने दिने' इति प्रागुक्त-वचनेनापि सहाविरोधः । गृहप्रवेशकाले पुनः स्नानादि यदुक्तं तत्तु मैथि-लाचारपरिगृहीतमेव । इयमुदकदानक्रिया सति सम्भवे पिप्पलपत्रपुटकैरेव कार्या—आनयेङ्गुदिपिण्याकं पत्रं बोधिद्रुमस्य च ।

मन्दाकिनीं पुरस्कृत्य करिष्य उदकक्रियाम् ॥

इति रामायणे रामवाक्यात् । इङ्गुदिस्तापसवृक्षः, पिण्याकस्तत्किट्टम् । बोधिद्रुमः पिप्पलः । एतच्चोदकदानं ब्रह्मचारी पित्रादिव्यतिरिक्तसपिण्डा-देर्न कुर्यात्, तथा च याज्ञवल्क्यः—"न ब्रह्मचारिणः कुर्युरुदकं पतितास्तथा"

व्रतसमाप्तौ तूदकदानमशौचञ्च कुर्यादेव, तदाह मनुः—

आदिष्टी नोदकं कुर्यादाव्रतस्य समापनात् ।
समाप्ते तूदकं कृत्वा त्रिरात्रेण विशुध्यति ॥

आदिष्टी = उपनयनकाले 'कस्य ब्रह्मचार्यसि' इत्यादिकमाचार्येण यस्प्र-त्यादिष्टं स इति ब्रह्मचारी । अत्रोदकपदं पूरकपिण्डदानादि-षोडशश्राद्ध-पर्यन्तसकलप्रेतकर्मोपलक्षकम् ।

वृद्धमनुः—क्लीबाद्या नोदकं कुर्युः स्तेना व्रात्या विधर्मिणः ।
गर्भ-भर्तृद्रुहश्चैव सुराप्यश्चैव योषितः ॥

क्लीबाद्या इत्याद्यपदात्पतितकुष्ठ्यादि-परिग्रहः । व्रात्याः = उपन-यनादिसंस्कारशून्याः । उदकपदं निर्हरण-दाहयोरप्युपलक्षकमिति ताव-पीमे न कुर्युरिति पर्यवसन्नम् ।

सम्प्रदान[1]-प्रतिषेधे त्वाह याज्ञवल्क्यः—

> पाखण्ड्यनाश्रिताः स्तेना भर्तृघ्न्यः कामगादिकाः ।
> सुराप्य आत्मत्यागिन्यो नाशौचोदकभाजनाः ॥

वेदबाह्यनरमुण्डकपालादिरूपलिङ्गधारणं यद्वा पानं-पाः = आत्मरक्षणं तस्य खण्डो विनाश उदरनिमित्त-जनमनोमोहक-विकृत-बहु-वेषधारणमिति यावत् पाखण्डः सोऽस्ति येषां ते पाखण्डिनः[2] । अनाश्रिताः = स्वाधिकार-विरुद्धाश्रम-वेषधारिणः । स्तेनाः = अहार्यसुवर्ण-रत्नादिहारिणः । भर्तृघ्न्यः = पतिघातिन्यः । कामगाः = कुलटाः । आदिपदात्स्वगर्भघातिन्यो ब्रह्मघातिन्यश्च वचनान्तरोक्ता गृह्यन्ते । सुराप्यः = प्रतिषिद्धसुरापान-रताः । आत्मत्यागिन्यः = कामतो विषपानाग्निदाहोद्बन्धनोदकमज्जनादिनाऽऽत्मत्यागकारिण्यः । एते स्वस्वजात्युक्ताशौचस्य दाहोदकदानादेश्च भाजना न भवन्तीति शेषः । भाजना इति भाजयन्तीत्यर्थे ण्यन्ताल्ल्युट्तेनैते स्वमरणेन सपिण्डादीन् दाहोदकदानाशौचभागिनो न कारयन्तीत्यर्थादेतत्सम्प्रदानकमुदकदानाद्येतन्निमित्तकमशौचादिकञ्चैतत्सपिण्डानां न भवतीति निर्गलितम्[3] । आत्मत्यागिन्य इत्यत्र लिङ्गाविवक्षया पुंसामपि तादृशां ग्रहणम् । तथा च मनुः—

> वृथासङ्करजातानां प्रव्रज्यासु च तिष्ठताम् ।
> आत्मनस्त्यागिनाञ्चैव निवर्त्तेतोदकक्रिया ॥
> पाख(ष)ण्डमाश्रितानाञ्च चरन्तीनाञ्च कामतः ।
> गर्भभर्तृद्रुहाञ्चैव सुरापीनाञ्च योषिताम् ॥

वृथा-सङ्करपदयोर्द्वन्द्वेन तदुत्तरस्थ'जात'-पदेन प्रत्येकं सम्बन्धाद्वृथा-

---

१. यमुद्दिश्य दीयते स सम्प्रदानः । २. यद्वा पाति=रक्षतीति पास्त्रयीधर्मस्तस्य खण्डोऽवहेलना-पाखण्डः, सोऽस्ति येषामिति शब्दकल्पद्रुमोक्ता निरुक्तिः । तथा चोक्तम्-"पालनाच्च त्रयी·धर्मः पाशब्देन निगद्यते । तं खण्डयन्ति ते यस्मात्पाखण्डास्तेन हेतुना ॥ नानाव्रतधरा नानावेषाः(शाः)पाखण्डिनो मताः"इति । पाषण्डशब्दो मूर्द्धन्यमध्योऽपीत्यमरटीकायां भरतः । ३. 'भाजना' इति मधुसूदनभा-सम्मतं

जातानां = मुधापरित्यक्तस्वधर्माणां, सङ्करजातानां=हीनवर्णेनोत्तमवर्णस्त्री-षूत्पादितानामित्यर्थः फलितः। त्यागिनामित्यत्र 'पुमान् स्त्रिये'त्येकशेषात्स्त्री-पुंसयोर्ग्रहणम्। आत्मत्यागश्च कामकृत एवाकामकृतेऽनुपदवक्ष्यमाणब्रह्म-पुराणाङ्गिरोवचनाभ्यामाशौचोदकदानादिविधेर्विहितत्वात्। अङ्गिराः—

व्यापादयेदथात्मानं स्वयं योऽग्न्युदकादिना।
विहितं तस्य नाशौचं नाग्निर्नाप्युदकक्रिया॥

स्वयमिति ज्ञानपुरःसरमित्यर्थः। आदिना विषपानोद्बन्धनादिग्रहणम्।

गोभिलः—गोभिर्विप्रैर्हते चैव तथा चैवात्मघातके।
नैवाश्रुपातनं कार्यं सद्भिः श्रेयोऽभिकाङ्क्षिभिः॥

गोभिर्हतमिति क्रीडादौ गवादिना हतमिति शूलपाणिः। अश्रुपातनं दाहादेरप्युपलक्षकम्। पद्मपुराणे[1]—

ब्रह्मदण्डहता ये च ये चापि ब्राह्मणैर्हताः।
महापातकिनो ये च पतितास्ते प्रकीर्त्तिताः॥
पतितानां न दाहः स्यान्नान्त्येष्टिर्नास्थिसञ्चयः।
नाश्रुपातश्च पिण्डो वा कार्यं श्राद्धादिकं क्वचित्॥
एतानि पतितानान्तु यः करोति विमोहितः।
कण्ठो(टो)दकक्रियां कृत्वा तप्तकृच्छ्रेण शुध्यति॥

ब्रह्मदण्डहताः = ब्राह्मणविषयकापराधक्रियया निहताः। कण्ठोदक-क्रिया = वपनोदकदानादीति केचित्। वस्तुतस्तु 'कटोदकक्रिया'-मित्येव पाठः, तस्याशौचग्रहणोदकदानादीत्यर्थः। अत एव—

नाशौचं नोदकं नाश्रु न दाहाद्यन्त्यकर्म च।
ब्रह्मदण्ड-हतानाञ्च न कुर्यात्कटधारणम्॥

इति यमस्मृतौ कटधारणमेव प्रतिषेध्यतयोक्तम्। 'कट'शब्देन यद्यपि प्रेतवहनसाधनभूतं खट्वादि गृह्यते तथापीह तदुपलक्षितत्वादशौचपरि-ग्रहः। अश्रपातश्च सपिण्डीकरणोत्तरं प्राप्तः प्रतिषिध्यते, ततः पूर्वं तु—

---

पाठान्तरन्तु न रोचते। 1. अश्नुते नेत्रमिति, न श्रयति पुनः पूर्वं स्थानमिति वा अश्रु; अथवा अस्यते = स्वस्थानतः क्षिप्यते, यद्वा न स्रवति = न गच्छति पुनः पूर्वं स्थानमित्यस्रु। तथा च तालव्यमध्यो दन्त्यश्चायमिति शब्दकल्पद्रुमादौ।

याज्ञवल्क्य—श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यं हि क्रियाः कार्याः स्वशक्तितः॥
कात्यायनः—श्लेष्माश्रु बान्धवैर्मुक्तं प्रेतो भुङ्क्ते यतोऽवशः।
अतो न रोदितव्यन्तु क्रिया कार्या प्रयत्नतः॥
रामायणम्—शोचमानास्तु सस्नेहा बान्धवाः सुहृदस्तथा।
पातयन्ति गतं स्वर्गमश्रुपातेन राघव॥

इत्यादिवचनैः साधारण्येन तत्प्रतिषेधस्य सिद्धत्वात्। अत एव मिथिलायां सर्ववर्णेषु सर्वत्र सपिण्डीकरणान्तक्रिया–सम्पादनोत्तरं गृहाङ्गणे प्रविशति श्राद्धकर्त्तरि स्त्रीणां रोदनव्यवहारोऽस्ति। अद्यत्वे शोकाऽऽवेगस्य रोद्धुमशक्ततया ततः प्रागपि बान्धवा रुदन्तीत्यन्यत्। गौतमः—

"गोब्राह्मणहतानामन्वक्षं राजक्रोधाच्चायुद्धे प्रायोऽनाशकशस्त्राग्निविषोदकोद्बन्धनप्रपतनैश्चेच्छताम्" इति।

इह गोग्रहणं शृङ्गिदंष्ट्र्यादितिर्यगुपलक्षणार्थम्। क्रोधग्रहणं प्रमादहतस्य निरासार्थम्। अयुद्धग्रहणञ्च युद्धहतस्य। तस्य हि—

ब्राह्मणार्थं विपन्नानां योषितां गोग्रहेऽपि च।
आहवेऽपि विपन्नानामेकरात्रमशौचकम्॥

इत्यपवादभूतमेकरात्रमाशौचम्। इदमपि युद्धभूमिक्षतेन देशान्तरे कालान्तरे च मृतस्य; युद्धभूमौ मृतस्य तु—

उद्यतैराहवे शस्त्रैः क्षत्रधर्महतस्य च।
सद्यः सन्तिष्ठते यज्ञस्तथाशौचमिति स्थितिः॥

इति मनुना सद्यःशौचविधानात्। प्रायो महाप्रस्थानम्। अनाशकमनशनम्। प्रपतनं=गिरिशिखरादितोऽधःपतनम्। अन्वक्षं=समक्षं सद्यःशौचमित्यर्थः। याज्ञवल्क्यः—

"हतानां नृपगोविप्रै[1]रन्वक्षं चात्मघातिनाम्"

इहापि गोग्रहणं प्राग्वत्। आत्मघातिनामित्यत्र विषोद्बन्धनादिभिरिति शेषः। आत्मघाति-ग्रहणं 'पाखण्डचनाश्रिता' इत्यत्रोपात्तपतितमात्रसङ्ग्रहार्थम्। स्मृत्यन्तरम्—

---

1. चाण्डालस्याप्युपलक्षकमिदमनुपदवक्ष्यमाणस्मृत्यन्तरानुरोधात्।

चाण्डालादुदकात्सर्पाद्ब्राह्मणाद्वैद्युतादपि ।
दंष्ट्रिभ्यश्च पशुभ्यश्च मरणं पापकर्मिणाम् ॥
उदकं पिण्डदानञ्च प्रेतेभ्यो यत्प्रदीयते ।
नोपतिष्ठति[1] तत्सर्वमन्तरी(रि)क्षे विनश्यति ॥

बृहत्पराशरः—अतिमानादतिक्रोधात्स्नेहाद्वा यदि वा भयात् ।
उद्बध्य म्रियते यस्तु न तस्याग्निः प्रदीयते ॥
न स्नायान्नोदकं दद्यान्नापि कुर्यादशौचताम् ।
सर्पेण शृङ्गिणा वापि जलेन वह्निना तथा ॥

एतच्च सर्वमिच्छापूर्वकहननविषयमेव, गौतमवचने 'इच्छताम्' इत्युक्तेः। उदकमरण इच्छापूर्वकत्वसिद्धौ 'चाण्डालादुदकात्सर्पादि'ति तत्साहचर्यदर्शनात्तदितरत्रापि बुद्धिपूर्वकत्वं कल्प्यत इति हृद्यम्। तस्माद् यो दर्पाच्चाण्डालादीन् हन्तुं गतस्तैर्मारितः, यः शोकामर्षा(र्शा)दिभिरगाधमुदकं प्रविष्टो, मृतो यश्च सर्पेण सह क्रीडन् मारितो, यो वा क्रोधादिना विद्युत्पातमङ्गीकृत्यात्युच्चदेशं विद्युत्केन्द्रं वा गतो दैवाद्धतो (विद्युद्धतो) यश्च दुष्टदंष्ट्रिपशून् जिघृक्षया वेतरथा वाऽभिगतस्तैर्मारितस्तदर्थमेष प्रतिषेधः 'सर्वत आत्मानं गोपाये'दिति श्रुतिविधिविरुद्धाऽऽचरणमूलकतया तादृशमरणस्य शास्त्राननुमतत्वात्। स्मृत्यन्तरे तच्छरीरस्य गङ्गाजले प्रक्षेपो यथा—

आत्मानस्त्यागिनां नास्ति पतितानां तथा क्रिया ।
तेषामपि तथा गङ्गातोये संस्थापनं हितम् ॥

स्नेहाद्यनुबन्धेन बुद्धिपूर्वकममीषां दाहोदकदानादौ कृते तप्तकृच्छ्रं प्रायश्चित्तम्।

कृत्वाग्निमुदकं स्नानं स्पर्शनं वहनं कथाम् ।
रज्जुच्छेदाश्रुपातञ्च तप्तकृच्छ्रेण शुध्यति ॥

इतिस्मृतेः। अबुद्धिपूर्वकत्वे कृच्छ्रं सान्तपनम्। तथा च संवर्त्तः—

एषामन्यतमं प्रेतं यो वहेत दहेत वा ।
कटोदकक्रियां कृत्वा कृच्छ्रं सान्तपनं चरेत् ॥

कृच्छ्रविधानाशक्तौ केवलस्पर्शाश्रुपातयोस्तु—

तच्छवं[2] केवलं स्पृष्टमश्रु वा पातितं यदि ।

---

१. छान्दसम्परस्मैपदमत्र । २. 'शवशक्रियाम्' इत्यपरः ।

पूर्वोक्तानामकारी चेदेकरात्रमभोजनम् ॥

इति स्मृत्युक्तमेकरात्रोपवास एव प्रायश्चित्तम्। इत्थं ज्ञानपुरःसरमविधिनाऽऽत्मघातादिभिर्मृतस्याशौचोदकादिविनिवृत्तावपि नारायणबलिः कार्यस्तथा च वृद्धयाज्ञवल्क्यः—

नारायणबलिः कार्यो लोकगर्हाभयान्नरैः।
तथा तेषां भवेच्छौचं नान्यथेत्यब्रवोद्यमः ॥

व्यासः—नारायणं समुद्दिश्य शिवं वा यत्प्रदीयते।
तस्य शुद्धिकरं कर्म तद्भवेन्नैतदन्यथा ॥

नारायणबलिकृतप्रेत-शुद्धौ श्राद्धमपि कार्यमाह षट्त्रिंशन्मतम्—

गो-ब्राह्मणहतानाञ्च पतितानां तथैव च।
ऊर्ध्वं सम्वत्सरात्कुर्यात्सर्वमेवौर्ध्वदेहिकम् ॥

तथा च सम्वत्सरादूर्ध्वमेव नारायणबलिं कृत्वौर्ध्वदेहिकं कार्यमिति स्थितम्। नारायणबलिप्रयोगश्च मिताक्षरादितोऽवसेयः। सर्पहते तु यावत्सम्वत्सरं प्रतिपञ्चमि नागपूजां विधाय सम्वत्सरपूर्त्तौ नारायणबलिं, सुवर्णनिर्मितनागं प्रत्यक्षां गाञ्च दत्त्वौर्ध्वदेहिकं कार्यमिति विशेषः। एतच्च सर्वं कर्म मैथिलेतराचारपरिप्राप्तम्।

प्रमादादिनाऽग्न्युदकादिद्वारकात्मघाते तु स्वस्वजात्युक्तमशौचादिकं सर्वं भवत्येव, तथा हि ब्रह्मपुराणम्—

प्रमादादपि निःशङ्कस्त्वकस्माद्विधिदेशितः।
शृङ्गि-दंष्ट्रि-नखि-व्याल-विष-विद्युज्जलादिभिः ॥
चण्डालेनाथ वा चौरैर्निहतो यत्र कुत्रचित्।
तस्य दाहादिकं कार्यं यस्मान्न पतितस्तु सः ॥

अङ्गिरा—अथ किञ्चित्प्रमादेन म्रियेताग्न्युदकादिभिः।
तस्याशौचं विधातव्यं कर्त्तव्या चोदकक्रिया ॥

प्रमादोऽनवधानत्वम्। यस्तु नितरां वृद्धो यो दुश्चिकित्सव्याधिग्रस्ततया मरणमेव वरं मन्यमानो जलाग्निप्रवेशानशनगिरि-शिखर-प्रपतनादिना म्रियते, तदीयपुत्रादि सपिण्डैस्त्रिरात्रमशौचमास्थाय मरणाद्द्वितीयेऽहन्यस्थिसञ्चयनं, तृतीये क्षौरकर्म; चतुर्थे चाद्यश्राद्धादिकं कार्यम्—

वृद्धः शौचस्मृतेर्लुप्तः प्रत्याख्यातभिषक्क्रियः।

आत्मानं घातयेद्यस्तु भृग्वग्न्यनशनाम्बुभिः ॥
तस्य त्रिरात्रमाशौचं द्वितीये त्वस्थिसञ्चयः ।
तृतीये तूदकं कृत्वा चतुर्थे श्राद्धमाचरेत् ॥

इति वचनादित्यास्तां तावत् । प्रकृतमनुसरामः—

इत्थं यस्य यस्य दाहोदकदानादि विहितं तस्य तस्य तत्तदुक्तरीत्या सम्पाद्यानुशोचतः कोमलहरितघासावृतस्थले संस्थितान्मृतसपिण्डान्संसारानित्यतादि-प्रदर्शनेनाश्वास्य बालपुरःसराः कुलवृद्धा गृहमागत्य पुनः सचैलं स्नात्वा निम्बादि( तिक्त )पत्रादि विदश्य गृहद्वारि स्थित्वाऽग्निजल-लोहाश्मस्पर्शं ( गौरसर्षपादिस्पर्शञ्च ) कृत्वा गृहमस्खलितपदाः प्रविशेयुः तथा च याज्ञवल्क्यः—

कृतोदकान् समुत्तीर्णान् मृदुशाद्वलसंस्थितान् ।
स्नातानपवदेयुस्तानितिहासैः पुरातनैः ॥
मानुष्ये कदली-स्तम्भनिःसारे सारमार्गणम् ।
करोति यः स सम्मूढो जलबुद्बुदसन्निभे ॥
पञ्चधा संभृतः कायो यदि पञ्चत्वमागतः ।
कर्मभिः स्वशरीरोत्थैस्तत्र का परिदेवना····
····इति संश्रुत्य गच्छेयुर्गृहं बालपुरःसराः ।
विदश्य निम्बपत्राणि नियता द्वारि वेश्मनः ॥
आचम्याग्न्यादिसलिलं गोमयं गौरसर्षपान् ।
प्रविशेयुः समालभ्य कृत्वाऽश्मनि पदं शनैः

'निम्बपत्राणि विदश्य वेश्मनो गृहस्य द्वारि नियता आचम्य, अग्निं लोहं जलं गोमयं गौरसर्षपाँश्च समालभ्य = स्पृष्ट्वा अश्मनि = प्रस्तरे पदं कृत्वा शनैर्गृहं प्रविशेयु'रित्यन्तिमसार्द्धश्लोकार्थः ।

इदन्त्वत्रावधेयम्—"प्रेतस्पर्शिनो न ग्रामं प्रविशेयुरानक्षत्राद्रात्रौ चेदादित्यस्य" इति पारस्करोक्तेर्दिवा शवस्पर्श-दाहादिकरणे रात्रौ, रात्रौ शवस्पर्शादिकरणे च दिवा ग्राम( गृह )प्रवेशः कर्त्तव्य इति । प्रेतस्पर्शिपदं दाहादेरप्युपलक्षकम् । आदित्यमित्यस्य आ आदित्यमितिच्छेदेन आ सूर्योदयादित्यर्थः ।

मरणदिने सायं त्रिकाष्ठिकोपरि[1] शिक्यादौ वा मृण्मयो घटो यावदशौचान्तं स्थाप्यस्तत्र जल-दुग्धे निधाय 'प्रेतात्र स्नाहि पिबेदं क्षीर'मिति बान्धवा ब्रूयुस्तदाह पारस्करः—

"मृण्मये तां[2] रात्रिं क्षीरोदके विहायसि निदध्युः प्रेतात्र स्नाहि पिबेदं क्षीरमिति"। मत्स्यपुराणे च—

तस्मिन्निधेयमाकाशे दशरात्रं पयस्तथा।
सर्वतापोपशान्त्यर्थमध्वश्रमविनाशनम्॥

अथ विदेशस्थस्य विदेशप्रस्थानदिनाद्द्वादशवर्षपर्यन्तं मरणवार्त्तानुपलब्धौ तदीय-पुत्र-बान्धवादिभिस्तन्मरणमवधार्य पर्णनर (शर)दाहपूर्वकं श्राद्धमाचरणीयम्। तथा च यमः—

गतस्य न भवेद्वार्त्ता यस्य द्वादशवार्षिकी।
प्रेतावधारणं तस्य कर्त्तव्यं सुत-बान्धवैः॥

प्रेतावधारणं = मृत इति ज्ञानम्। गतस्येत्यत्र पुंस्त्वमविवक्षितमिति स्त्रीपुंससाधारणमिदम्। जातूकर्ण्यः—

पितरि प्रोषिते यस्य वार्त्ता न गृहमागता।
ऊर्ध्वं पञ्चदशाद्वर्षात्कृत्वा तत्प्रतिरूपकम्॥
कुर्यात्तस्य च संस्कारं यथोक्त-विधिना पुनः॥

पितृपदमुपलक्षणं भ्रातृ-पितृव्यादि-बान्धवानामपि। प्रोषिते = देशान्तरस्थे। देशान्तरपरिभाषायां यद्यपि बहुधा विप्रतिपत्तिस्तथा हि—

वृद्धमनुः—वाचो यत्र बिभिद्यन्ते गिरिर्वा व्यवधायकः।
महानद्यन्तरं यच्च तद्देशान्तरमुच्यते॥
देशनामनदीभेदान्निकटोऽपि भवेद्यदि।
तत्तु देशान्तरं प्रोक्तं स्वयमेव स्वयम्भुवा॥
दशरात्रेण वा वार्त्ता यत्र न श्रूयतेऽथवा॥

अत्र दशरात्रपदं स्वस्वजात्युक्तसम्पूर्णाशौचपरम्।

बृहस्पतिः—देशान्तरं वदन्त्येके षष्टियोजनमायतम्।
चत्वारिंशद्वदन्त्यन्ये त्रिंशदन्ये तथैव च॥

---

१. 'तेकठी' इति प्रसिद्धस्योपरि। २. 'कालाध्वनोरत्यन्तसंयोगे' इति द्वितीया।

तथापि तत्र 'दशरात्रेण वै वार्त्ता यत्र न श्रूयतेऽथवा' इति पक्ष एव सर्वव्यवहारसम्मतस्तेन तारयन्त्रादिद्वाराऽप्यशौचाभ्यन्तरे यस्माद्वार्त्ताधिगमः कर्त्तुं दुःशकस्तदेव देशान्तरमिति विवेचितं मया शुद्धिधरत्ने। तत्प्रतिरूपकं=तदीयमूर्तिम्। यथोक्तविधिना=पर्णनरदाहेन। अत्र यमवचनोक्तो द्वादशसव्वँत्सरात्मको मुख्यः कालो, जातूकर्ण्यवचनोक्तः पञ्चदशसव्वँत्सरात्मकस्तु गौण इति केचित्[1]। द्वैतपरिशिष्टे केशवमिश्रास्त्वत्र देशाचारभेदाद्व्यवस्थामाहुः। पर्णनरदाहश्च—

यन्मासि यदहर्यातस्तन्मासि तदहः क्रिया।
दिनाज्ञाने कुहूस्तस्य आषाढस्याथ वा कुहूः॥

इति स्मृतेर्यस्य मासस्य यस्यां तिथौ गृहात्प्रस्थितस्तन्मासीयतत्तिथावेव, तदज्ञाने तन्मासस्यामावास्यायां, तन्मासस्याप्यज्ञाने आषाढस्यामावास्यायां कर्त्तव्यः। पर्णनरदाहदिनात्तृतीयदिने क्षौरं चतुर्थदिन आद्यश्राद्धं पञ्चमदिने च सपिण्डीकरणं ब्राह्मणभोजनञ्च। "एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्" इति ब्रह्मपुराणवाक्यात्। "त्रिरात्रं सर्ववर्णानामेष धर्मो व्यवस्थितः" इति पर्णनरदाहं प्रक्रम्य सुमन्तुवाक्याच्च। द्वादशवर्षपूर्त्तावनिश्चितमरणवार्तोपलब्धौ तु मरणवार्त्तादिनतः पक्षत्रयं प्रयत्नेन तन्मरणनिश्चयं कृत्वा पर्णनरदाहः कार्यस्तथैव मैथिलादिसकलशिष्टाचारात्।

इदमिहावधेयम्—मृतस्य दाह्यशरीरलाभे तदस्थिलाभे वा तस्यैव[2] दाहो न तु पर्णनरस्येति—

अनाहिताग्नेर्देहस्तु दाह्यो गृह्याग्निना पुनः।
तदलाभे पलाशोत्थैः पत्रैः कार्यः पुमानपि॥

इत्यादि (त्य) पुराणात्।

पुत्रैश्चेदुपलभ्येरँस्तदस्थीनि कदाचन।
तदलाभे पलाशस्य सम्भवे हि पुनः क्रिया॥

इति यज्ञपार्श्ववचनाच्च। पूर्ववचने देहपदं तदस्थ्नामप्युपलक्षणमजहत्स्वार्थवृत्त्या। पुनाति तु मूर्तिपरमितरथा क्रियामाकाङ्क्षाया अनिवृत्तेः।

---

१. अत एव "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्मतेर्जायते क्वचित्" इत्यनेन गौणपक्षस्य मनुना तिरस्कृतत्वान्मैथिला द्वादशवार्षिककल्पं प्रथमकल्पमेवात्राऽऽद्रियन्ते। २. शरीरस्याऽस्थ्नो वा।

## अथ पर्णनरदाहक्रमः ।

तत्र शरकाण्डैः शरीरपञ्जरं निर्माय पलाशपत्रैश्चत्वारिंशता शिरो, दशभिर्ग्रीवां, शतेन बाहू, दशभिः कराङ्गुली, त्रिंशतोरो, विंशत्योदरं, चतुर्भिः शिश्नं षड्भिरण्डकोषौ (शौ), शतेन कटिमारभ्य जङ्घान्तं, त्रिंशता जानुनी, दशभिः पादाङ्गुलीश्च विरचय्य कृष्णमृगस्य तदभावे इतरमृगस्य वा चर्मणा वेष्टयित्वोर्णासूत्रेण सुदृढं बद्ध्वा जलयोगेन सुपिष्टैर्यवचूर्णैः समस्तामेव मूर्तिमुपलिप्य "असौ स्वर्गाय लोकाय स्वाहा" इत्युच्चार्य दहेदिति । तथा चाश्वलायनः—

दद्याच्छिरस्य शीत्यर्द्धं ग्रीवायान्तु दशैव तु ।
बाह्वोश्चैव शतं दद्यादङ्गुलीषु तथा दश ॥
उरसि त्रिंशतं दद्याद्विंशतिं जठरे तथा ।
अष्टार्द्धं वै शिश्ने दद्याद्द्वादशार्द्धं वृषणयोः ॥
ऊर्वोश्चैव शतं दद्यात्त्रिंशतं जानुजङ्घयोः ।
पादाङ्गुलीषु दश दद्यादेतत्पत्रस्य कल्पनम् ॥
वेष्टितव्यस्तथा यत्नात्कृष्णसारस्य चर्मणा ।
ऊर्णासूत्रेण बद्ध्वा तु प्रलेप्तव्यस्तथा यवैः ॥
सुपिष्टैर्जलमिश्रैस्तु दग्धव्यश्च चिताग्निना ॥

स्मृत्यन्तरम्—असौ स्वर्गाय लोकाय स्वाहेत्युक्त्वा सबान्धवैः ॥

अशौचाभ्यन्तरे मरणवार्त्ता यत्राऽऽपतेत्तत्र तदभ्यन्तर एव, तत्रापि सति सम्भवे दशाहाशौचेऽष्टमदिने, द्वादशाहाशौचे दशमदिने, पञ्चदशाहाशौचे त्रयोदशदिने मासिकाशौचे चाष्टाविंशतितमदिने पर्णनरदाहः कार्यस्तदसम्भवे नवमादिदिवसेषु । अशौचाभ्यन्तरे तदसत्त्वे तु पक्षत्रयमतीत्यामावास्यायां, तदभावे कृष्णपक्षस्याष्टम्यामेकादश्यां वा । तथा हि—

अशौचमध्ये यत्नेन दाहयेदुक्तया हतम् ।
पर्णनरं दहेन्नैव विना दर्शं कथञ्चन ।
अस्थ्नामलाभे दर्शे तु ततः पर्णनरं दहेत् ॥
एवं वर्णं दहेन्नैव प्राक्त्रिपक्षात्कथञ्चन ।
पितृहा मातृहा यस्मान्न दर्शेन दहेद्यदि ॥

कृष्णपक्षे पञ्चदश्यामष्टम्यां वा समाहितः ।
एकादश्यां विशेषेण ततः प्रभृतिसूतकम् ॥
त्रिरात्रं सर्ववर्णानामेष धर्मो व्यवस्थितः

इति प्रदीपकलिकास्थसुमन्तुवचनात् । एवञ्चाशौचानन्तरं दाहे पुत्रादिसपिण्डानां दाहदिनात्त्रिरात्रमाशौचमस्थेयमिति च निर्गलितम् । "एवं पर्णनरं दग्ध्वा त्रिरात्रमशुचिर्भवेत्" इति प्रागुक्तब्रह्मपुराणवचनाच्चेत्यलमाम्रेडितेन । आहिताग्निश्चेत्तर्हि दशाहादिसम्पूर्णाशौचमेव भवति— "आहिताग्निश्चेत्प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववदाशौचम्" इति वसिष्ठस्मरणात् । शववदिति-स्वस्वजात्युक्तसम्पूर्णाशौचमित्यर्थः । 'शरत्रातैर्विधानतः' इत्यादि(त्य)पुराणवाक्याच्च शरकाण्डत्रातेन शरीरपञ्जरनिर्माणम् । वार्षिकन्तु मरणतिथ्यनिश्चये पर्णन(रा)र-दाहतिथावेव-कर्त्तव्यमिति शुद्धिनिर्णयादावस्मत्कृतशुद्धिरत्ने च स्पष्टम् । पर्णनरदाहोत्तरं मृतस्यास्थ्नां लाभे तेषामपि दाहः कर्त्तव्यस्तत्प्रयुक्तञ्च त्रिरात्राशौचमास्थेयं तथैव सर्वशिष्टाचारात् । प्रागुक्तयज्ञपार्श्ववचने 'तदलाभे' इत्यनेनास्थिलाभाभाव एव पर्णनरविधेरुक्तत्वाच्च । पुनर्दाहे च त्रिरात्राशौचस्य कर्त्तव्यत्वेन पिण्डदानमपि पुनरावश्यकमिति शुद्धिनिर्णये गोपालः ।

## अथ जातश्राद्धस्य पुनरागमने शुद्धिः

अथ यस्य पर्णनरदाहादिः कृतः स यदि समागच्छेत्तदा निरग्नीरुद्रस्नपनं प्राजापत्यव्रतं शान्तिस्वस्त्ययनञ्च कुर्यात्साग्निकस्त्वायुषीमिष्टिम्—

प्रेतश्राद्धं कृतं यस्य स चेदायाति मानवः ।
प्राजापत्यव्रतं कुर्याच्छान्तिं रुद्रसमुद्भवाम् ॥
एवं कृते मृतभ्रान्त्या यद्यागच्छेत्पुमान् क्वचित् ।
कुर्यात्तदाऽऽयुषीमिष्टिं पुनराधाय पावकम् ॥

इति बृहच्छ्राद्धदर्पण-श्राद्धविवेक-श्राद्धचिन्तामण्यादि-धृतवचनाभ्याम् । रुद्रसमुद्भवां = रुद्राध्यायपाठेन शिवस्नपनरूपाम् । पुनरिति-पुनरग्न्याधानं कृत्वेत्यर्थः । प्राजापत्यव्रताशक्तौ धेनुदानं तदशक्तौ च तन्मूल्यलभ्यहिरण्यदानं कार्यम्—

प्राजापत्यव्रताशक्तौ धेनुं दद्यात्पयस्विनीम् ।
धेनोरभावे दातव्यं तुल्यं मूल्यं न संशयः ॥

इति सम्वर्त्तवचनात् । धेनुमूल्यञ्च—

धेनुः पञ्चभिराढ्यानां मध्यानां त्रिपुराणिका ।
कर्षापणैकमूल्या हि दरिद्राणां प्रकीर्त्तिता ॥

इति षट्त्रिंशन्मतोक्तं बोध्यम् । पञ्चभिरित्यत्र 'कार्षापणै'-रितिशेषः । कार्षापणश्च षोडशपणात्मकः, पुराणमपि स एव ।

## अथ पिण्डदाननिर्णयः ।

तत्र पिण्डलक्षणमाह हारीतः—

मध्वाज्यतिलसंयुक्तं सर्वव्यञ्जनसंयुतम् ।
उष्णमादाय पिण्डन्तु कृत्वा बिल्वफलोपमम् ॥
दद्यात्पितामहादिभ्यो दर्भमूलाद्यथाक्रमम् ॥

अत्र पितामहपदं पितृपरमन्यथा प्रागुक्तवचनविरोध'यथाक्रम'मिति-स्योक्तिविरोधाभ्याम् । अत एव—

स पित्रे प्रथमं पिण्डं दद्यादुच्छिष्टसन्निधौ ।
पितामहाय चैवाथ तत्पित्रे च ततः परम् ॥

इति श्राद्धतत्त्व-धृतया स्मृत्या सहाविरोधः । श्राद्धरत्नाकरादि-धृतस्मृतिः—

दर्भमूले लेपभुजस्तर्पयेल्लेपवर्षणैः ।
पिण्डैर्मातामहांस्तद्वद्गन्धमाल्यादिसंयुतैः ॥

अत्र मातामहानिति बहुवचनेन प्रमातामह-वृद्धप्रमातामहयोर्ग्रहणम् । दर्भमूले करप्रोञ्छनन्तु चतुर्थाद्यानामेव कृते—"लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः" इति स्मृतेः । एतच्च प्रोञ्छनं दक्षिणकरेणैव, मत्स्यपुराणे दक्षिणहस्तं प्रक्रम्य—"ततो दर्भेषु तं हस्तं निर्मृज्याल्लेपभागिनाम्" इति वचनात् । दशगात्रपिण्डदानन्तु—

"दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु"

इति ब्रह्मपुराणात्, "यावदशौचं प्रेतस्योदकं पिण्डमेकञ्च दद्युः" इति विष्णुस्मृतेश्च दाहकालोपस्थितेन श्राद्धकर्त्रा दाहानन्तरं मरणदिनाद्यावद-

शौचान्त्यदिनमेकैकक्रमेण कर्त्तव्यम् । दाहकर्तृकर्तृक-भोजनानन्तरं, दिवा रात्रौ वा मरणे मरणदिने पिण्डमदत्त्वा तद्द्वितीयदिने पिण्डद्वयं दद्यात्, भोजनजन्याशौचसद्भावस्य रुद्रधरोल्लिखितत्वात्, निषिद्धकाले रात्रौ च पिण्डा न देयाः" इति स्मृतिसाराच्च ।

दाहानन्तरमपरदिनेऽधिकारिण्यायातेऽतीतपिण्डान् श्रवणदिने दत्त्वा शिष्टान् यथापूर्वं दद्यात्क्रमेण । अधिकारिभिन्नश्चेद्दाहकर्त्ता तदा सोऽपि-निजाशौचं यावद्दशपिण्डान्दद्यादेव । तथाहि। शातातपः—

सर्वेषामेव वर्णानां द्विजातीनां तु सर्वदा ।
नरे प्रेतत्वमापन्ने दद्यात्पिण्डं मुखाग्निदः ॥

आश्वलायनः—असगोत्रः सगोत्रो वा यदि स्त्री यदि वा पुमान्
प्रथमेऽहनि यो दद्यात्स दशाहं समापयेत् ॥

अग्निपुराणम्—अन्यगोत्रोऽप्यसम्बन्धः प्रेतस्याग्निं ददाति यः ।
पिण्डञ्चोदकदानञ्च स दशाहं समापयेत ॥

क्षत्रिय-वैश्य-शूद्राणाञ्च पूर्णाशौचे मरणदिनादारभ्य नवसु दिनेषु प्रतिदिनमेकैकं पिण्डं दत्त्वा तत्तदशौचान्त्यदिने दशमं पिण्डं दद्यात् । तथाहि,ब्रह्मपुराणे "दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु"इत्युपक्रम्य—

देयस्तु दशमः पिण्डो राज्ञां वै द्वादशेऽहनि ।
वैश्यानां पञ्चदशमे देयस्तु दशमस्तथा ॥
शूद्रैस्तु दशमः पिण्डो मासे पूर्णेऽह्नि दीयते ॥

यत्तु—ब्राह्मणे दश पिण्डाः स्युः क्षत्रिये द्वादशस्मृताः ।
वैश्ये पञ्चदश प्रोक्ताः शूद्रे त्रिंशत्प्रकीर्त्तिताः ॥

इति पारस्करे प्रोक्तं, तद्देशविशेषपरमिति शुद्धिचिन्तामणौ षड्दर्शनाचार्यमिश्राः । अत एवोक्तं ब्रह्मपुराणे—

जात्युक्ताशौचतुल्यास्तु वर्णानां क्वचिदेव हि ।
देशधर्मान् पुरस्कृत्य प्रेतपिण्डान् वपन्ति हि ॥

दाहकर्त्रा पिण्डदाने कृतेऽपि श्राद्धाधिकारिणा पुत्रादिना पुनः पिण्डदानं कर्त्तव्यम् । तथाहि—

दद्यात्पिण्डान्तरं कर्त्ता, पुत्रादावधिकारिणि ।
विदेशस्थे, दाहकर्त्रा पिण्डदानपरेण च ॥

दश पिण्डाः प्रदेयास्तु यथाकालं सुतादिभिः ॥
पितुः पुत्रेण कर्त्तव्याः पिण्डदानोदकक्रियाः ॥

इति चासङ्कुचितस्मृतिभ्यः। न च शरीरद्वयापत्तिर्द्वितीयपिण्डदानस्यापि प्रथमाऽऽरब्धशरीरसम्पादनपरकत्वादिष्टापत्तेर्वेति प्रपञ्चितमितरत्र। शुद्धिचिन्तामणौ वाचस्पतिमिश्रास्तु—

अग्निदाता प्रेतपिण्डं दद्यादात्मविशुद्धये।
कर्तृपिण्डप्रदानेन प्रेताङ्गमभिजायते ॥
यदि पिण्डशतं दद्यादन्यः श्रुतिपरायणः।
विना कर्त्तुः प्रदानेन प्रेताङ्गं नैव जायते ॥

इति सुगतिसोपानादिवचनं हेतूक्त्याग्निदातृकर्त्तृकपिण्डदानस्य दातुरात्मशुद्धिं, श्राद्धाधिकारिकर्त्तृकपिण्डदानस्य च प्रेताङ्गसम्पादनमित्युभयोर्भेदमाहुः।

सम्पूर्णाशौचान्तरोपनिपाते एकैकपिण्डमेकैकदिने दत्त्वाऽवशिष्टाः पिण्डा अन्तिमदिने देयाः। त्र्यहादिखण्डाशौचस्थले तु प्रथमे दिने त्रयः पिण्डाः, द्वितीये चतुरोऽस्थिसञ्चयनञ्च, तृतीये त्रयः पिण्डा वस्त्रादिक्षालनं क्षौरकर्मादि च, चतुर्थे च ब्राह्मणभोजनादि यद्वा तृतीयदिन एव दशापि पिण्डा देयाः, वस्त्रादिक्षालनं क्षौरकर्मादिकञ्च कार्यम्। तथा च पारस्करः—प्रथमे दिवसे देयास्त्रयः पिण्डाः समाहितैः।

द्वितीये चतुरो दद्यादस्थिसञ्चयनं तथा ॥
त्रीँस्तु दद्यात्तृतीयेऽह्नि वस्त्रादिक्षालनं तथा।

व्यवहारोऽपि प्रचुरः पारस्करोक्तक्रमेणैव। क्वचित्क्वचिच्च प्रथमे दिन एकः पिण्डो द्वितीये चत्वारस्तृतीये पञ्चेत्येवमपि।

सद्यःशौचस्थले तु "सद्यःशौचे प्रदातव्याः सर्वेऽपि युगपत्तथा" इत्यृष्यशृङ्गवचनात्स्नानोत्तरमेकाह्नैव दश पिण्डा देयाः। अत्राशौचलाघवेऽपि पिण्डसंख्या दशैवेत्याह शातातपः—"अशौचस्य च ह्रासेऽपि पिण्डसंख्या दशैव तु।" इति।

सद्यःशौचजनकमरणवार्ता सूर्योदयात्प्रागेवाधिकारिणे दातव्या, स च तद्वार्ताश्रवणोत्तरं सूर्योदयानन्तरं स्नात्वा दशपिण्डान्निर्वाप्याद्यश्राद्धञ्च कृत्वा लोमनखच्छेदनं कारयेदिति मैथिलसम्प्रदायः।

यः षण्मासाभ्यन्तरावस्थो मृतो मोहाद्दग्धो यो वा विहितकाले प्राप्तेऽप्यकृतचूडोऽकृतोपनयनसंस्कारश्च तस्मै भूमावेव पिण्डान् दद्यात्।

हारीतः—अकृत्त(त)चूडा ये बाला ये च गर्भाद्विनिःसृताः।
मृता ये चाप्यसंस्कारास्तेभ्यो भूमौ प्रदीयते॥

अङ्गिराः—भूमौ पिण्डप्रदानञ्च कर्षूं कृत्वा विधानतः।
गन्धमाल्यैः समभ्यर्च्य ततो भोजनमिष्यते॥

कर्षूश्चतुरङ्गुलगभीरश्चतुरङ्गुलविस्तारः प्रादेशमितः खातः। "दक्षिणपूर्वोऽऽयतां कर्षूं खात्वा कुशास्तरणम्" इति श्राद्धसूत्रे गदाधरः।

"भूमौ माल्यं पिण्डं पानीयमुपले वा दद्युः। इति शङ्खवचनेन प्रस्तरोपरि पिण्डप्रदानविधिस्तु प्रस्तरप्रायप्रदेशे भूमेर्दौर्लभ्येन तद्देशमात्रसौकर्यार्थमिति नैतद्वचनानुरोधेन पिण्डदानवेलायां प्रस्तरान्वेषणव्यग्रता मिथिलादौ युक्ता। एतच्च पिण्डदानं सति पाके तेनैव. तदभावे—

फलमूलैश्च पयसा पायसेन गुडेन च।
शालिना सक्तुभिर्वापि शाकैरप्यथ निर्वपेत्॥

इति शुनःपुच्छ-स्मृत्युक्त-द्रव्यान्यतमेन यथासम्भवं कार्यम्। किन्तु प्रथमदिने येन द्रव्येण पिण्डनिर्माणं तेनैव दिनान्तरेष्वपि—
"प्रथमेऽहनि यद्द्रव्यं तदेव स्याद्दशाहिकम्" इतितेनैवोक्तेः। रामायणेऽयोध्याकाण्डम्—

ऐङ्गुदं बदरोन्मिश्रं पिण्याकं दर्भसंस्तरे।
न्युप्य पिण्डं ततो राम इदं वचनमब्रवीत्॥
इदं भुङ्क्ष्व महाराज प्रीतो यदशना वयम्।
यदन्नाः पुरुषा राजँस्तदन्नाः पितृदेवताः॥

शुद्धितत्त्वे पूरकपिण्डविधिर्यथा—

ततश्चोत्तरपूर्वस्यामग्निं प्रज्वालयेद्दिशि।
तण्डुल-प्रसृतिं तत्र प्रक्षाल्य द्भिः पचेत्स्वयम्॥
सपवित्रैस्तिलैर्म्मिश्रां केशकीट विवर्जिताम्।
द्वारोपान्ते ततः क्षिप्त्वा शुद्धां वा गौरमृत्तिकाम्॥
तत्पृष्ठे प्रस्तरेद्दर्भान् ग्राम्यागत देशसम्भवान्।
ततोऽवनेजनं दद्यात्संस्मरन् गोत्रनामनी॥

तिलसर्पिर्म्मधुक्षीरैः सञ्चितं तप्तमेव हि ।
दद्यात्प्रेताय पिण्डन्तु दक्षिणाभिमुखस्थितः ॥
फल-मूल-गुड-क्षीर-तिल-मिश्रं तु कुत्रचित् ।
अर्घ्यैः पुष्पैस्तथा दीपैर्धूपैस्तोयैः सुशीतलैः ॥
ऊर्णा-तन्तु-मयैः शुद्धैर्वासोभिः पिण्डमर्चयेत् ।
प्रयाति यावदाकाशं पिण्डाद्वाष्पमयी शिखा ॥
तावत्तु सम्मुखस्तिष्ठेत्सर्वं तोये ततः क्षिपेत् ।
दिवसे दिवसे देयः पिण्ड एवं क्रमेण तु ॥
सद्यःशौचेऽपि दातव्याः सर्वेऽपि युगपत्तथा ।
त्र्यहाशौचे प्रदातव्याः प्रथमे त्वेक एव हि ॥
द्वितीयेऽहनि चत्वारस्तृतीये पञ्च चैव हि ।
एकस्तोयाञ्जलिस्त्वेवं पात्रमेकञ्च दीयते ॥
द्वितीये द्वौ तृतीये त्रीन् चतुर्थे चतुरस्तथा ।
पञ्चमे पञ्च षष्ठे षट् सप्तमे सप्त एव च ॥
अष्टमेऽष्टौ च नवमे नवैव दशमे दश ।
येन स्युः पञ्च पञ्चाशत्तोयस्याञ्जलयः क्रमात् ॥
तोयपात्राणि तावन्ति सयुक्तानि जलादिभिः

मृत्युकाले सूक्ष्मशरीरस्यातिदौर्बल्येन मूर्च्छाऽऽपन्नत्वेन च जीवस्य मरणोत्तरं निष्क्रियत्वमिव भवति प्रत्यक्स्फूर्त्तिविलम्बश्च, येनातितरां विषीदति जीव इति झटिति तदक्स्फूर्तिपूर्वकं तत्र शरीरे क्रियाशक्तिं सम्पादयितुं पूरक-( दशगात्र- )पिण्डदानं क्रियते । तत्र केन पिण्डेन किमुत्पद्यते तदाहाथर्ववेदीयपिण्डोपनिषदि—

प्रथमेन तु पिण्डेन कलानां तस्य सम्भवः ।
द्वितीयेन तु पिण्डेन मांसत्वक्शोणितोद्भवः ॥
तृतीयेन तु पिण्डेन मतिस्तस्याभिजायते ।
चतुर्थेन तु पिण्डेन अस्थिमज्जा प्रजायते ॥
पञ्चमेन तु पिण्डेन हस्ताङ्गुल्यः शिरोमुखम् ।
षष्ठेन चैव पिण्डेन हृत्कण्ठं तालु जायते ॥
सप्तमेन तु पिण्डेन दीर्घमायुः प्रजायते ।

अष्टमेन तु पिण्डेन वाचं पुष्यति वीर्यवान् ॥
नवमेन तु पिण्डेन सर्वेन्द्रियसमाहृतिः ।
दशमेन तु पिण्डेन भावानां प्लवनं तथा ॥
पिण्डे पिण्डे शरीरस्य पिण्डदानेन सम्भवः ।

अत्रत्यमतभेदो विस्तरभयात्प्रकृतानुपयोगाच्चोपेक्षितः ।

सर्वस्मात्प्राकृतादन्नात्पिण्डान्मधुतिलान्वितान् ॥

इति स्मृत्या, ''सर्वमन्नमेकत्रोद्धृत्य······त्रींस्त्रीन् पिण्डान्दद्यात्'' इति गोभिलोक्त्या च पार्वणे श्राद्धशेषद्रव्येणैव पिण्डप्रदाननियमात्तद्विकृतौ सपिण्डीकरणेऽपि ''प्रकृतिवद्विकृतिः कर्त्तव्या'' इति न्यायात्तन्नियमः, श्राद्धशेषान्नाभावे तु—यथोक्तवस्त्वसम्पत्तौ ग्राह्यं तदनुकारि यत् ।

यवानामिव गोधूमा व्रीहीणामिव शालयः ॥

इति छन्दोगपरिशिष्टात्, ''मुख्यालाभे प्रतिनिधिः शास्त्रार्थ'' इति न्यायाच्च द्रव्यान्तरेणापि पिण्डदानं कर्त्तव्यमेव । यवाद्यलाभे गोधूमादिग्रहणवन्मध्वाद्यलाभे गुडादिग्रहणवदिति तिथ्यादितत्त्वे रघुनन्दनभट्टाचार्याः । वस्तुतस्तु—''शेषनाशे पिण्डनिवृत्तिः'' इति वाचस्पतिमिश्रैरुक्तं तस्यायमाशयः—श्राद्धशेषद्रव्यं तथा सुरक्षणीयं यथा पिण्डसम्पादनं भवेदन्यथा पिण्डनिवृत्तिरूपदोषाऽऽपत्तिः स्यात्, सा चात्यन्तमनुचितेति शेषद्रव्यरक्षा पिण्डार्थमवश्यं कर्त्तव्या तेनैव च सपिण्डीकरणे पिण्डानां निर्माणमित्यत एव मैथिलानां व्यवहारोऽपि तादृश एवेत्यास्तां तावत् ।
पिण्डप्रमाणमाह मरीचिः—

''आर्द्राऽऽमलकमात्राँस्तु पिण्डान् कुर्वीत पार्वणे ।
एकोद्दिष्टे बिल्वमात्रं पिण्डमेकं तु निर्वपेत् ॥
नवश्राद्धे स्थूलतरं तस्मादपि तु निर्वपेत् ।
तस्मादपि स्थूलतरमाशौचे प्रतिवासरम् ॥ इत्थमेवाऽऽचारोऽपि ।

पिण्डप्रदानार्थं सैकतपिण्डिकानिर्माणविधिमाह विष्णुधर्मे—

दक्षिणाप्रवणे देशे तीर्थादौ च गृहेऽपि वा ।
भूसंस्कारादिसंयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ॥

दक्षिणाप्रवणे = दक्षिणस्यां दिशि निम्ने; 'प्रवणं क्रमनिम्नोर्व्याम्' इति कोशान्निम्नो देशः प्रवणमिति । भूसंस्कारश्च याज्ञवल्क्योक्तः कार्यः । तद्यथा—

भूशुद्धिर्मार्जनाद्दाहात्कालाद्गोक्रमणात्तथा ।
सेकादुल्लेखनाल्लेपाद्गृहे मार्जनलेपनात् ॥

यावदाशौचं श्राद्धकाले वा वेद-धर्मशास्त्रेतिहासपुराणादीनि पित्र्ये श्रावणीयानि । तत्र मनुः—

स्वाध्यायं श्रावयेत्पित्र्ये[1] धर्म्मशास्त्राणि चैव हि ।
आख्यानानीतिहासाँश्च पुराणान्यखिलानि च ॥

स्मृत्यन्तरे—ब्राह्मोद्याश्च कथाः कुर्यात्पितॄणामेतदीप्सितम् ।

य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि ।
प्रयतः श्राद्धकाले वा तदानन्त्याय कल्पते ॥

इति नाचिकेतोपाख्यानश्रवणफलम्प्रक्रम्य कठोपनिषच्च ।
गरुडपुराणे—"यो विष्णुहृदयं मन्त्रं श्राद्धेषु नियतः पठेत् ।

पितरस्तर्पितास्तस्य पयसा च गुडेन च ॥

विष्णुहृदयमन्त्रश्च-'ओश्रावय' इति चतुरक्षरः,' अस्तुश्रौषट्' इति चतुरक्षरः, 'यज' इति द्व्यक्षरः, 'येयजामहे' इति पञ्चाक्षरः, 'वषट्' इति द्व्यक्षरश्च । तदप्युक्तं तत्रैव—

चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च ।
हूयते च पुनर्द्वाभ्यां स मे विष्णुः प्रसीदतु ॥

एतदुत्तरं विष्णुवन्दनमप्युक्तं तत्रैव—

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥

प्रोक्तविष्णुहृदयजपाशक्तावाह मत्स्यपुराणम्—

अभावे सर्वविद्यानां गायत्रीजपमाचरेत् ।

एतन्मूलक एवाद्यत्वेऽपि श्राद्धेषु गायत्रीजपव्यवहारो मैथिलादीनाम् ।

---

## अथास्थिसञ्चयनिर्णयः

ब्राह्मणादित्रैवर्णिकसामान्येन दाहाच्चतुर्थे दिनेऽस्थिसञ्चयनमाह दक्षः । सुगतिसोपाने तु विष्णुराह—

---

१. पितृसम्बन्धिनि श्राद्धे, पितुरिदमित्यर्थे 'वाय्वृतुपित्रुषसो यत्' इत्यनेन यत् ।

अस्थ्नां तु सञ्चयः सद्यः कर्त्तव्यो दाहवासरात् ।
द्वितीयेऽह्नि त्र्यहाशौचे पूर्णे चैव चतुर्थके ॥
चतुर्थे ब्राह्मणानान्तु पञ्चमेऽहनि भूभुजाम् ।
नवमे वैश्यजातीनां शूद्राणां दशमेऽहनि ॥

पूर्ण—सम्पूर्णाशौचे । चतुर्थके—चतुर्थेऽहनि । ब्रह्मपुराणम्—

त्र्यहाशौचे[1] द्वितीयेऽह्नि कर्त्तव्यस्त्वस्थिसञ्चयः ।
सद्यःशौचे तत्क्षणान्तु कर्त्तव्य इति निश्चयः ॥

इत्थमेव प्रचलितो मैथिलानां व्यवहारः किन्तु शूद्राणां व्यवहारपरिप्राप्ता दशाहिकी क्रिया ( बन्धुभोजनादिः ) क्रियमाणा दृश्यतेऽस्थिसञ्चयनस्थानीया । 'अस्थिसञ्चयनन्तु चतुर्थदिन एवे'त्यत्र हेतुर्मृग्यः । अस्थिरक्षणाशक्तौ गौणकालमाह संवर्त्तः—

प्रथमेऽह्नि तृतीये वा सप्तमे नवमेऽपि वा ।
अस्थिसञ्चयनं कार्यं निजैस्तद्गोत्रजैर्मृते ॥
क्वचित्तृतीये विप्रस्य चतुर्थे क्षत्रियस्य च ।
पञ्चमे वैश्यजातेश्च शूद्रस्य दशमेऽहनि ॥

यमः—प्रथमेऽह्नि द्वितीये वा तृतीये वा चतुर्थके ।
अस्थिसञ्चयनं कार्यं बन्धुभिर्हितबुद्धिभिः ॥

अत्र विकल्पे देशकालावनुसृत्य व्यवस्थापनीयम् । श्राद्धायोग्यस्य बालकादेर्दाहेऽशौचान्तिमदिन एवास्थिसञ्चयस्तदुत्तरदिने च ब्राह्मणभोजनमिति सम्प्रदाय इति कृत्यसारसमुच्चये मैथिला अमृतनाथोपाध्यायाः ।

अथ गङ्गायामस्थिक्षेपे फलातिशयमाह यमः—

गङ्गातोयेषु यस्यास्थि प्लवते शुभकर्म्मणः ।
न तस्य पुनरावृत्तिर्ब्रह्मलोकात्कदाचन ॥
दशाहाभ्यन्तरे यस्य गङ्गातोयेऽस्थि मज्जति ।
गङ्गायां मरणे यादृक् तादृक् फलमवाप्नुयात् ॥

स्मृत्यन्तरमपि—यावदस्थि मनुष्याणां गङ्गातोयेषु तिष्ठति ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥

महीयते=पूजां लभते । गङ्गायामस्थिसञ्चयने फलविशेषमाह ब्रह्मपुराणे—

---

१. 'अहःशौच' इति पाठान्तरं छन्दोगपरिशिष्टे ।

अस्थीनि मातापितृपूर्वजानां नयन्ति गङ्गामपि ये मनुष्याः ।
सद्भक्तिकाश्चापि दयाभिभूतास्तेषां तु तीर्थानि फलप्रदानि ॥

द्रव्यलोभादिना मातापितृकुलातिरिक्तास्थिनयने पुनस्तत्रैव दोषमाह—

मातुः कुलं पितृ-कुलं वर्जयित्वा नराधमः ।
अस्थीन्यन्यकुलोत्थानि नीत्वा चान्द्रायणञ्चरेत् ॥

द्रव्यलाभादिलोभराहित्येन पुण्यमात्रैकप्रयोजनपरायणतया तु समानजातीयस्य यस्य कस्याप्यस्थ्नां गङ्गानयने न दोष इति वाचस्पतिमिश्रादिसिद्धः पन्थाः ।

अस्थिक्षेपविधिर्यथा—मृतस्य सम्बन्धी पुत्रः पौत्रः सोदरादिर्वाऽस्थीनि गङ्गां नीत्वा पञ्चगव्येन तानि प्रोक्ष्य हिरण्य-मधुतिलैश्च संयोज्य क्षुद्रे मृद्भाण्डे निधाय दक्षिणां दि॰ पश्यन् 'ओं नमोऽस्तु धर्माय' इत्युक्त्वा जलम्प्रविश्य दक्षिणाभिमुखः 'प्रेतः स्वर्गकामः स मे प्रीयताम्' इत्युदीर्य गभीरे गङ्गाम्भसि निक्षिपेत्। ततः स्नात्वा बहिरागत्य सूर्यं दृष्ट्वाऽऽचम्य कुशत्रयतिलजलान्यादाय 'ओम् अद्य कृतैतदस्थिप्रक्षेपप्रतिष्ठार्थमिदम् (एतावद्द्रव्यमूल्यकं ) हिरण्यमग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणामहं ददे' इत्युक्त्वा यथाशक्ति दक्षिणां दद्यादिति ।

---

## अथ क्षौरनिर्णयः ।

तत्राशौचान्तिमदिने, मृतस्य सर्वेऽपि पुत्रादयः सपिण्डा बान्धवाश्च क्षौरमाचरेयुरिति मैथिला हि महामहोपाध्याय-मिथिलाराज्योपार्जक-महाराज-महेश-ठक्कुर-प्रणीत-'दायसार'-ग्रन्थधृत-वृद्धप्रचेतोवचनानि—

केशश्मश्रुनखादीनि च्छेदयित्वा नरः शुचिः ।
बालो वृद्धः कुमारश्च सपिण्डानां क्रमस्त्वयम् ॥
अन्यथा देवकार्ये वा पितृकार्ये तथाऽशुचिः ।
गायत्र्ययुतसंख्याभिः प्रायश्चित्तं प्रकीर्तितम् ॥
जीवत्पितृकदायादैरपि कर्त्तव्यमेव च ।
अन्यथाऽऽचारहीनः स्यादेष धर्मविधिः स्मृतः ॥

अत्र शिखाछेदनं न कार्यम्। "श्मश्रुकेशनखान् वापयेदक्षिलोमशिखावर्जम्" इति वसिष्ठोक्तेः। अत एव—

"यस्य यस्य तु वर्णस्य यद्यत्स्यात्पश्चिमं त्वहः" इति प्रक्रम्य-समाप्य दशमं पिण्डं यथाशास्त्रमुदाहृतम्। श्मश्रुलोम[1]नखानां[2]च यत्त्याज्यं तज्जहात्यपि॥" इति ब्रह्मपुराणवचने शिखापदं नोक्तं 'यत्त्याज्यं[3] तज्जहाति' इति चोक्तम्। विष्णुः-"ग्रामान्निष्क्रम्याशौचान्ते कृतश्मश्रुकर्म्माणः" इति। देवलः-"दशमेऽहनि सम्प्राप्ते स्नानं ग्रामाद्बहिर्भवेत्। तत्र त्याज्यानि वासांसि केशश्मश्रुनखानि च॥" इति। हारीतोऽपि-"दशमेऽहन्यरण्यं गत्वा कृतश्मश्रुकर्म्माणः" इति। ब्रह्मवैवर्त्तेऽपि-"व्रतानामुपवासानां श्राद्धादीनाञ्च संयमे। न कारयति यः क्षौरं सोऽशुचिः सर्वकर्मसु॥ स च तिष्ठति कुण्डेषु नखादीनाञ्च सुन्दरि। तदेव दिनमानाब्दं तद्भोजी दण्डताडितः॥" इति।

इदन्तु तत्त्वम्—केशश्मश्रुनखाश्रितं पापं तद्वापनेऽपनीयत इत्यशौचान्त्यद्वितीयदिनकरिष्यमाणं श्राद्धं लक्षयीकृत्य तदव्यवहितापूर्वदिने क्षौरादि क्रियते। तथा सति हि "नाभेरूर्ध्वमधो वाऽपि यदि स्याद्रुधिरस्रवः। तद्दिने वैदिकं कर्म कृत्वा तु नरकं व्रजेत्॥ पित्र्यं कर्म्म न कुर्वीत नाभेरूर्ध्वं व्रणो यदि। दैवं तत्रापि कर्त्तव्यं यदि स्याद्व्रणः करः॥" इत्यादि स्मृत्युल्लङ्घनमपि न भवति; नखकेशादिवापनेन कर्म्मकरणार्हता च जायत इत्यतो मिथिलायामित्थमेव व्यवहारोऽस्ति।

"अनुभाविनाञ्च परिवापण(न)म्" इत्यापस्तम्बवचनेऽनुभवन्ति शावं[4] दुःखमित्यनुभाविनः=सपिण्डाः, अनुभवन्त्युत्पद्यन्त इत्यनुभाविनः=पुत्रादयः, अनु=पश्चाद्भवन्ति=जायन्त इत्यनुभाविनो मृतकनिष्ठाश्चेत्येते व्याख्याभेदेन गृह्यन्ते, तथैव चण्डेश्वर-वाचस्पतिमिश्रादिभिर्व्याख्यातत्वादाचाराच्च, अन्यतमाभिधानेन शब्दार्थसङ्कोचे बीजाभा-

---

१. केशेति पाठान्तरम्।　　२. प्राण्यङ्गत्वेऽप्येकवद्भावाभावश्छान्दसः।

३. यत्त्याज्यमित्यनेन भ्रुवावक्षिलोमकक्षोपस्थशिखाश्च वर्जयित्वेत्यवेतव्यं तथैव शिष्टाऽऽचारात्।　　४. शवसम्बन्धि।

वाच्च। एतेन "अनु=पश्चाद् भवन्ति=जायन्त इत्यनुभाविनो मृतकनिष्ठा"-इति व्याचक्षाणा ज्येष्ठसपिण्डबान्धवादिक्षौराभावं निर्णयन्तः परास्ताः।

यत्तु "गङ्गायां भास्करक्षेत्रे मातापित्रोर्गुरौ मृते। आधाने सोमकाले च वपनं सप्तसु स्मृतम्॥" "केशश्मश्रू धारयतामग्र्या भवति सन्ततिः॥" इत्यादिस्मृतिमनुरुन्धाना मृतस्य पुत्राणामेव क्षौरकर्म्म कारयन्ति, तदपि च श्राद्धकर्त्तुर्दाहात्प्रागेव तत्र तद्देशाऽऽचाराद्व्यवस्था बोध्या।

मैथिलास्तु-"पञ्चमकं दशमकं वा प्रत्यायुष्यम्" "त्रिः पक्षस्य केशश्मश्रुलोमनखान् संहारयेत्" इत्यादि श्रुत्यायुर्वेदवचनबलादशौचाभावेऽपि यथेच्छं क्षुरेण मुण्डनं कारयन्ति। भिन्नदेशीयाश्च "नीचकेशश्मश्रुणा ब्राह्मणेन भवितव्यम्" इति स्मृतौ ह्रस्वपर्यायनीचपदश्रुत्याऽशौचाभावे कर्त्र्या मुण्डनं कारयन्ति तारतम्यन्त्वत्र सुधीभिरेव कार्यम्।

अधिकारिणा च यावदशौचं प्रत्यहं दिनार्द्धोत्तरमेकभक्तमाचरणीयम्, तथा च स्कन्दपुराणे—"दिनार्द्धसमयेऽतीते भुज्यते नियमेन यत्। एकभक्तमिति प्रोक्तमतस्तत्स्याद्दिवैव हि॥" इति। अत्र दिवैवेत्यनेन रात्रौ तन्निषेधात्सूर्यसत्त्वदशायामेवैकभक्तं कर्त्तव्यमिति फलति। अशौचसम्बन्धश्चाग्निहोतृणां दाहदिनादारभ्य, तदन्येषाञ्च मरणदिनात्तथाहि शङ्खः—"मरणादेव कर्त्तव्यः संयोगो यस्य नाग्निना। दाहादूर्ध्वमशौचं स्याद्यस्य वैतानिको विधिः॥" इति। वैतानिकः=वितानो यज्ञाग्निस्तत्सम्बन्धी। अत्र नियमे[1] विशेषमाहाऽऽश्वलायनः—"नैवास्यां रात्रावन्नं पचेयुस्त्रिरात्रमक्षारलवणाशिनश्च स्युर्द्वादशरात्रं महागुरुषु" इति। ततश्चाशौचिनामशौचाधिकरणरात्रौ पाकनिषेधस्त्रिरात्रं क्षारलवणनिषेधो मातापितृगुरुषु मृतेषु च द्वादशरात्रं क्षारलवणनिषेधः पर्यवस्यति। मत्स्यमांसानि, यद्यपि "मत्स्य-मांसानि न खादयेयुराप्रदानात्" इति गौतमवचनाच्छ्राद्धप्रदानं यावदेव प्रतिषिद्धानि, तथापि व्यवहारो द्वादशाह(सपिण्डीकरणाधिकरणाहोरात्र-)पर्यन्तमभोजनस्य, अत एव मिथिलायां सपिण्डीकरणोत्तरदिने सम्बन्धि-बान्धवैः सह मत्स्यमांसानि शाक्ता भुञ्जते—यद्भोजनमेव 'मत्स्यमांस'शब्देन प्रचलितमस्ति। अत्राऽऽश्वलायनव-

१. नियमोऽत्र व्रतम्, 'नियमो व्रतमस्त्री'ति चामरः। २. स्वार्थिको णिजत्र।

चने 'अक्षारलवणाशिन' इत्यत्र क्षारञ्च लवणञ्चेति कर्म्मधारयो न त्वि-तरेतरयोगः, प्रतिपत्तिगौरवादिति क्षाररूपलवणाशनस्यैव निषेधेन सैन्ध-वादिलवणभक्षणे न दोषोऽत एवाश्वलायनो विवाहाच्चतुर्थीकर्म्मसमाप्तिं यावन्नियमे "अक्षारालवणाशिनौ" इति सर्वविधलवणभक्षणप्रतिषेध-तात्पर्येण नञ्द्वयमकरोदिति रत्नाकर-द्वैतनिर्णय-शुद्धिचिन्तामणि-द्वैतपरि-शिष्टादिषूक्तं नाऽऽदरणीयम्, सर्वविधलवणभक्षणप्रतिषेधस्यैव श्राद्धे मै-थिलानां निष्प्रत्यूहव्यवहारात्, अन्यथा क्षारलवणस्यैव सूत्रेणानेन प्र-तिषेधात्तस्य च कोषाभिधानराजनिघण्टादिषु विड्लवणत्वेन प्रतिपादि-ततया तावन्मात्रभक्षणस्य रागतोऽप्राप्तत्वेन प्रतिषेधवैयर्थ्यप्रसङ्गात्तस्मा-द्द्वन्द्व एवाऽऽश्रयणीयः सूत्रे, न तु कर्म्मधारय इत्येवञ्च पारिजातादिव्या-ख्यानेषु सङ्कसुकतामारोपयन्त एव सङ्कसुकभावास्ततश्च "अक्षारलवणा-शिनो द्वादशाहं कटमुपासीरन्" इति बौधायनसूत्रेऽपि द्वन्द्व एव। आ-श्वलायनदृष्टान्तस्तु मत्पक्षमेव पुष्णाति—आश्वलायनेन सर्वविधलव-णप्रतिषेधे कृते भागासिद्धेरयुक्ततया श्राद्धीयप्रकरणस्थबौधायनसूत्रेणापि तथा प्रतिषेधस्यैवौचित्यात्तस्य च द्वन्द्वं विना दौर्लभ्यादिति मे प्रतिभा-ति। अत एवाग्निपुराणे "नित्यस्नायी मिताहारी गुरुदेवद्विजार्चकः। क्षारं क्षौरञ्च लवणं मधु मांसं विवर्जयेत्॥" इति कण्ठत एव क्षार-लवणयोर्भेद उक्तः। क्षारगणश्च—"तिलमुद्गादृते शैम्ब्यं शस्यं गोधूमको-द्रवौ। धान्यकं देवधान्यञ्च शमीधान्यं तथैक्षवम्। स्विन्नधान्यं तथा पण्यं मूलं क्षारगणः स्मृतः॥ इति तत्रैवोक्तः।

यत्तु-"गोक्षीरं गोघृतञ्चैव धान्यमुद्गयवास्तिलाः। सामुद्रं सैन्धव-ञ्चैवमक्षारलवणं मतम्॥" इत्यनेन सामुद्रसैन्धवलवणयोरक्षारलवणत्वं रत्नाकरोक्तं तदित एव हेतोः श्राद्धेतरकर्म्मपरकमितीह तन्नादर्त्तव्यम्।

गोधूमादीनां प्रतिप्रसवश्च "व्रीहिषाष्टिकमुद्गाश्च कलायः सतिलं पयः। श्यामाकाश्चैव नीवारा गोधूमाद्या व्रते हिताः॥ कूष्माण्डालावुवार्त्ताक-पाल्य(ल)ङ्कीर्ज्योत्स्निकास्त्यजेत्।" इति।

---

१. सङ्कीर्णस्वभावं मन्दभावं वा. "सङ्कसुकः सङ्कीर्णो मन्दश्च" इति शब्दकल्प०

अथ यति[1]विषये विशेषमाह बृहस्पतिः—"यतेः किञ्चिन्न कर्त्तव्यं न चान्येषां करोति सः । त्रिदण्डग्रहणादेव प्रेतत्वं विनिवर्त्तते ॥" इति । ब्रह्मपुराणमपि—"त्रयाणामाश्रमाणान्तु कुर्याद्दाहादिकां क्रियाम् । यतेः किञ्चिन्न कर्त्तव्यं न चान्येषां करोति सः ॥" इति । महाभारतमपि—ज्ञानाग्निदग्धदेहस्य पुनर्दाहो न विद्यते । इति । तस्मान्निर्जितेन्द्रियग्रामस्य संन्यासिनो दाहादिसपिण्डीकरणान्ता क्रिया न कार्या । तथाहि—

उशनाः—एकोद्दिष्टं न कर्त्तव्यं न्यासिनां[2]चैव सर्वदा ।
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ॥

दत्तात्रेयः—एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम् ।
न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे ॥
अहन्येकादशे प्राप्ते पार्वणन्तु विधीयते ॥

अत्राप्येकोद्दिष्टपदमजहत्[3]स्वार्थलक्षणया षोडशश्राद्धोपलक्षकमन्यथा 'यतेः किञ्चिन्न कर्त्तव्य' मिति प्रागुक्तबृहस्पति-ब्रह्मपुराण-वचनाभ्यां सहास्यैकवाक्यताया गर्भस्रावात्, वक्ष्यमाण-शातातपवचनस्थेन 'सपिण्डीकरणाभावा' दित्यनेन सह विरोधाच्च । एकादशाहपदञ्चाद्यश्राद्धादीनामुपलक्षकम् । पार्वणन्तु पार्वणविहितकालेषु सर्वेष्वेव कार्यम् । यथाऽऽह शातातपः—एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह ।
सपिण्डीकरणाभावात्पर्वश्राद्धन्तु सर्वदा ॥

सर्वदा = क्षयाहे, अमावास्यादौ च ।

श्राद्धविवेके महामहोपाध्यायमैथिलरुद्रधरस्तु—[संन्यासिपुत्रैः पितुः साम्वँत्सरिकैकोद्दिष्टपार्वणाभ्युदयिकतीर्थश्राद्धादीनि कर्तव्यानि, 'मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसम्वँत्सरञ्चैवमा(आ)द्यमेकादशेऽहनि' इति सामान्यविहितानामेकोद्दिष्टादीनां सन्न्यासिपुत्रम्प्रतिकर्त्तव्यतानिषेध-

१. 'ये निर्जितेन्द्रियग्रामा यतिनो यतयश्च ते' इत्यमरः ।

२. संन्यासिनाम् । ३. जहत् स्वं ( पदं ) यमर्थं स जहत्स्वः, जहत्स्वः अर्थो यस्यां सा जहत्स्वार्था, न जहत्स्वार्था अजहत्स्वार्था सा चासौ लक्षणा च तयेत्यर्थः । अत एव षोडशश्राद्धोपलक्षकत्वे सत्यपि न स्वार्थस्य त्याग इति सामान्यैकोद्दिष्टस्यापि बोधः ।

कप्रमाणाभावात्। यत्तु "एकोद्दिष्टं न कुर्वीत यतीनाञ्चैव सर्वदा। अहन्येकादशे प्राप्ते पार्वणन्तु विधीयत" इति वाक्यं तत्तु न साँवत्सरिकैकोद्दिष्टश्राद्धनिषेधकमेतद्वाक्यस्य पारिजातनिबन्धादिषु सपिण्डीकरणपर्यन्तैकोद्दिष्टप्रकरणे लेखनेन प्रेतोद्देश्यकषोडशश्राद्धनिषेधकत्वव्यवस्थितेः। 'त्रिदण्डग्रहणादेव प्रेतत्वं नैव जायते' इत्युपसंहाराच्च। "एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह। सपिण्डीकरणाभावात्पार्वणं श्राद्धमिष्यते" इति शातातपवाक्ये त्रिदण्डग्रहणहेतुकसपिण्डीकरणाभावस्यैकोद्दिष्टनिषेधहेतुत्वेनाभिधानाच्च। किञ्च "एकोद्दिष्टं जलं पिण्डमाशौचं प्रेतसत्क्रियाम्। न कुर्यात्पार्वणादन्यद् ब्रह्मीभूताय भिक्षवे" इति दत्तात्रेयवाक्ये वार्षिकैकोद्दिष्टनिषेधानवगमात्कतिपयानां साँवत्सरिकैकोद्दिष्टाऽऽचरणाच्च कतिपयानामनाचरणस्य प्रकरणाच्च, तत्रैकोद्दिष्टनिषेधानवगमसामञ्जस्यान्यथोपपत्तेर्न सामान्यैकोद्दिष्टनिषेधोऽवगम्यत इति तच्चैकोद्दिष्टं सामान्योक्तैकोद्दिष्टविधिनैव कर्तव्यं विध्यन्तरानुपदेशात्सर्वैश्च सन्न्यासिपुत्रैः कर्त्तव्यं तत्रापि विशेषाश्रवणादित्यत एव पार्वणाभ्युदयिकतीर्थश्राद्धादि यतिपुत्रैः कर्त्तव्यमेवेति श्राद्धपल्लवे लिखितं यतेः सपिण्डीकरणान्ता क्रिया सर्वानुमतिनिषिद्धेति श्रीदत्तोपाध्याय-स्मृतिसारादिलेखनञ्च। एकोद्दिष्टकर्त्तव्यतानिषेधकवाक्यस्य प्रेतोद्देश्यकैकोद्दिष्टकर्त्तव्यतानिषेधपरत्वं सर्वत्र स्मृतिसारादावप्यवगम्यते सन्दर्भात्। "ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ॥" इति वाक्ये ब्राह्मणादिहतत्वादीनि तु वस्तुतः पितामहादिप्रक्रमश्राद्धविधायकानि, न त्वेतेन त्रिदण्डिसन्न्यासिपार्वणश्राद्धनिषेधः। सङ्गवर्जितः=सन्यासी]-त्याह। अयमेव सिद्धः पन्था मह्यं रोचते सूक्ष्मेक्षिकया सर्वेषामेवोक्तानां वचनानां सन्न्यासिप्रेतोद्देश्यकसपिण्डीकरणान्तैकोद्दिष्टप्रतिषेध एव तात्पर्यावगमादिति संक्षेपः।

---

## अथाधिकारिनिर्णयः।

तत्र पूर्वमध्यमोत्तररूपासु मृतस्य तिसृषु क्रियासु दाहाद्यशौचान्त्यदिनपर्यन्तकर्त्तव्या क्रिया पूर्वा, तत्र पितृ-मातृ-सपिण्डाः समानोदकास्तत्सम्बन्धि-

नोऽन्येऽपि वाधिकारिणः, आद्यश्राद्धादिसपिण्डीकरणान्ता क्रिया मध्यमा तदुत्तरैकोद्दिष्टपार्वणादिरूपोत्तरा, अनयोर्मध्यमायाममीषामनियम उत्तरायान्त्वनधिकार एव। पुत्र-पत्नी-सोदरभ्रातृ-तत्पुत्रादीनान्तु तिसृष्वप्यधिकारस्तथा च विष्णुपुराणम्—"पितृ-मातृ-सपिण्डैस्तु समानसलिलैस्तथा। तत्संघातान्तर्गतैर्वा राज्ञा वा धनहारिणा" पूर्वाः क्रियास्तु कर्त्तव्याः पुत्राद्यैरेव चोत्तराः।" इति। पुत्राद्यधिकारिपौर्वापर्यक्रमस्त्वित्थम्—पुरुषश्राद्धे प्रथममौरसपुत्रस्य ज्येष्ठस्याधिकारस्तदभावेऽव्यवहितस्य कनिष्ठस्य, औरसपुत्राभावे पौत्रस्य तदभावे प्रपौत्रस्य "पुत्रः पौत्रः प्रपौत्रो वा" इति विष्णुस्मृतेः। तदभावे कन्य(पुत्रि)कापुत्रस्य, तदभावे दत्तकस्य, तदभावे कृत्रिमस्य, तदभावे क्षेत्रजादीनां पुत्राणाम्। सर्वविधपुत्राभावे पौत्रस्य, तदभावे प्रपौत्रस्येति क्रमस्त्वनादरणीय एव पौत्रप्रपौत्रयोरौरसपुत्रजत्वेन साक्षादात्मसम्बन्धसत्त्वान्मैथिलव्यवहार-विरुद्धत्वाच्च। पुत्रा द्वादशेत्याह मनुः—

औरसः क्षेत्रजश्चैव पुत्रिका-पुत्र एव च।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च॥
पौनर्भवोऽपविद्धश्च दत्तः क्रीतः कृतस्तथा।
स्वयञ्चोपगतः, पुत्रा द्वादशैते प्रकीर्त्तिताः॥

एषां लक्षणानि यथा—यः सवर्णायां स्वभार्यायां स्वयमुत्पादितः स औरसस्तथा च—मनुः—

स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम्।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम्॥

"सवर्णायां संस्कृतायामुत्पादितमौरसपुत्रं विद्यात्" इति बौधायनः। संस्कृतायां=यथाविधि परिणीतायाम्। यो मृतस्य, क्लीबस्य, जननशक्तिदूषकरोगार्त्तस्य वा भार्यायाम् "अपुत्रां गुर्वनुज्ञातो घृताभ्यक्त ऋतावियात्" इत्युक्तविधिना गुरुजननियुक्तायामन्येन जातः स क्षेत्रजः पुत्रस्तथाच मनुरेव—"यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा। स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः" इति। 'तल्पं शय्याट्टदारेषु' इत्यमरात्तल्पमत्र पत्नी। प्रमीतस्य = मृतस्य। क्षेत्रं = यथाविधिपरिणीता स्त्री। यः पुनः कन्यादानकाल एव 'अस्यां यः पुत्रो जायते स मे पुत्रः स्यात्' इति

व्यवस्थया दत्तायां पुत्र्यां पुत्रः स कन्य(पुत्रि)कापुत्रस्तथा च वसिष्ठः—

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम्।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥

स्वधाकरम्=श्राद्धकारकम्। एष यदि 'ममापि स्वधाकरम्' इति व्यवस्थया दत्तायामुत्पन्नस्तदा द्व्यामुष्यायणत्वान्मातापितृकुलयोरुभयोरपि श्राद्धकरस्तथा च देवलः—"तत्पितुः पुत्रिकापुत्रो दायादः सोऽथ वा भवेत्। पितुर्मातामहस्यापि निरपत्यस्य पुत्रवत् ॥" इति।

निरपत्यस्य=अपुत्रस्य। य रहस्यरूपेण पितृगृहे कन्या जनयेत्स तादृशकन्यापरिणेतुः कानीनः पुत्र उच्यते, "पितृवेश्मनि कन्या तु यं पुत्रं जनयेद्रहः। तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम्" इति। या त्वज्ञाता ज्ञाता वा गर्भिणी सत्येव परिणीयेत तस्यामुत्पन्नः परिणेतुः सहोढः पुत्र उच्यते। तदप्याह स एव—"या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती। वोढुः सगर्भा भवति सहोढ इति चोच्यते" इति। यश्च स्वगृहेऽवस्थितायां स्वभार्यायां केनाप्यज्ञातेनोत्पादितः स तस्य भार्यावतो गूढोत्पन्ननामकः पुत्रो भवति, "उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः। स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः" इति मनोः। नपुंसकत्वादिदोषेण स्वयं पतिमपहाय पत्यैव वा केनापि कारणविशेषेण परित्यक्ता विधवा वा स्त्री स्वेच्छया सवर्णं पुरुषान्तरमाश्रित्य यं पुत्रमुत्पादयति स तदुत्पादकस्य 'पौनर्भव' संज्ञकः पुत्रस्तथा च "क्लीबं विहाय पतितं या पुनर्लभते पतिम्। तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः", "या पत्या वा परित्यक्ता विधवा वा स्वयेच्छया। उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते", "या तु पत्या परित्यक्ता विधवा स्वेच्छयाथ वा। उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते" इति कात्यायन-मनु-विष्णवः। यं तूभाभ्यां मातापितृभ्यां तदन्यतरेण वा परित्यक्तं गृह्णीयात्स तद्ग्राहकस्यापविद्धः पुत्रो भवति "मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा। यं पुत्रं परिगृह्णीयादपविद्धः स उच्यते" इति मनोः। "प्रदान-विक्रय-परित्यागेषु मातापितरौ प्रभवतः" इति वसिष्ठस्मृतेर्मातापितरौ परस्परानुमत्या स्नेहपूर्वकं कुशतिलजलादिनोत्सृज्य यं दद्यातां स दत्तकः (दत्त्रिमः) "माता पिता वा दद्यातां यमद्भिः पुत्रमापदि। सदृशं प्रीतिसंयुक्तं स ज्ञेयो

दत्रिमः सुतः" इति मनोः। दद्यातामिति द्विवचनेन परस्परस्यानुमतिर्विवक्षिता, अन्यतराभावे त्वन्यतरस्यैव। अद्भिः = कुशतिलजलैः, उपलक्षणत्वात्। आपदि = पुत्रासत्त्वदशायाम्। सदृशं = सवर्णम्। प्रीतीत्यनेन भयलोभादिनिरासः। दत्रिम इति दानेन निर्वृत्तत्वात्। एष पोषणीयत्वात्पोष्यपुत्रोऽप्युच्यते। स्त्रियास्तु पत्यनुमतिसापेक्ष एव पुत्रदानेऽधिकारो नान्यथा "न स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानाद्भर्त्तुः" इति वसिष्ठस्मृतेः। यदि त्वप्रतिषेधलेव पतिर्मृतः स्यात्तदा तस्या अप्यधिकारः, 'अप्रतिषिद्धमनुमतं भवति' इति न्यायात्। अत एव "दद्यान्माता पिता वा यं स पुत्रो दत्तको भवेत्" इति याज्ञवल्क्येन पृथक्पृथग्दानाधिकारो दर्शितः। वाचस्पतिमिश्रोऽप्येवम्मन्यते। एतत्प्रदानप्रकारस्तु विस्तरभयादप्रासङ्गिकत्वाच्चेह नोपन्यस्तो जिज्ञासुभिः 'पोष्यपुत्र' शब्दे शब्दकल्पद्रुमेऽवलोकनीयः। एतत्पुत्र-ग्रहणं च राज्ञे तद्विप्रकर्षे तु ग्रामस्वामिने सूचयित्वा बान्धवानाहूय कर्त्तव्यं, पूर्वदिने कृतोपवासेन चासौ ग्रहीतव्यः "पुत्रम्प्रतिग्रहीष्यन् बन्धूनाहूय राजनि निवेद्य" इति वसिष्ठस्मृतेः। "बन्धूनाहूय सर्वांस्तु ग्रामस्वामिनमेव च" इति स्मृतेः, "पुत्रार्थं समुपोष्य च" इति शौनकस्मृतेश्च। एकपुत्रेण द्विपुत्रेण वा वंशविच्छेदशङ्कया पुत्रदानं न कार्यमित्याह शौनक एव "नैकपुत्रेण कर्त्तव्यं पुत्रदानं कदाचन। बहुपुत्रेण कर्त्तव्यं पुत्रदानं प्रयत्नतः" इति। "नत्वेकं पुत्र दद्यात्प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम्" इति वसिष्ठोऽपि। इदमत्र बोध्यम्—पुत्रिकापुत्रोक्तं द्व्यामुष्यायणत्वं दत्तक-क्रीत-कृत्रिम-पुत्रिकापुत्राणां चतुर्णां भवति "अथ दत्तक-क्रीत-कृत्रिम-पुत्रिकापुत्राः परपरिग्रहेणार्षेण येऽत्र जातास्तेऽसङ्गतकुलीना द्व्यामुष्यायणा भवन्ति" इति पैठीनस्युक्तेः। आर्षेण = ऋष्युक्तप्रकारेण जनक-ग्रहीत्रोरुभयोः समत्येत्यर्थः। अयञ्च सति सम्भवे सपिण्डस्तदभावेऽसपिण्डः सगोत्रस्तस्याभावे विगोत्रोऽपि ग्राह्यस्तथा च शाकलः— 'सपिण्डापत्यकञ्चैव सगोत्रजमथापि वा। अपुत्रको द्विजो यस्मात्पुत्रत्वे परिकल्पयेत्॥ समानगोत्रजाभावे पालयेदन्य गोत्रजम्" इति। "ब्राह्मणानां सपिण्डेषु कर्त्तव्यः पुत्रसंग्रहः। तदभावेऽसपिण्डे वा अन्यत्र तु न कारयेत्" इति शौनकेन कृतोऽसगोत्रप्रतिषेधस्तु दौहित्रादिविषय एव "समानगोत्रजाभावे पालयेदन्यगोत्रजम्। दौहित्रं

भागिनेयश्च मातृष्वसृसुतं विना" इति शाकलोक्तेः। यद्वा 'अन्यत्र तु न कारयेत्' इत्यनेन ब्राह्मणेतरः क्षत्रियादिरसमानजातीयो व्यावर्त्यते, एवं क्षत्रियादावपि "सजातीयः स्वतो ग्राह्यः" इति वृद्धयाज्ञवल्क्यवचनात्। दौहित्रभागिनेयप्रतिषेधश्च शूद्रेतरपरः "दौहित्रो भागिनेयश्च शूद्रैस्तु क्रियते सुतः" इति शौनकेन शूद्रजातौ तयोर्विशिष्य विधानात्।

यम्पुनस्तदीयमातापित्रोः सकाशात्क्रीणीयात्स पुत्रः क्रीत उच्यते, तथा च मनुः—

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।
स क्रीतकः सुतस्तस्य सदृशोऽसदृशोऽपि वा॥

सदृशोऽसदृशोऽपि वेत्यत्र गुणैरित्यादिः। यश्च श्राद्धकरणे कस्को गुणस्तदकरणे च कस्को दोष' इति जानानं सजातीयं गुणिनं पुत्रं कुर्यात्स कृत्रिमः "सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम्। पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयश्च कृत्रिमः" इति मनोः। एते सर्वे सजातीया एव कार्याः "सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः" इति याज्ञवल्क्यात्। अत एतन्मते क्रीतोऽपि सजातीय एव। एवं द्वादशसु पुत्रेषु सत्स्वपि "क्षेत्रजादीन् सुतानेतानेकादश यथोदितान्। पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः" इति मनुनौरसव्यतिरिक्तानामेकादशानां पुत्रप्रतिनिधित्वोक्त्या "आज्यं विना यथा तैलं सद्भिः प्रतिनिधिः स्मृतम्। तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना" इति बृहस्पतिना चौरस–पुत्रिकापुत्राभ्यामतिरिक्तानामातिदेशिकपुत्रत्वसत्त्वाच्चौरस–पुत्रिकापुत्रावेव मुख्यौ "तत्समः पुत्रिकासुतः" इति याज्ञवल्क्येन पुत्रिकापुत्रस्याप्यौरसपुत्रतुल्यत्वप्रतिपादनात्। एषु द्वादशसु पुत्रेषु स्वीयसवर्णभार्यायामुत्पादित औरसः, पुत्रिका–पुत्रो, दत्तः, कृत्रिमश्चेति चत्वार एव प्रशस्तास्तत्र पुत्रिकापुत्रे प्रागुक्तयाज्ञवल्क्यवचनमेव प्रमाणमितरेषु त्रिषु—"औरसः क्षेत्रजश्चैव दत्तः कृत्रिमकः सुतः" इति कलिधर्मप्रकरणे पराशरोक्तिः। सुत इत्यत्र कर्त्तव्य इति शेषः। क्षेत्रजपदमौरसविशेषणमित्युक्तं पुत्रमीमांसायाम्। अत एव "स्वक्षेत्रे संस्कृतायां तु स्वयमुत्पादयेद्धि यम्। तमौरसं विजानीयात्" इति प्रागुक्तमनुवचनेन सहैकवाक्यता सङ्गच्छते। बृहस्पतिः—

अनेकधा कृताः पुत्रा ऋषिभिर्यैः पुरातनैः।

न शक्यतेऽधुना कर्त्तुं शक्तिहीनैरिदन्तनैः ॥

इदन्तनैः = कलियुगस्थैः। शूद्रजातौ तु "शूद्रस्य द्वे भार्ये ऊढानूढे" इति स्मृतिसाराद्युक्तेरनूढा(कृतकेवलसम्बन्धा)ऽपि भार्या भवति तस्यामुत्पन्नः ( पौनर्भवः ) एव पित्रादिश्राद्धकृदिति मैथिलो रुद्रधरोपाध्यायः। वर्त्तमानमिथिलाव्यवहारस्त्वौरस-कन्यकापुत्रयोरसत्त्वदशायां प्रतिजाति-कृत्रिमपुत्रकरणस्यैव। वस्तुतस्तु कन्यकापुत्रकरणव्यवहारोऽपि राजस्थान-पञ्जापादिदेशेष्वेवास्ति विशिष्य, मिथिलायान्तु कन्यकापुत्रोऽपि कृत्रिम-पुत्रीकृत्यैव गृह्यमाणो दृश्यते। एष पुत्रकरणविधिरौरसपुत्राभाव एव, "अपुत्रेण सुतः कार्यो यादृक् तादृक् प्रयत्नतः" इति मनोः। यदि कृत्रिम-पुत्रकरणानन्तरमौरसोत्पत्तिस्तदाप्यौरसस्यैवाधिकारः, "औरसे तु समुत्पन्ने ज्यैष्ठं तेषां निवर्त्तते" इति स्मृतेः। औरसे सत्यपि युगान्तरीय-क्षेत्रजपुत्रकरणदृष्टान्तस्तु कलावनाश्रयणीय एव। तदाह पुत्रमीमांसा-धृताऽऽदित्यपुराणस्मृतिः—"कृतानि यानि कर्माणि दैवतैर्मुनिभिस्तथा। नाऽऽचरेत्तानि धर्मात्मा श्रुत्वा चापि न कुत्सयेत्" इति। तस्मादौरस-पुत्रसत्त्वे स एव श्राद्धं कुर्यात्। "मातुः पितुः प्रकुर्वीत संस्थितस्यौरसः सुतः। पैतृमेधिकसंस्कारं मन्त्रपूर्वकमादृ(दि)तः" इति सुमन्तुवचनात्। औरसपुत्रानेकत्वे तु विभक्तत्वेऽविभक्तत्वे वा सर्वानुमत्या ज्येष्ठ एवा-धिकारी न तु पृथक् पृथक् सर्वेषामधिकारस्तदाह लघुहारीतः—"सपिण्डी-करणान्तानि प्रेतश्राद्धानि षोडश। पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्" इति। मिताक्षराधृतस्मृतिः—"नवश्राद्धं सपिण्डत्वं श्राद्धान्यपि च षोडश। एकेनैव तु कार्याणि संविभक्तधनेष्वपि" इति। स्मृतिसारोऽपि-"अकृतेऽपि कृते वाऽपि सपिण्डादिभिरौरसैः। यत्र कुत्रापि ज्येष्ठस्या-धिकारः प्रेतकर्मणि" इति। मरीचिः—"बहवः स्युर्यदा पुत्राः पितुरेकत्र-वासिनः। सर्वेषां तु मतं कृत्वा ज्येष्ठेनैकेन यत् कृतम्॥ द्रव्येण चाविभक्तेन सर्वैरेव कृतं भवेत्" इति। इहोभयत्र वचने 'सुता' इति 'पुत्रा' इति च बहुवचनमनेकत्वबोधकमन्यथा पुत्रद्वयसत्त्वे वचनानवतारात्। प्रचेताः—

एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिवत्क्रियाः।
कुर्यान्नैकैकशः श्राद्धमाब्दिकन्तु पृथक्-पृथक्॥

एकादशाद्याः = एकादशाहा( अशौचान्तद्वितीयदिनभाविकर्मा )द्याः। आब्दिकं श्राद्धं = वार्षिकमेकोद्दिष्टम्। मनुरपि—"ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः। पितृणामनृणश्चैव स तस्माल्लब्धुमर्हति" इति। यदि तु ज्येष्ठः प्रवासी (तारयन्त्रादिद्वाराऽपि समये वार्त्ताप्राप्त्ययोग्यदेशस्थः) कर्मकरणाक्षमत्वसाधकप्रबलरोगादिग्रस्तो राजबन्दीकृतो वा स्यात्कनिष्ठेन च पातित्यभयाद्यथाकालमाद्यश्राद्धादिसपिण्डीकरणान्तं कर्मानुष्ठितं स्यात्तदा "अज्ञानादथवा मोहान्न कृता चेत्सपिण्डता। तत्रापि विधिवत्कार्या कालादपि चिरादपि" इत्यादिवचनबलाज्ज्येष्ठः सपिण्डीकरणमात्रं कुर्यादित्यपरार्को ब्रूते, मैथिलास्त्वेवंविधस्थले "ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः" "एकादशाद्याः क्रमशो ज्येष्ठस्तु विधिवत्क्रियाः" इत्यादिभिर्मनुप्रचेतःप्रभृतिवचनैर्ज्येष्ठप्राशस्त्यबोधनेन "अज्ञानादथवा मोहात्" 'इति' प्रागुक्तवचनस्थं 'सपिण्डता' पदमाद्यश्राद्धादेरप्युपलक्षणं मत्वा ज्येष्ठपुत्रकर्तृकमाद्यश्राद्धादिसपिण्डीकरणान्तं सकलमेव कर्म पुनरारभन्ते, तथैव सकलमैथिलनिबन्धृसिद्धान्ताद्व्यवहाराच्च। नन्वेवं "पृथङ्नैव सुताः कुर्युः पृथग्द्रव्या अपि क्वचित्" इति लघुहारीतवचनविरोध इति चेन्न, "सर्वेषां तु मतं कृत्वा" इति प्रागुक्तमरीचिवचनतः सर्वानुमति–द्रव्यश्लेषयोरपेक्षयैव ज्येष्ठमात्रस्याधिकारिताबोधनेन तस्य[1] देशान्तरादौ सत्त्वे तयो[2]रसद्भावेन पृथगधिकारस्यौचित्यादितरथा यथासमयश्राद्धाकरणजप्रत्यवायस्य दुर्निवारत्वात्। 'पृथङ्नैवे'ति लघुहारीतवचनन्तु मरीचिवचनैकवाक्यताऽनुरोधेन सर्वानुमतिद्रव्यश्लेषविषयकमिति बहवः। अत एव "अकृतेऽपि कृते वाऽपि इति प्रागुक्तस्मृतिसारोक्तवचने 'कृतेऽपि' इत्युक्तिर्नासङ्गता। इत्थञ्च सोदरानेकत्वे सर्वानुमतिद्रव्यश्लेषयोरत्यन्तापेक्षितत्वेन विदेशस्थस्य कनिष्ठादेरपि पितृमरणवार्त्तामुपलभ्यापि तच्छ्राद्धेऽसम्मिलितस्यानुमतिमप्रेषितवतो वा 'सर्वेषां तु मतं कृत्वा' इत्यादि मरीच्यादिनिदेशोल्लङ्घनेन पुनस्तदीयं श्राद्धषोडशकमवश्यकर्त्तव्यम्, तथैव शिष्टाचाराच्च। प्रायश्चित्तमात्रं कृत्वा पूतो भवतीति तु[3] त्वप्रामाणिकमेव मे प्रतिभाति। एतत्पार्वणेऽपि तुल्यम्। एकोद्दिष्टं तु विभक्तैरविभक्तैर्वा पुत्रैः

---

१. ज्येष्ठस्य। २. सर्वानुमतिद्रव्यश्लेषयोः। ३. वार्षिकरूपम्।

पृथगपि कर्त्तव्यम् "आब्दिकन्तु पृथक् पृथक्" इति प्रागुक्तप्रचेतोवचनात्, "विभक्ता अविभक्ता वा कुर्युः श्राद्धमदैविकम्" इति श्राद्धचिन्तामणि-धृतवचनाच्च। कुर्युरित्यत्र 'पुत्रा' इति शेषः अदैविकम् = विश्वदेवहीन-मेकोद्दिष्टमिति यावत्।

प्रकृतमनुसरामः—कृत्रिमाद्यभावे पत्नी, पत्न्यभावे सहोदरः "पुत्राभावे तु पत्नी स्यात्तदभावे सहोदरः" इति शङ्खस्मृतेः। "पुत्रेण लोकान् जयति पौत्रेणानन्त्यमश्नुते। अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति विष्टपम्" इति वसिष्ठ–हारीत–शङ्खलिखितवचनात्, "लोकान्त्यं दिवः प्राप्तिः पुत्र-पौत्रप्रपौत्रकैः" इति याज्ञवल्क्यवचनात्, "पुत्रः पौत्रश्च तत्पुत्रः" इति संग्रहोक्तेः, "पुत्रः पौत्रः प्रपौत्रो वा" इति विष्णुवचनाच्चात्र पुत्रपद प्रोक्तक्रमेण प्रपौत्रपर्यन्तोपलक्षणं तेनौरसपुत्रसत्त्वे तस्य तत्राप्यनेकसत्त्वे ज्येष्ठस्यौरसपुत्राभाव औरससन्तानभूतस्य पौत्रस्य तदभावे तद्वंशस्य प्रपौत्रस्य प्रपौत्रपर्यन्तौरससन्तानाभावे पुत्रिकापुत्र–दत्तक–कृत्रिमादेस्तद-भावे पत्न्या इति निर्गलितोऽर्थः। 'पुत्राभावे' अत्र पुत्रपदं पौत्रप्रपौत्रयो-रप्युपलक्षकमिति स्मृतिसमुच्चये हरिनाथः। अत्रेदमवधेयम्—औरसोऽ-नुपनीतोऽपि पित्रोः श्राद्धं कुर्यादेवेत्याह सुमन्तुः "श्राद्धं कुर्यादवश्यन्तु प्रमी-तपितृको द्विजः। व्रतस्थो वाऽव्रतस्थो वा एक एव भवेद्यदि" इति। एको मुख्य औरस इति यावदेवमग्रेऽपि। वृद्धमनुः—"कुर्यादनुपनीतोऽपि श्राद्धमेको हि यः सुतः। पितृयज्ञाहुतिं पाणौ जुहुयाद्ब्राह्मणस्य सः॥" इति। प्रथम-वचने 'व्रतस्थो वा' इत्यनेन 'न कुर्यादुदकं व्रती' 'न व्रतिनां व्रते' इत्यादि-वचनानामपवादो बोध्यते। व्रतस्थो ब्रह्मचर्याश्रमस्थः। व्यवहारोऽप्यनु-पनीतौरसपुत्र एवमेव। यद्यपि "न ह्यस्मिन् युज्यते कर्म किञ्चिदामौ-ञ्जिबन्धनात्। नाभिव्याहारयेद्ब्रह्म स्वधानिनयनादृते" "नाभिव्याहारये-द्ब्रह्म यावन्मौञ्जी न बध्यते मन्त्राननुपनीतोऽपि पठेदेवैक औरसः" इति मनुसुमन्तुभ्यां श्राद्धेऽनुपनीतकर्तृकवैदिकमन्त्रपाठ आज्ञप्तः, स च "अनु-पेतोऽपि कुर्वीत मन्त्रवत्पितृमेधिकम्। यद्यसौ कृत(त्त)चूडः स्याद्यदिस्याच्च त्रिवत्सरः" इति सुमन्तुना कृत(त्त)चूडत्रिवर्षवयस्कपरत्वेन व्यवस्थापितः।

---

१. सूर्यस्य। २. स्थानम्।

कृत(त्त)चूडोऽनुपेतश्च पित्रोः श्राद्धं समाचरेत्। उदाहरेत्स्वधाकारं न तु वेदाक्षराण्यसौ" इति स्मृतिसंग्रहोक्तनिषेधस्य प्रथमवर्षकृत(त्त)-चूडपरत्वाद्दत्तकादिपरत्वाद्वा, तथापि मिथिलायां कृत(त्त)चूडत्वाकृत(त्त)-चूडत्व—त्रिवर्षत्वात्रिवर्षत्वसामान्येनानुपनीतकर्तृकश्राद्धे तत्कर्तृकवैदिकमन्त्रपाठो न क्वापि व्यवहृतस्तत्र हेतुः प्रागुक्तं स्मृतिसंग्रहोक्तं वचनमेवोत्प्रेक्ष्य इत्युपरिष्टादवगन्तव्यम्। सहोदरानेकत्वे कनिष्ठस्यैवाधिकारस्तत्राऽप्यव्यवहितस्यैव। "न पुत्रस्य पिता दद्यान्नानुजस्य तथाऽग्रजः" इतिच्छन्दोगपरिशिष्टोक्तेः। अव्यवहितेन सह सम्बन्धस्यान्तरङ्गत्वाच्च। प्रथमत्यागे प्रमाणाभावाच्च। अव्यवहितकनिष्ठाभावे व्यहितकनिष्ठस्य तदभावे ज्येष्ठस्य। सोदरभ्रात्रभावे "पुत्रो भ्राता पिता वापि" इति प्रचेतो वचनात्पितुस्तदभावे "पुत्रः पौत्रः प्रपौत्रो वा तद्वद्वा भ्रातृसन्ततिः" इति प्रागुक्तविष्णुपुराणवचनात्सोदरभ्रातृपुत्रस्य तदभावे "पुत्राभावे सपिण्डाः" इति गौतमवचनस्थपुत्रपदस्य स्नुषापर्यन्तोपलक्षकत्वमाश्रित्य स्नुषाया अधिकारमाहुर्वाचस्पतिमिश्रास्तदभावे सन्निहितस्य ज्येष्ठसपिण्डस्य सन्निहिताभावेऽसन्निहितस्य तस्य, ज्येष्ठसपिण्डाभावे कनिष्ठसपिण्डस्य, सपिण्डता चात्र निर्वाप्य पिण्डान्वयेनेति साप्तपौरुषीत्यशौचनिर्णये वक्ष्यते।

सपिण्डाभावे "अपुत्रस्य च या पुत्री सापि पिण्डप्रदा भवेत्" इति वचनाद्दुहितुरधिकारस्तदभावे "एषामभावे सर्वेषां समानोदकसन्ततिः" इति विष्णुपुराणोक्तेः समानोदकस्य सन्निकृष्टस्य सन्निकृष्टाभावे विप्रकृष्टस्य, अत्र वचन एषामित्यस्य सपिण्डानामित्यर्थः। समानोदकता च सगोत्राष्टमपुरुषमारभ्य चतुर्दशं पुरुषं यावद्बोध्या "समानोदकभावस्तु निवर्त्तेताऽऽचतुर्दशात्" इति मनोः। समानोदकाभावे "मातृपक्षस्य पिण्डेन सम्बन्धो यो जलेन च" इति विष्णुपुराणोक्तेर्मातृसपिण्डस्य तदभावे मातृसमानोदकस्याधिकारः, मातृ-सपिण्ड-मातृ-सकुल्ययोरप्यभावे मातुः "स्वामाता कुरुते तेषां तेऽपि तस्याश्च कुर्वते" इति स्मृतेः, अस्याश्च स्मृतेः "कुलद्वयेऽपि चोच्छिन्ने स्त्रीभिः कार्या क्रिया नृप" इति स्मृत्या सहैकवाक्यतानुरोधात्तादृग्विशेषपरत्वमुन्नीयते। मातुरप्यभावे यथाकथञ्चित्परिगृही(रक्षि)तायाः स्त्रिया अधिकारः "कुलद्वयेऽपि" इति

प्रकृतवचने 'स्त्रीभिरित्यस्य यथाकथञ्चित्परिगृहीताभिरित्यर्थात् ॥ यत्तु "भर्त्ता पुत्रः पुरोधाश्च भ्राता पत्नी सखाऽपि च । यात्रायां धर्मकार्ये च जायन्ते प्रतिहस्तकाः ॥ एभिः कृतं महादेवि ! स्वयमेव कृत भवेत् ॥ स्वयं कर्तुमशक्तश्चेत्कारयेत्तु पुरोधसा । राजकार्ये नियुक्तस्य बन्धनिग्रहवर्त्तिनः ॥ व्यसनेषु च सर्वेषु श्राद्धं विप्रेण कारयेत्" इत्यादिपृथ्वीचन्द्रोदय-मदन-रत्नादिधृतस्मृतिवशात्स्वयमशक्तौ पुरोहितादीनां प्रतिनिधित्वमुच्यते तच्छ्राद्धांशे षोडशश्राद्धेतरश्राद्धपरं मिथिलातिरिक्तदेशपरं वा बोध्यम् । प्रतिहस्तका = प्रतिनिधयः ।

स्त्रीश्राद्धे तु प्रथममौरसपुत्रस्याधिकारस्तदभावे "सर्वासा ( बह्वीनां[1] )-मेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः" इति मनुवचनात्सपत्नीपुत्रस्य तदभावे पुत्रिकापुत्रा ( कृत्रिमपुत्रा ) देः । यत्तु औरसपुत्राभावे पत्युस्तदभावे च सपत्नीपुत्रादेरधिकारं बहुभिर्युक्तिभिराहुः शुद्धिविवेके मैथिलरुद्रधरोपाध्यायास्तत्सम्प्रतितनमिथिलादिव्यवहारेण, "विदध्यादौरसः पुत्रो जनन्या और्ध्वदेहिकम् । तदभावे सपत्नीजः कृत्रिमाद्यास्तु तावृते" तदभावे पतिस्तस्यास्तदभावे सपिण्डजः । इति वामदेवधृतस्मृत्या च सह विरुद्धत्वात्सर्वथाऽनादरणीयमेव । ऋते = विना । कृत्रिमपुत्राद्यभावे पत्युस्तदभावे स्नुषायास्तदभावे पौत्रस्य तदभावे प्रपौत्रस्य प्रपौत्राभावे पूर्ववदासन्नसपिण्डस्य तदभावे विप्रकृष्टसपिण्डस्य "भार्यापिण्डं पतिर्दद्यात् पत्ये भार्या तथैव च । श्वश्र्वादेश्च स्नुषा चैव तदभावे सपिण्डकाः" इति शङ्खस्मृतेः । अत्रादिपदाच्छ्वशुरपरिग्रहः । सपिण्डाभावे सकुल्यस्य सकुल्याभावे पितृसपिण्डस्य तदभावे पितृसकुल्यस्याधिकारः ।

---

१. वस्तुतस्त्वनादरणीयमेवेति वक्ष्यमाणं मिश्रमतं न युक्तिसहम् , अशौचनिर्णये म. म. वाचस्पतिमिश्रा अपीत्थमेव प्राहुः । मिश्रमते तु "बह्वीनामेकपत्नीनाम्०" इतिवत् 'भ्रातॄणामेकजातानामेकश्चेत्पुत्रवान् भवेत् । सर्वे तेनैव पुत्रेण पुत्रिणो मनुरब्रवीत् ॥" इति मनूक्तवचनात् ५१ पृष्ठस्थ "पुत्राभावे पत्नी स्यात् तदभावे सहोदरः" इति शङ्खोद्धृतवचनस्य जागरूकत्वेपि, तत्रापि औरसपुत्राभावे भ्रातृपुत्रस्यैव श्राद्धाधिकारपरतेः । तस्मात् 'अपुत्रस्य सपिण्डीकरणं नास्तीति" नारदोक्तवचने पुत्रत्वारोपेणैव तयोर्जागरूकत्वमित्यवसेयम् । किञ्च कृत्रिमपुत्रकरणं भ्रातृपुत्रस्य, स्त्रीपक्षे सपत्नीपुत्रस्य, सत्वे नान्यस्येत्येतदर्थं त इति ( सम्पादकः ) ।

## अथाऽवीराश्राद्धकल्पः।

पत्यौरसपुत्रसपत्नीपुत्रेति त्रितयहीनायास्तु स्त्रियाः सपिण्डीकरणं न भवतीति सपिण्डीकरणनिर्णये वक्ष्यते। ईदृशस्त्रिया अवीरेति नाम "अवीरानिष्पतिसुता"इत्यमरोक्तेः "पतिपुत्रविहीना या साऽवीरा परि-कीर्त्तिता" इति स्मृतेश्च। एतच्छ्राद्धप्रकारस्त्वित्थम्-चतुर्थ-पञ्चम-नवमै-कादश-दिवसेषु तत्तद्दिवसश्राद्धं सम्पाद्य प्रतिमासेषु द्वादशमासेषु द्वादश-मासिकानि कार्याणीति "चतुर्थे पञ्चमे चैव नवमैकादशे तथा। ततो द्वा-दशभिर्मासैः श्राद्धा द्वादश-संख्यया" इति ब्रह्मपुराणवचनात्। चतुर्थादि-दिवसोत्तरं मरणश्रवणे तु श्रवणदिवस एवातीतचतुर्थादिदिनश्राद्धं तद्दि-नश्राद्धञ्च कृत्वा भाविश्राद्धञ्च भावि तत्तद्दिनेषु कुर्यात्तत्र क्रमः-चतुर्थदिने प्रथममस्थिसञ्चयनं कृत्वा सकुशत्रयतिलजलहस्तः—

"ओम् अपवित्रः पवित्रो वा" इत्यनेनान्नादिसेकोत्तरं पुनः कुशादि गृहीत्वा 'ओम् अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाः। प्रेतत्वविमुक्तिकामोऽद्यादि यथाकालं षोडशश्राद्धान्यहं करिष्ये। इति सा-मान्यसङ्कल्पोत्तरं पुनः कुशादिग्रहणेन ॐ अद्यामुकगोत्रायाः सपिण्डाया अमुकप्रेतायाः प्रेतत्वविमुक्तिहेतुषोडशश्राद्धान्तर्गतचतुर्थदिनश्राद्धमहं करि-ष्ये। इति सङ्कल्प्य सकृद्गायत्रीं त्रिश्च 'देवताभ्य'-इति जपित्वा मोट-कतिलजलान्यादाय "ॐ अद्यामुकगोत्रे सपिण्डेऽमुकप्रेते चतुर्थदिनश्राद्ध इदमासनं ते मया दीयते तवोपतिष्ठताम्" इत्यनेनासनमुत्सृजेदेवमेवाव-शिष्टमपि सकलं कर्मैकोद्दिष्टक्रमेण सम्पाद्य पञ्चम-नवमदिवसीयश्राद्धे अप्येवं रीत्यैव कुर्यात्, ततोऽशौचान्तद्वितीयदिने शय्या-काञ्चनपुरुष-दान-द्विजदम्पतिपूजन-वृषोत्सर्ग-कपिलादानान्तं सविधि विधायाद्यश्राद्धं कुर्यात्। ततो मरणमासीयमरणतिथिमारभ्य वार्षिकैकोद्दिष्टतिथिपर्यन्तं प्रतिमासं मरणतिथिषु यथाक्रम प्रथमादिद्वादशमासिकश्राद्धानि कृत्वा ब्राह्मणान् भोजयेदिति।

विगोत्रकर्त्तृकश्राद्धे चतुर्थदिन एव शय्या-काञ्चनपुरुषदान-कपि-लादान-द्विजदम्पतिपूजन-वृषोत्सर्गाः कर्त्तव्याः "अशौचान्तद्वितीयेऽह्नि" इति सामान्यस्मृतेरिति श्राद्धविवेकादयः। यत्तु सम्पूर्णाशौचान्तद्वितीय-

दिनमुपक्रम्यैव "अशौचान्तद्वितीयेऽह्नि" इत्युक्तिरिति, तदितरत्र शय्यादानादिकं न भवतीति द्वैतनिर्णयस्तत्प्रचलितमिथिलाव्यवहारप्रतिकूलत्वाद्धेयमेव, वचनसङ्कोचे प्रमाणाभावाच्च । अत एव सङ्करेणाशौचवृद्धावशौचान्तद्वितीयदिने शय्यादानादिवृषोत्सर्गान्तं कर्म भवतीत्याहुर्वाचस्पतिमिश्राः । श्राद्धानधिकारिणस्तु महापातकिनः, पाषण्डवृत्तयः, स्तेना, व्रात्या,–आलस्येनाश्रद्धया वा स्वकर्मत्यागिनो, निन्दिताचारिणः, गर्भभर्त्तृद्रोहमाचरन्त्यः स्त्रियो, मद्यपायिन्यः–त्रैवर्णिक्यो, ब्रह्मचारिणश्चेति । तत्रान्याभावे पित्रोराचार्य-गुरूपाध्यायानां वहन-दहनादौ ब्रह्मचारिणोऽदोषः ।

---

## अथ अशौचनिर्णयः ।

### तत्र सूतिकाद्यशौचम्

तत्रादौ गर्भस्रावाद्यशौचमुच्यते—तथाहि—मासत्रयाभ्यन्तरे गर्भस्रावे प्रसूताया ब्राह्मण्यास्त्रिरात्रं, क्षत्रियायाश्चतूरात्रं, वैश्यायाः पञ्चरात्रं, शूद्रायाश्चाष्टरात्रमाशौचम् ।

तथाहि मरीचिः—

गर्भस्रुत्यां यथामासमचिरेत्तमे त्र्यहम् ।
राजन्ये तु चतूरात्रं वैश्ये पञ्चाहमेव च ॥
अष्टाहेन तु शूद्रायाः शुद्धिरेषा प्रकीर्त्तिता ॥

यथामासमित्यनुपदमग्रे वक्ष्यमाणम् । अचिरे = मासत्रयाभ्यन्तरे । उत्तमे = उत्तमजातीयायां ब्राह्मण्यामिति यावत्, एवं राजन्ये = क्षत्रियायां, वैश्ये = वैश्यायामित्यर्थः, वचनस्यास्य प्रातिस्विकाशौचप्रदर्शकत्वात् "अष्टाहेन तु शूद्रायाः" इति साहचर्याच्च पुंस्त्वस्याविवक्षणात् । पुरुषादिसापिण्डविषये "सद्यःशौचं सपिण्डानाम्" इति वक्ष्यमाणब्रह्मपुराणवचनानुरोधाच्च । अहःपदञ्च रात्रेप्युपलक्षकमत्राशौचप्रकरणे ।

मासत्रयादूर्ध्वं षण्मासाभ्यन्तरे गर्भस्रावे माससंख्यकाहोरात्रैः शुद्धिरर्थाच्चतुर्थे मासि गर्भस्रावे चतूरात्रेण, पञ्चमे मासि पञ्चरात्रेण, षष्ठे च षड्रात्रेण शुद्धिः । षष्ठमासोत्तरञ्च स्वस्वजात्युक्तं सम्पूर्णाशौचं चातुर्वर्ण्य-

प्रसूतायाः । तत्सपिण्डानां तु स्त्रीपुंससाधारण्येन सद्यःशौचमेव, तथा च ब्रह्मपुराणम्—

षण्मासाभ्यन्तरं यावद् गर्भस्रावो भवेद्यदि ।
तदा मास-समैस्तासां दिवसैः शुद्धिरिष्यते ॥

अत ऊर्ध्वं स्वजात्युक्तमशौचं तासु विद्यते ।
सद्यःशौचं सपिण्डानां गर्भस्य पतने सति ॥

षण्मासाभ्यान्तरमित्यत्र 'तृतीयमासानन्तर'मिति शेषः । तासां = गर्भवतीनाम् । अत ऊर्ध्वम् = षण्मासोत्तरम् । स्वजातीति—स्वस्वजात्युक्तमित्यर्थोऽर्थात्षण्मासोत्तरं गर्भस्रावे प्रसूताया ब्राह्मण्या दशाहं, क्षत्रियाया द्वादशाहं, वैश्यायाः पञ्चदशाहं, शूद्रायाश्च मासिकमशौचं, तत्सपिण्डानां पतिपुत्रादीनां त्रिरात्रं सपिण्डस्य गुणवत्त्वे श्रौतस्मार्तकर्मानुष्ठायित्वे च षण्मासोत्तरमपि सद्यःशौचमेव । 'सद्यःशौचं सपिण्डाना'मिति ब्रह्मपुराणोक्तं सपिण्डानां सद्यःशौचञ्च षण्मासाभ्यन्तरपरं यद्वा श्रौतस्मार्त्तकर्मानुष्ठायि-गुणवत्सपिण्डपरमथवा द्रवभूतगर्भपतनपरमिति बोध्यम् । यद्यपि चतुर्थमासाभ्यन्तरे नष्टस्य गर्भस्य योनितो बहिर्भावो 'गर्भस्राव' उच्यते, पञ्चमात्षष्ठं मासं यावन्नष्टस्य गर्भस्य योनितो बहिर्भावो 'गर्भपात' उच्यते, सप्तमाद्दशमं मासं यावत्तथाभूतस्य तस्य तथाभावो 'गर्भपातो' 'गर्भच्युति'रिति च, जीवतो गर्भस्य बहिर्भावश्च 'गर्भप्रसव' इत्युच्यते "आचतुर्थाद्भवेत्स्रावः पातः पञ्चमषष्ठयोः । अत ऊर्ध्वं प्रसूतिः स्यात्" इति मरीचिस्मरणात्, तथापि प्रागुक्तमरीचि-ब्रह्मपुराणवचनयोः सामान्येन 'गर्भस्राव'शब्दप्रयोगादिह तथैवोल्लिखितम् । एतद्विषये प्रागुक्तवचनानामैकदेशिकप्रकल्पनन्तूपजीव्यविरोधात्कस्यचिद्दुःसाहसमेव ।

प्रथमतो दशममासपर्यन्तं स्रुतगर्भायाः पितृ-गृहस्थाया ब्राह्मण्यादेः शयनाशनादि-संसर्गभाजां पित्रादिसपिण्डानां प्रसूतातुल्यमेव यथानिर्दिष्टमशौचं तादृश-संसर्गासत्त्वे चतुर्थं मासं यावन्मातापित्रोरेकाहं तदितरेषामशौचाभावस्ततः षष्ठं मासं यावत्तयोरेकरात्रं सोदरभ्रातुरेकाहं तदितरेषामशौचाभावः, सप्तमाद्दशमं मासं यावन्मातापित्रोस्त्रिरात्रं भ्रात्रादेरेकरात्रं पितृव्यादीना मेकाहमिति केचित्, व्यवस्था तु तत्तद्देशाचारतो बोध्या । पतिगृहे गर्भस्रावे तु स्रुतगर्भायाः स्त्रियाः पित्रादेरशौचाभाव

एव। स्रुतगर्भायाः पत्युस्तु यथाक्रमं चतुर्थमासपर्यन्तं लोमनखच्छेदनपूर्वकसचैलस्नानं, ततो दशमं मासं यावन्निर्गुणस्य त्रिरात्रं सगुणस्यैकरात्रमिति केचिदूचुरपरे च मासचतुष्टयाभ्यन्तरे गर्भस्रावे स्रुतगर्भायाः पुत्रस्य सपत्न्याः सपिण्डानाञ्च लोमनखच्छेदनपूर्वकस्नानाच्छुद्धिः, पञ्चम-षष्ठमासयोर्गर्भस्रावे पुनस्तेषां त्रिरात्रं कर्माशौचं सगुणानामेकरात्रं, सप्तमादशमं मासं यावद्गर्भस्रावे सपिण्डानामपि स्वस्वजात्युक्तं सम्पूर्णाशौचमिति व्याहरन्ति, तत्रापि तत्तद्देशाचारानुसारेणैव व्यवस्थोन्नेया।

जन्माशौचे प्रसूताया ब्राह्मण्यास्तद्बन्धुवर्गस्य च दशरात्रेण, क्षत्रिया-वैश्ययोः प्रसूतिकयोस्तद्बन्धुवर्गस्य च द्वादशरात्रेण, शूद्रायास्तद्बन्धुवर्गस्य च त्रयोदशरात्रेण शुद्धिः, किन्तु "सूतिकां पुत्रजननीं विंशतिरात्रेण स्नातां सर्वकर्माणि कारयेन्मासेन स्त्रीजननीम्" इति पैठीनस्युक्तेश्चतुर्णामपि वर्णानां प्रसूतायाः पुत्रजन्मनि विंशतिरात्रानन्तरं कन्याजन्मनि च त्रिंशद्रात्रानन्तरं स्नानोत्तरं पाकादिगृहकर्मसु चाधिकारो न तु ततः प्राक्। जननर्निमित्तकं स्पर्शाशौचं लक्ष्यीकृत्याह याज्ञवल्क्यः—

पित्रोस्तु सूतकं मातुस्तदसृग्दर्शनाद्ध्रुवम्।
तदहर्न प्रदुष्येत पूर्वेषां जन्मकारणात्॥

जननर्निमित्तकमस्पृश्यत्वरूपमशौचं माता च पिता च तयोः पित्रोरेव, तुरेवार्थः, सपिण्डान् व्यावर्त्तयति तच्चास्पृश्यत्वलक्षणमशौचं किमुभयोः सममनेव? नेत्याह मातुरिति मातुर्ध्रुवं = निश्चितं दशाहमित्यर्थः, अत्र हेतुमाह तदसृगिति यतस्तस्याः सम्बन्धिनोऽसृजो दर्शनं भवत्यतः। तथा च वसिष्ठः—

नाशौचं विद्यते पुंसः संसर्गं चेन्न गच्छति।
रजस्तत्राशुचि ज्ञेयं तच्च पुंसि न विद्यते॥

संवर्तः—जाते पुत्रे पितुः स्नानं सचैलं तु विधीयते।
माता शुध्येद्दशाहेन स्नानात्तु स्पर्शनं पितुः॥

सपिण्डानान्त्वस्पृश्यत्वलक्षणाशौचाभाव एवात्र, सूतिकास्पर्शे तु स्नानमात्रम्। तथा चाङ्गिराः—

सूतके सूतिकावर्जं संस्पर्शो न निषिध्यते ।
संस्पर्शे सूतिकायास्तु स्नानमेव विधीयते ॥

तदहः=कुमारजन्मदिनं न प्रदुष्येत=न दुष्टं भवति, तद्दिने कुमारायुर्वृद्धिदुग्रहप्रसरनिवृत्त्यादिहेतुकं दानादिकर्म भवत्येवेति भावः । अत्र हेतुः पूर्वेषामिति, तद्दिने पूर्वेषां=पित्रादीनां पुत्रादिरूपेण जन्म तस्मात्कारणादिति । अत्र विप्रकर्तृकप्रतिग्रहं विधत्ते वृद्धयाज्ञवल्क्यः—

कुमारजन्मदिवसे विप्रैः कार्यः प्रतिग्रहः ।
हिरण्यभूगवाश्वाजवासःशय्याऽऽसनादिषु ॥
तत्र सर्वं प्रतिग्राह्यं कृतान्नं न तु भक्षयेत् ।
भक्षयित्वा तु तन्मोहाद् द्विजश्चान्द्रायणं चरेत् ॥

कृतान्नं=सिद्धान्नम् । व्यासोऽपि—"सूतिकावासनिलया जन्मदा नामदेवताः । तासां यागनिमित्तन्तु शुचिर्जन्मनि कीर्त्तिता ॥ प्रथमे दिवसे षष्ठे दशमे चैव सर्वदा । त्रिष्वेतेषु न कुर्वीत सूतकं पुत्रजन्मनि ॥" इति विशेषेणाह । जन्मतः षष्ठयां तिथौ कर्त्तव्यमुक्तं मार्कण्डेयेन—"रक्षणीया तथा षष्ठी निशा तत्र विशेषतः । रात्रौ जागरणं कार्यं जन्मदानां तथा बलिः ॥ पुरुषाः शस्त्रहस्ताश्च नृत्यगीतैश्च योषितः । रात्रौ जागरणं कुर्युर्दशम्यां चैव सूतके ॥"

## अथ बालाद्यशौचम्

जन्मतः षष्ठं मासं यावद्बालस्य मरणे सर्वेषां ब्राह्मणादीनां सद्यःशौचं, ततो द्वितीयवर्षं यावत्तन्मरणे ब्राह्मणस्यैकमहोरात्रं, क्षत्रियस्य द्विरात्रं, वैश्यस्य त्रिरात्रं, शूद्रस्य च पञ्चरात्रमशौचम् । ऊनद्विवर्षस्य मृतस्य दाहाभाव—भूमिखननादिविचारः प्रमादादिना तद्दाहे कृतेऽशौचविचारश्च प्राक् ( १६–१७ पृष्ठयोः ) प्रसङ्गात्स्पष्टीकृतोऽस्माभिः । द्वितीयवर्षोत्तरं षष्ठवर्षं यावत्तन्मरणे ब्राह्मण–क्षत्रिय–वैश्य–शूद्राणां यथाक्रमं त्रिरात्रं, षड्रात्रं, नवाहं द्वादशाहञ्च तदुत्तरं यावज्जीवनमुपनीतानुपनीतसाधारण्येन ब्राह्मणादित्रैवर्णिकानां मरणे तदीयमातापित्रोर्भ्रात्रादिसपिण्डानाञ्च स्व-स्वजात्युक्तक्रमेण दशाहं द्वादशाहं पञ्चदशाहञ्चाशौचं, शूद्रस्य त्वविवा-

हितस्य मरणे षोडशवर्षपर्यन्तं द्वादशाहं तदूर्ध्वं विवाहिताविवाहितसाधारण्येन षोडशवर्षाभ्यन्तरेऽपि विवाहितत्वे च सम्पूर्ण (मासिक)-माशौचं[1] भवति । तथाहि याज्ञवल्क्यः—

आदन्तजननात्सद्य आचूडान्नैशिकी स्मृता ।
त्रिरात्रमाव्रताऽऽदेशाद्दशरात्रमतः परम् ॥

अत्र वचने दन्तजननादिपदं दन्तजननादिकालोपलक्षकं दन्तजननकालश्च जन्मतः सप्तमो मासो नियतः "दन्तजन्म सप्तमे मासि" इति श्रुतेः, मर्यादार्थकश्चाऽऽङ् तेन दन्तजननकालात्प्रागित्यर्थः, जन्मतः षष्ठमासपर्यन्तमिति यावत् । एवमग्रेऽपि । आचूडात् = चूडाकरणकालात्प्राक् । चूडाकरणकालश्च "तृतीये वा प्रतिहते" इति स्मृतेर्जन्मतस्तृतीयो वत्सरः । यत्तु "चूडा कार्या यथाकुलम्" इत्यनेन याज्ञवल्क्यः कालविशेषमनुक्त्वा कुलरीतिमनुसृत्यैव चूडाकरणकालो ज्ञेय इति निर्णिनाय तदपि जन्मतस्तृतीयवर्षपर्यन्तं[2] एव यथाकुलानुसरणपरं, "तृतीये वर्षे चौलं यथाकुलं वा" इत्याश्वलायनगृह्यमपि तत्परमेव । अत एव—

चूडाकर्म द्विजातीनां सर्वेषामेव धर्मतः ।
प्रथमेऽब्दे तृतीये वा कर्त्तव्यं श्रुतिचोदनात् ॥

इति मनुना सहैषामविरोधः । नैशिकी[3] = निशायां भवा, एकाहोरात्रव्यापिनीत्यर्थः । तथा च मनुः—"नृणामकृतचूडानां विशुद्धिर्नैशिकी स्मृता" इति । आव्रतादेशात् = व्रताऽऽदेश उपनयनमिह तु लक्षणया तत्कालस्ततः प्रागित्यर्थः । स च "द्विजन्मनामयं कालश्चायाणां तु षडाब्दिकः" इति ब्रह्मपुराणात्षष्ठो वत्सरः "ब्रह्मवर्चसकामस्य कार्यं विप्रस्य पञ्चमे" इति मनुव-

---

१. "नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्" इति पाणिनिसूत्रेणोत्तरपदादेर्नित्यं पूर्वपदादेश्च विकल्पेन वृद्धिरित्याशौचमशौचमित्युभयमपि भवति । २. "अशक्त्यादिना तृतीयवर्षे चूडाकरणासत्त्वेऽपि न दोषो व्रतबन्धात्प्राग् यदा कदापि चूडाकरणस्य व्यवहारसिद्धत्वात् किन्तु तत्रापि तृतीयवर्षादारभ्य कृतचूडाकृतचूडसाधारण्येन प्रागुक्तं त्रिरात्रादिकमेवाशौचम् । ३. निशायां भवेत्यर्थे "निशाप्रदोषाभ्याञ्च" इति पाणिनिसूत्रेण पाक्षिकष्ठञ् तदन्तान्ङीप् ।

चनन्तु ब्रह्मवर्चसकाममात्रविप्रविषयकतया विशेषपरत्वेन नैतत्साधकमित्यविरोधः।

अङ्गिराः—विप्रे न्यूने त्रिभिर्वर्षैर्मृते शुद्धिस्तु नैशिकी।
द्व्यहेन क्षत्रिये शुद्धिस्त्रिभिर्वैश्ये मृते सति॥
निवृत्तचूडके विप्रे त्रिरात्राच्छुद्धिरिष्यते।
निवृत्ते क्षत्रिये षड्भिर्वैश्ये नवभिरेव च॥

निवृत्तचूडके=सम्पन्नचूडाकरणसंस्कारे। षड्वर्षाभ्यन्तरेऽनुपनीतक्षत्रियवैश्ययोर्यत् "अनुपनीत"—इत्यादिना ब्रह्मपुराणवचनेन त्रिरात्राभिधानं तद्वेदाग्निमतोरेव तयोरिति न तेनात्र विरोध इति शुद्धिविवेके मैथिलरुद्रधरोपाध्यायाः। पुनरङ्गिरा एव—

शूद्रे त्रिभिर्वर्षान्न्यूने मृते शुद्धिस्तु पञ्चभिः।
अत ऊर्ध्वं मृते शूद्रे द्वादशाहो विधीयते॥

त्रिभिर्वर्षान्न्यूने=द्वितीयवर्षपर्यन्तम्। पञ्चभिरिति दिनैरिति शेषः।
अत ऊर्ध्वमिति=षोडशवर्षपर्यन्तमिति शेषः।
शङ्खः—अनूढभार्यः शूद्रस्तु षोडशाद्वत्सरात्परम्।
मृत्युं समधिगच्छन्ति मासं तस्यापि बान्धवाः॥

अनूढभार्यः = अकृतविवाहः। एतच्च षोडशवर्षोत्तरं विवाहिताविवाहितसाधारणशूद्रमरणपरम्। यस्तु षोडशवर्षाभ्यन्तरे कृतविवाहस्तद्विषय आहाङ्गिरा एव—

षड्वर्षान्तमतीतस्तु शूद्रः संम्रियते यदि।
मासिकन्तु भवेच्छौचमित्याङ्गिरसभाषितम्॥

इति। एतद्वचनस्य कृतविवाह-प्रकरणस्थत्वाद्विवाहस्य च पञ्चमवर्षात् प्राक्प्रतिषिद्धत्वादत्रातद्गुणसंविज्ञानबहुव्रीहिमाश्रित्य षड्वर्षान्तमित्यस्य पञ्चमं वर्षमित्यर्थकतया पञ्चमवर्षादारभ्य शूद्रस्य विवाहितस्य मरणे मासिकमशौचमिति वचनार्थः। पञ्चमवर्षात्प्राग्जातविवाहस्य शूद्रस्य मरणे त्वाचारादेवाशौचं व्यवस्थापयितव्यं तथैव महामहोपाध्यायगोकुलनाथोपाध्यायादीनां सम्मतेः। तथाहि—

यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः।
श्रुतिस्मृत्यविरोधेन स सदाचार उच्यते॥ इति।

अत्र केचित्—एतत्सर्वं निकृष्टशूद्रमात्रपरं, निकृष्टशूद्राश्च प्रतिलोमत्वादि-दूषितजन्मानो यथेच्छाचाराहारविहारा उन्मर्यादा अन्त्यजान्त्यावसाय्यादयोऽस्पृश्याश्च। ये तु पञ्चयज्ञादिविहितक्रियातत्पराः साध्वाचाराहारविहारा द्विजशुश्रूषाश्रद्धालवो विशिष्टगुणयोग्यतावन्तश्च, ते सच्छूद्रास्तेषामविवाहितानां षण्मासान् यावन्मरणेऽशौचाभावस्ततः पञ्चमवर्षपर्यन्तं त्रिरात्रं तदनु षोडशवर्षपर्यन्तं द्वादशरात्रं तदनन्तरं विवाहिताविवाहितसाधारण्येन पञ्चदशरात्रम्। विवाहितानान्तु तेषां पञ्चमवर्षपर्यन्तं प्राग्वत्, पञ्चमात्षष्ठं वर्षं यावद्द्वादशाहं तदनन्तरं पञ्चदशरात्रमिति। एतच्च-"तदर्द्धं न्यायवर्त्तिनः" इत्यादिशास्त्रोपोद्बलितमपि मिथिलाऽऽचारप्रतिकूलम्मिथिलायां हि यावच्छूद्रं प्रागुक्तैव व्यवस्था अङ्गिरःप्रभृतिस्मृता प्रचलति।

## अथ सपिण्डाशौचम्

तत्र सपिण्डता पिण्ड-सम्बन्ध-निबन्धना, पिण्ड-सम्बन्धश्च—पितृपितामहादयस्त्रयः पिण्डभाजः, प्रपितामह-पित्रादयस्त्रयो लेपभाजः, स्वयं पिण्ड-दाता चेत्येतेषां सप्तानामित्यष्टमे तन्निवृत्तिस्तथा च मत्स्यपुराणम्—

लेपभाजश्चतुर्थाद्याः पित्राद्याः पिण्डभागिनः।
पिण्डदः सप्तमस्तेषां सापिण्ड्यं साप्तपौरुषम्॥

नन्वेवं मातामहादीनामपि सपिण्डताऽऽपत्तिः, पिण्डसम्बन्धस्य तौल्यादिति चेत्सत्यम्, किन्तु सगोत्रापेक्षेयं सपिण्डतेति न तेष्वापत्तिस्तथा च शङ्खलिखितौ—"सपिण्डता तु सर्वेषां गोत्रतः साप्तपौरुषी" इति।

गोत्रतः=गोत्रमपेक्ष्य। सम्बन्धमधिकृत्यात्रिरपि—"सपिण्डानां तु सर्वेषां गोत्रजः साप्तपौरुषः" इति। मनुरपि—"सपिण्डता तु पुरुषे सप्तमे विनिवर्त्तते" इति। ततश्च बीजिनमारभ्य सप्तमं पुरुषं यावत्सर्वेषां सन्तानानां सन्तानिनाञ्च सपिण्डतेति सिद्धं तत्र स्वस्वजात्युक्तं दशाहाद्यशौचं भवति।

मनुः—दशाहं शावमाशौचं सपिण्डेषु विधीयते ।
पुनश्च—शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः ।
वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति ॥

अष्टमं पुरुषमारभ्य दशमं यावत्सकुल्यास्तेषां[1] मरणे त्रिरात्रं, तदुत्तरं चतुर्दशं पुरुषं यावत्सो( त्समानो )दकास्तेषां मरणे पक्षिणी ( दिनद्वयसहिता रात्री रात्रिद्वयसहितं वा दिनम् ), तदुत्तरं सगोत्रास्तेषां मरणे सद्यःशौचम् ।

ये तु "सर्वे वा स्युर्दशाहिनः" इति वचनमनुरुन्धानाः क्षत्रियाः कुलक्रमागतं दशाहाशौचं, ये च 'खत्री'पदाभिधानाः क्षत्रियम्मन्यमाना वैश्याः, 'राजपुत्र'-पदाभिधानाः क्षत्रियबन्धवः, क्वचिद्देशविशेषे कतिचिच्छूद्राश्च कुलक्रमागतं द्वादशाहाशौचमाचरन्ति; तेषां तथैव जनन-मरणयोरशौचमुपदेष्टुमुचितं पारम्पर्य-सिद्धस्य व्यवहारस्य महामहोपाध्यायगोकुलनाथोपाध्यायामृतनाथोपाध्याय-विद्यावाचस्पतिमहार्घ्यमधुसूदनोपाध्यायादिभिर्मैथिलमुकुटैरादरणीयत्वेन प्रतिपादनात् । एवञ्चैषामशौचसाङ्कर्येऽपि यथाक्रमं ब्राह्मणक्षत्रियाशौचसाङ्कर्यरीतिरेवानुसरणीयेति फलति ।

## अथ कन्यामरणाशौचम्

तत्र यद्यपि बालकवत्कन्याया अपि सापिण्ड्ये तुल्ये प्रागुक्तमन्वादिवचन-बलेन वर्णानुकूलं दशाहादिसम्पूर्णाशौचं प्राप्नोति, तथापि—

आजन्मनस्तु चूडान्तं यत्र कन्या विपद्यते ।
सद्यःशौचं भवेत्तत्र सर्ववर्णेषु नित्यशः ॥
ततो वाग्दानपर्यन्तं यावदेकाहमेव हि ।
वाक्प्रदाने कृते तत्र ज्ञेयञ्चोभयतस्त्र्यहम् ॥
पितुर्वरस्य च, ततो दत्तानां भर्त्तुरेव हि ।
स्वजात्युक्तमशौचं स्यात्सूतके मृतके तथा ॥

---

1. एवं च विभागोऽशौचप्रकरण एवान्यत्र तु सगोत्रमष्टमं पुरुषमारभ्य चतुर्दशं यावत्सर्व एव समानोदका उच्यन्तेऽतो न श्राद्धाधिकारिनिर्णयप्रकरणोक्त्या विरोधः ।

इति विशिष्य बाधकतया जागरूकेण ब्रह्मपुराणवचनेन सपिण्डसामान्यविषयकं प्रागुक्तं मन्वादिवचनमपोद्यते, ततश्च जन्मतो द्वितीयं वर्षं यावत्कन्याया मरणे चतुर्णामपि वर्णानां सद्यःशौचं, तदुत्तरं वाग्दानात्प्राग्यावदेकाहोरात्रमाशौचम् , "तुभ्यमेषा कन्या मया दातव्या" इत्येतादृशवाग्दानोत्तरं विवाहात्प्राक् तन्मरणे तस्याः पतिकुले पितृकुले च त्रिरात्रं वाग्दानासत्त्वे द्वितीयवर्षादारभ्य विवाहात्प्राग्यावदहोरात्रम् , "अहःस्वदत्तकन्यासु" इति याज्ञवल्क्यस्मृतेः, किन्तु दहन-वहन-कर्त्तुः—"दहित्वा च वहित्वा च त्रिरात्रमशुचिर्भवेत् ।" इति विशेषवचनबलात्त्रिरात्रमेव । यद्यपीह—"असम्बन्धिद्विजान्दहित्वा वहित्वा च सद्यःशौचं सम्बन्धे सति त्रिरात्रम् ।" इति पैठीनसिवचनानुसाराद्दहन-वहनकर्त्रोरसम्बन्धिनोः सद्यःशौचमेवायाति, तथापि व्यवहारतः सर्व एव दहन-वहनकर्त्तारस्त्रिरात्राशौचमनुरुन्धन्ति । इहोभयत्र स्मृतौ 'दग्ध्वा' वोढ्वे' ति प्राप्तावार्षत्वादिडागमः । विवाहोत्तरं पितृ-गृहे स्त्रियाः प्रसवे मरणे च—

> दत्ता नारी पितुर्गेहे सूयते म्रियतेऽथ वा ।
> स्वमशौचं चरेत्सम्यक् पृथक्स्थाने व्यवस्थिता ॥
> तद्बन्धुवर्गस्त्वेकेन शुध्येत्तज्जनकस्त्रिभिः ॥

इति ब्रह्मपुराणात्तदीयमातापित्रोस्त्रिरात्रं तद्बन्धुवर्गस्य भ्रात्रादेः सपिण्डस्याहोरात्रं, व्यवहारतस्त्रिरात्रम् । पतिकुले तु स्वस्वजात्युक्तं सम्पूर्णमेवाशौचम् । इत्थमेव पितृ-मातृ-प्रभृतिमरणे तस्या अप्यशौचं वेदितव्यम् । दत्तायाः कन्यायाः पितृ-गृहे प्रसवे मरणे च संसर्ग-शून्ययोर्मातापित्रोः—सापत्नमातुर्वैमात्रेयभ्रातुः सोदरभ्रातुश्च त्रिरात्रमितरेषान्तु संसर्गशून्यानामेकक्रियाऽऽपन्नानामेकाश्रमस्थानां पितृव्य-तत्पुत्रादीनामेकरात्रं संसर्गे सति तु सर्वेषां सम्पूर्णाशौचमिति केचित् । एतच्च सर्ववर्णेषु तुल्यम् । उक्तवचने 'स्वमशौचं चरेत्सम्यक् पृथक् स्थाने व्यवस्थिता' इत्यस्य 'पृथक्स्थाने व्यवस्थिता सत्यपि दत्ता नारी सूयतेऽथवा म्रियते चेत्तदापि तत्पति-सपिण्डादयः स्वस्वजात्युक्तं सम्पूर्णादिरूपमशौचं चरेयुः, 'दत्तानां भर्त्तुरेव हि' इत्यनेनैकवाक्यतानुरोधा'दित्यर्थ इति स्पष्टं द्वैतपरिशिष्टादौ । विपर्ययेऽप्येवम् । चतुर्थीकर्मणः प्राग्विवाहितायाः स्त्रिया

मरणे तदीयं सपिण्डीकरणान्तं कर्म तत्पैतृकगोत्रेणैव तदीयेन पत्या कर्त्तव्यं, प्रतिवार्षिकन्तु स्वगोत्रेणैवेति प्रसङ्गाद्बोध्यम् ।

सवर्णभार्या( यथाविधि-परिणीता )या मरणे पत्युर्दशाहादिरूपं सम्पूर्णाशौचं परपूर्वायास्तु तस्या मरणे सर्वेषां सवर्णानां त्रिरात्रं, समानजातीयमुत्कृष्टजातीयं वा पुरुषान्तरमाश्रितायाः स्वभार्याया मरणेऽपि सर्वेषां त्रिरात्रम् । हीनवर्णं पुरुषमाश्रितायास्तु तस्या मरणेऽशौचं नास्त्येव ।

या तु विवाहिता सती यौनसम्बन्धमकृत्वैव वोढारमतिक्रम्य स्वेच्छया पुरुषान्तरमाश्रयति तदानीं यं यं पुरुषमाश्रयति तत्सगोत्रत्वात्तस्यां मृतायां तस्य तस्य त्रिरात्राशौचं तदाश्रिततादृशपुरुषान्तर-बन्धुवर्गादीनान्तु नाशौचम् ।

पाणिग्राहकेण सङ्गमे ( यौनसम्बन्धे ) कृते पुरुषान्तरमाश्रयति चेत्तदा पुरुषान्तराश्रयणावस्थायामपि पाणिग्राहक-गोत्रमेव तस्यास्तिष्ठति न पुरुषान्तरगोत्रमशौचन्तु सगोत्रत्वेऽपि त्रिरात्रमेव न तु सगोत्रत्व-प्रयुक्ताशौचवृद्धिः । तथा च त्रिरात्राशौचमधिकृत्य विष्णुः—

"परपूर्वासु भार्यासु प्रसूतासु मृतासु च ।"

स्मृतिः—पित्रा दत्ता तु या कन्या स्वातन्त्र्यादन्यमाश्रिता ।
यं यं श्रितवती भूयस्तस्याशौचं त्र्यहं त्र्यहम् ॥
मृतायां वा प्रसूतायां नान्येषामिति निश्चयः ।
कामादक्षतयोनिश्चेदन्यं गत्वा व्यवस्थिता ॥
तस्यान्यस्य सगोत्रा सा यं त्वाश्रितवती स्वयम् ॥

एवं विपर्ययेऽपि । तत्र पराशरः—" सूतिकायां मृतायान्तु कथं कुर्वन्ति याज्ञिकाः । कुम्भे सलिलमादाय पञ्चगव्यं तथैव च ॥ पुण्यर्ग्भिरभिमन्त्र्यापो वाचा शुद्धिं लभेत्ततः ॥ तेनैव स्नापयित्वा तु दाहं कुर्याद्यथाविधि ॥ " इति । अशौचे दिनगणना तु "उदिते तु यदा सूर्ये नारीणां दृश्यते रजः । जननं वा विपत्तिर्वा यस्याहस्तस्य शर्वरी ॥" इति कश्यपवचनाद्रात्रावपि मरणे पूर्वदिनत एव कार्या । तत ऊर्ध्वम् "अर्द्धरात्रावधिः काल" इत्यादि कश्यपवचनन्तु पक्षद्वयप्रतिपादकतया देशान्तराचारपरत्वेन नास्मद्देशीयैरालम्बनीयम् ।

## अथ सूतिकामरणाशौचम् ।

विवाहकाल एवासमाप्ते सप्तपद्याक्रमणे या बलादपह्रियेत सा प्रसवात्प्राग्यावत्पितृगोत्रं भजते । प्रसवोत्तरं तु यथाविधिपरिणेतु(पूर्वकालिकस्य वोढु) रेवेति तस्यामरणेऽपहर्तुस्त्रिरात्रमेवाशौचमेवं विपर्ययेऽपि ।

इहाशौचप्रकरणे यत्र यत्र पित्रादेस्त्रिरात्रं तत्र सर्वत्र तत्सपिण्डानामेकरात्रं, तथा च मरीचिः—"एकाहस्तु सपिण्डानां त्रिरात्रं यत्र वै पितुः"।

## अथ विगोत्राशौचम् ।

तत्र विगोत्रा द्विविधाः—आसन्नविगोत्रा अनासन्नविगोत्राश्चेति, तत्र यौनसम्बन्धो विद्यासम्बन्धश्च हेतुस्तेष्वाद्याः 'सम्बन्धिनो बन्धव'श्च कथ्यन्ते तदितरे च संसर्गिणः । एषां द्विविधानामपि विगोत्राणामाशौचोत्पत्तौ योनि-विद्यादि-सम्बन्धो निमित्तम् । तत्र योनि-सम्बन्धिनो मातृष्वसृ-पितृष्वसृ-मातामह-मातुल-मातुलानी-मातुलपुत्र-मातृष्वस्रीय-पितृष्वस्रीय-दौहित्र-भगिनी-भागिनेय-श्वश्रू-श्वशुर-श्यालादयः । विद्यासम्बन्धिन-श्चाचार्य-तत्पत्नी-गुरु-तत्पत्न्युपाध्याय-तत्पत्नी-गुरुपुत्र-शिष्यर्त्विगादयस्तेषु भ्रातृ-भगिन्योरन्यतरमरणे परस्परं त्रिरात्रमेतच्च स्वगृहाधिकरणकमरणपरं गृहान्तरे मरणे तु पक्षिणीति केचित्। अनौरसपुत्रा-चार्य-मातामहानां, स्वगृहे कस्यचिच्छ्रोत्रियस्यासपिण्डस्य च मरणे त्रिरात्रम् । तथा च विष्णुः—

"आचार्ये मातामहेऽतीते त्रिरात्रेण,अनौरसेषु पुत्रेषु जातेषु च मृतेषु च ॥ परपूर्वासु भार्यासु प्रसूतासु मृतासु च ।" इति । भिन्नगोत्रदत्तकादीन् प्रक्रम्य ब्रह्मपुराणम्—"भिन्नगोत्राः पृथक्पिण्डाः पृथग्गोत्रकरास्तथा । सूतके मृतके चैव त्र्यहाशौचस्य भागिनः ॥" बृहस्पतिः—"त्र्यहं मातामहाचार्यश्रोत्रियेष्वशुचिर्नरः ।" उशनाः—"मातामहानां मरणे त्रिरात्रं स्यादशौचकम् ।" अङ्गिराः—"गृहे यस्य मृतः कश्चिदसपिण्डः कथञ्चन । तस्याप्यशौचं विज्ञेयं त्रिरात्रमिति निश्चयः ॥" मनुः—"त्रिरात्रमाहुराशौचमाचार्ये संस्थिते सति ।"

संस्थिते = मृते । उपाध्याय-तत्पत्नी-तत्पुत्रान्यतम-मरणे तु क्रमशोऽहोरात्र मेकरात्रञ्च—"त्रिरात्रमहोरात्रमिति कुर्वन्त्याचार्योपाध्याय-तत्पुत्रेषु"

इति बौधायनवचनात्। अत्र 'मृतेषु' इति शेषः पूरणीयः। शिष्यर्त्विङ्मातृष्वसृ-पितृष्वसृ-मातुल-मातुलानी-मातृष्वस्रीय-पैतृष्वस्रीय-श्वश्रू-श्वशुर-दौहित्र-भागिनेय-सहाध्यायि-मित्र-गुरु-गुरुपत्नी-मातामहीनां (मतान्तरे भगिन्या अपि) मरणे पक्षिणी—

> मातुले पक्षिणी रात्रिः शिष्यर्त्विग्बान्धवेषु च।
> संस्थिते पक्षिणी रात्रिर्दौहित्रे भगिनीसुते।
> मातुले श्वशुरे मित्रे गुरौ गुर्वङ्गनासु च॥
> अशौचं पक्षिणी रात्रिर्मृता मातामही यदि।
> असपिण्डे योनिसम्बन्धे सहाध्यायिनि च।

इत्यादि-बृहस्पति-यम-गौतम-वचनेभ्यः। योनि-सम्बन्धा मातृष्वसृ-पितृष्वसृ-प्रभृतयः प्रागुक्तप्रकाराः। सहाध्यायिनि चेत्यत्र 'मृत' इति शेषः। व्यवहारतस्तु बहुत्र प्रदेशेषु त्रिरात्राशौचमेवैवमादिषु भवति। श्वशुरयोर्म्मरणे सन्निधिस्थस्य जामातुस्त्रिरात्रमिति केचित्। जामातृमरणे तु—श्वशुरयोरेकाह एव, व्यवहारतस्त्रिरात्रमहोरात्रं वा।

पितृष्वस्रादिकन्यानां विवाहितानां मरण एकाहः।

अनौरसपुत्रेषु दत्तकस्य मरणे पूर्वापरपित्रोः प्रागुक्तं त्रिरात्रं तत्सपिण्डानान्त्वेकाहः। पूर्वापरपित्रोर्म्मरणे तु दत्तकस्य दशाहादिरूपं सम्पूर्णाशौचम्। विदेशस्थत्वे तु त्रिरात्रम्। असपिण्डकुलगृहीतदत्तकपुत्र-पौत्रादि-मरणे तत्सपिण्डानामेकाहः। सपिण्डकुलगृहीतदत्तकादौ तु प्रागुक्तं निर्बाधं दशाहादिरूपं सम्पूर्णाशौचमेव।

क्षेत्रजादीनामपि तदीयमातापितृमरणे त्रिरात्रम्। भिन्नपितृकयोरेकमातृकयोर्भ्रात्रोरेकस्य मरणे तदितरस्य स्वमातृजात्युक्तं सम्पूर्णाशौचं पितुस्तत्र त्रिरात्रं तत्सपिण्डानाञ्चैकरात्रम्।

या स्त्री प्रागेकेनोढा जनितपुत्रा च सा चेत्पश्चात्तत्पुत्रसहितैवान्यमाश्रित्य तेनाप्युत्पादितपुत्रा तत्र तादृशपुत्रयोरन्यतरस्य जनने मरणे च परस्परं मातृजात्युक्तमेवाशौचं द्वितीयपुत्रस्य पितुस्त्रिरात्रं, तत्सपिण्डानामेकरात्रमेवं द्वितीयपुत्र-पितृमरणे तादृशपुत्रयोरपि त्रिरात्रम्।

स्वमित्रस्य स्वगृहे मरणे त्रिरात्रमितरत्र त्वेकरात्रम्। एकग्रामे श्रोत्रिय-मरणे ग्रामिणामेकरात्रम्। यजमानगृह ऋत्विङ्मरणे यजमानस्य

त्रिरात्रमितरत्र मरणे त्वेकरात्रमेवं यजमानमरण ऋत्विजोऽपि। वेदमधीयानः शिष्यो गुरुकुलमधिवसँश्चेद्गुरोः संस्कारं करोति, तदा तस्य दशाहादिसम्पूर्णाशौचं भवति, संस्काराकरणे तु त्रिरात्रम्। यथाह मनुः—
गुरोः प्रेतस्य शिष्यस्तु पितृमेधं समाचरन्। प्रेतहारैः समं तत्र दशरात्रेण शुध्यति ॥ पितृमेधः=श्मशानकर्म। गुरुलक्षणमाह याज्ञवल्क्यः—
"स गुरुर्यः क्रियाः कृत्वा वेदमस्मै प्रयच्छति।"

'यो गर्भाधानाद्या उपनयनपर्यन्ताः क्रिया यथाविधि कृत्वाऽस्मै तत्तत्संस्कारशालिने ब्रह्मचारिणे वेदमुपदिशति स गुरु'रिति। तदर्थमाह मिताक्षरायाम्। गुर्वाचार्य-पत्नी-मरणे गुर्वाचार्यपुत्रमरणे वा गुरुकुलस्थितस्य शिष्यस्य त्रिरात्रम्, गुर्वाचार्य-गृहस्थितस्य शिष्यस्य मरणे गुर्वाचार्ययोस्त्रिरात्रम्। समानब्रह्मचर्ययोरेकस्माद् गुरोरधीयानयोरन्यतरस्य मरणेऽन्यतरस्यैकरात्रं यत्किञ्चित्पाठ-पर्यन्तं यः सहाध्यायी तन्मरण एकाहः। स्वतन्त्रस्य स्वकर्मनिष्ठस्य तु महीपतेर्मरणे प्रजानामेकाहोरात्रमस्वतन्त्रस्य स्वकर्मनिष्ठस्य तु तस्य मरणे तासामेकाहमेकरात्रं वा। आहिताग्नेः पूर्णाशौचाभ्यन्तरेऽस्थिदाहे पर्णन(श)र-दाहे वा सर्वेषां सपिण्डानां शेषैरेवाहोभिः शुद्धिस्तदनन्तरं तु दाहदिनमारभ्य शववदाशौचम्—"आहिताग्निश्चेत्प्रवसन् म्रियेत पुनः संस्कारं कृत्वा शववच्छौचं कुर्यात्" इति गौतमीयात्।

अनाहिताग्नेरस्थिदाहे पर्णनरदाहे वा प्रागगृहीतसम्पूर्णाशौचयोः पत्नीपुत्रयोः स्वस्वजात्युक्तं सम्पूर्णाशौचं, गृहीताशौचयोस्त्वशौचकालव्यपगमोत्तरं दाहदिनात्त्रिरात्रम्। एतच्च पत्नी-संस्कारे पत्युः, सपत्नी-संस्कारे सपत्न्या अपि तुल्यं वेदितव्यम्। इतरसपिण्डानान्तु यथाक्रमं त्रिरात्रं स्नानमात्रञ्च, व्यवहारस्त्वत्रापि बलवान्। पर्णनरदाहादि-प्रक्रिया तु प्रसङ्गात्प्रागेव ( १५ पृष्ठे ) निर्दिष्टाऽस्माभिः।

उदक-दानं पिण्ड-दानञ्चौर्ध्वदेहिकं कर्म तत्रोत्कृष्टजातीयौर्ध्वदेहिक-कर्म्म-करणे मृतकजात्युक्तं सम्पूर्णमशौचं तदपगमे च कृच्छ्रत्रयं प्रायश्चित्तं कार्यम्, निकृष्टजातीयौर्ध्वदेहिक-कर्म्म-करणेऽशौचन्तु प्राग्वदेव, कृच्छ्रत्रये च द्वैगुण्यम्।

यस्य द्विजस्य गृहे पाणिगृहीती स्त्री परपूर्वा तिष्ठति तस्य दान-प्रति-

ग्रह-होमादौ, योऽकर्मण्यता-प्रयोजक-दीर्घरोगग्रस्तो, यो धनलोलुपतया-ऽऽत्म-पुत्र-दार-धर्मादिकदर्थनपूर्वकं धनं सञ्चिनोति, यः सर्वदर्णग्रस्तो, यश्चूडाकरणोपनयनादिद्विजातिसंस्काररहितो, यो मूर्खो गायत्रीशून्यो, यो भार्या-वशीकृतात्मा, यो व्यसनाऽऽसक्तचित्तो, यः पराधीनतया निजकर्त्त-व्यापतृदेवकर्म्मकरणादक्षमो, यश्च श्रद्धाया दानाद्वा पराङ्मुखः स्यात्तस्य तस्य मरणान्तमेवाशौचम्—

> अन्यपूर्वा गृहे यस्य भार्या स्यात्तस्य नित्यशः ।
> अशौचं सर्वकार्येषु गृहे भवति सर्वदा ॥
> व्याधितस्य कदर्यस्य[1] ऋणग्रस्तस्य सर्वदा ( चैव हि ) ।
> व्यसनाऽऽसक्तचित्तस्य पराधीनस्य नित्यशः ॥
> श्रद्धात्यागविहीनस्य भस्मान्तं सूतकं भवेत् ।

इत्याद्यत्रि-दक्ष-बृहत्पाराशरादि-स्मृतेः ॥

## अथाऽशौचसङ्करः ।

### तत्र ब्रह्मपुराणम्—

> आद्यभागद्वयं यावत्सूतकस्य तु सूतके ।
> द्वितीये पतिते चाऽऽद्यात्सूतकाच्छुद्धिरिष्यते ॥
> अत ऊर्ध्वं द्वितीयात्तु सूतकान्ताच्छुचिः स्मृतः ॥

अशौचसङ्करे हि प्रथमाशौचप्रथमदिनसाङ्कर्ये प्रथमो भागः, द्वितीय-दिनात्क्षौरोपान्त्य(नवमादि) दिनपर्यन्तसाङ्कर्ये द्वितीयः, क्षौराहोरात्राधि-करणकसाङ्कर्ये तृतीयः, क्षौराहरात्रिशेषेऽरुणोदयात्सूर्योदयं यावत्साङ्कर्ये च चतुर्थ इत्येतेषु चतुर्षु भागेषु सूतकस्याद्यभागद्वयं यावद् द्वितीये सूतके-ऽशौचे ( सजातीये ) पतिते सति आद्यात्=प्रथमात् सूतकात्=अशौ-चात् प्रथमं सूतकमपेक्ष्य शुद्धिरिष्यत इति प्रथमकारिकार्थः। शिष्टं स्पष्टम् । सूतकपदमशौचमात्रपरम्। 'सूतकस्य तु सूतके' इत्यस्य 'सजाती-याशौचस्य सजातीयाशौच इत्यर्थस्ततश्च सम्पूर्णजननाशौचस्य पूर्वार्द्धे तत्समानदिनव्यापकद्वितीयजननाशौचे, सम्पूर्णमरणाशौचस्य पूर्वार्द्धे

---

1. "आत्मानं धर्मकृत्यञ्च पुत्रदारांश्च पीडयन् । यो लोभात्सञ्चिनोत्यर्थान् स कदर्य इति स्मृतः ॥" इति स्मृतिः ।

तत्समानदिनव्यापकद्वितीयमरणाशौचे वा पतिते सति पूर्वाशौचस्यैवाव-शिष्टैर्दिवसैरतीतैः शुद्धिर्न त्वशौचवृद्धिरित्येकस्मिन्नेवाह्नि तिथौ चोभयोः पृथक् पृथक् क्षौरादिकर्म[1] भवतीति तत्त्वम् । सम्पूर्णाशौचञ्च "शुध्येद्विप्रो दशाहेन द्वादशाहेन भूमिपः । वैश्यः पञ्चदशाहेन शूद्रो मासेन शुध्यति" इत्यादिमन्वादिवचनबलाद्दशाह-द्वादशाह-पञ्चदशाह-मासात्मकं ब्राह्म-णादिक्रमेण ज्ञेयम् ।

प्रथमाशौचोत्तरार्द्धप्रथम( षष्ठादि )दिनात्क्षौरोपान्त्या( नवमाद्य )-होरात्रपर्यन्तं सजातीयसम्पूर्णाशौचपाते द्वितीयाशौचव्यपगमादेव शुद्धिः । इयमेव समानदिनव्यापकसजातीयतृतीयाद्यशौचपातेऽपि गतिरूहनीया ।

यदि तु मातृमरणोत्तरं पितृमरणं तदाऽशौचस्य पूर्वार्द्धे परार्द्धे वा "मातर्यग्रे प्रमीतायामशुद्धौ म्रियते पिता । पितुः शेषेण शुद्धिः स्यान्मातुः कुर्यात्तु पक्षिणीम् ॥" इति स्मृतेर्न पूर्वशेषेण शुद्धिः, किन्तु पितृमरण-दिनगणनयैव सम्पूर्णमशौचं याप्यम् , पितृमरणनिमित्ताशौचमध्ये मातृ-मरणे तु पूर्वाशौचं सम्पूर्य तदुपरि पक्षिणीं क्षपयेत् । पक्षिणी च दिनद्वय-सहिता रात्री रात्रिद्वयसहितं वा दिनमित्यवोचम् ।

क्षौराहोरा( दशमाद्यहोरा )त्राधिकरणकसजातीयसम्पूर्णाशौचान्तरो-पनिपाते तु "रात्रिशेषे दिनद्वयेन प्रभाते च दिनत्रयेण" इति विष्णु-वचनस्थरात्रिशेषपदस्य रात्रिः शेषो यस्येत्यर्थपरतया सर्वैर्व्याख्या-तत्वेन तद्( क्षौर )दिनोत्तरं दिनद्वयेनातीतेन शुद्धिः, 'उदयात्प्राक् चतस्रस्तु नाडिका अरुणोदयः' इति स्कन्दोक्तमनुसृत्यारुणोदयानन्तरस्य सूर्योदयात्प्राग्वर्त्तिनो दण्डचतुष्टयात्मकस्य समयस्य प्रभातपदेन रत्नाकरा-दिभिर्व्याख्यातत्वात्तस्मिन् स्वस्वजात्युक्तसम्पूर्णाशौचक्षौराहप्रभाते तत्स-

---

१. न च पौराणिकत्वात् "आद्यभागद्वयम्" इति वचनमश्रद्धेयमिति नायमशौच-निर्णय आदरणीय इति वाच्यम् , "मन्वत्रिविष्णुहारीतयाज्ञवल्क्योशनोऽङ्गिराः । यमा-पस्तम्बसंवर्त्ताः कात्यायनबृहस्पती ॥ पराशरव्यासशङ्खलिखिता दक्षगौतमौ । शाता-तपो वसिष्ठश्च धर्मशास्त्रप्रवर्त्तकाः ॥" इत्यनेन स्मृतिकृन्मूर्द्धन्यैर्महर्षिभिर्याज्ञवल्क्यादिभिः धर्मशास्त्रप्रवर्त्तकत्वेन व्यासस्य मुखत उपादानाद्बहूनां कर्मणां स्मृत्यन्तरानुक्तानां पौरा-णिकवचनैरेव व्यवहारस्य दृष्टत्वाच्च ।

जातीयसम्पूर्णाशौचान्तरोपनिपाते च सूर्योदयानन्तरं त्रिरात्रव्यपगमेन शुद्धिरर्थात्क्षौराहोत्तरं दिनद्वयमतिवाह्य तृतीये दिन उभयोः क्षौरादि कर्म, चतुर्थदिन आद्यश्राद्धम्, पञ्चमदिने च सपिण्डनान्तं कर्म पृथक् पृथक् करणीयमेवं तादृगपराशौचपातेऽपि।

द्वितीयाशौचवर्द्धितयोस्तयोर्द्व्यहत्र्यहयोर्मध्ये पुनः सजातीयसम्पूर्णाशौचान्तरपाते द्व्यहत्र्यहाशौचयोर्लघुत्वाद् गुरुतरपश्चिमाशौचव्यपगमेनैव शुद्धिः—"अघानां यौगपद्ये तु ज्ञेया शुद्धिर्गरीयसा" इति स्मृतेः। अत्र अघानाम् = पापानामशौचरूपाणामिति यावत्। यौगपद्ये=समकालप्राप्तौ। गरीयसा = गुरुतरेण बहुकालव्याप्तेन। उशनसाऽप्युक्तम्—"स्वल्पाशौचस्य मध्ये तु दीर्घाशौचं भवेद्यदि। न पूर्वेण विशुद्धिः स्यात्स्वकालेनैव शुध्यति" यमेनापि—"अघवृद्धिमदाशौचं पश्चिमेन समापयेत्।"

तादृशद्वितीयाशौचेन वर्द्धितयोस्तयोर्द्व्यहत्र्यहाशौचयोर्मध्ये चेत्समानदिनव्यापकं तदल्पदिनव्यापकं वा तृतीयं खण्डाशौचमापतति, तदा तस्य तयोरेवान्तःपातो न तु वृद्धिः। प्रथमसम्पूर्णाशौचाद्यश्राद्धदिने श्राद्धसंकल्प–पाकारम्भाभ्यां प्रागुदयानन्तरं समानदिनव्यापकसजातीयद्वितीयादिसम्पूर्णाशौचसद्भावे त्वशौचसङ्कराभावेन तस्य द्वितीयाशौचस्य न ह्रासः, किन्तु तद्दिनादेव स्वस्वजात्युक्तदिनसंख्यया परिगणनमत एव पूर्वमृतश्राद्धाधिकारिणस्तद्दिने तादृशद्वितीयाशौचवार्त्तानुपलब्धौ श्राद्धादिकं कर्त्तव्यम्, आद्यश्राद्धकरणोत्तरं तदुपलब्धौ मासिकादिसपिण्डनान्तं द्वितीयाशौचिन आद्यश्राद्धदिने कार्यमाद्यश्राद्धादपि प्रागेव तद्वार्त्तोपलब्धौ तु द्वितीयाशौचिन एव क्षौरादिसपिण्डीकरणान्तकालोऽनुसरणीयः। "देये पितॄणां श्राद्धे वै अशौचं जायते यदि। अशौचे तु व्यतीते वै तेषां श्राद्धं विधीयते।" इत्यृष्यशृङ्गवचनात्। अत्र शय्यादानादि न भवतीति द्वैतनिर्णये वाचस्पतिमिश्राः। व्यवहारात्तु भवत्येव। आद्यश्राद्धदिने श्राद्धसङ्कल्प-पाकारम्भाभ्यां पश्चात्तादृशसम्पूर्णाशौचान्तरोप (लब्धौ) स्थितौ तु पूर्वमृतस्य सङ्कल्पितं तदाद्यश्राद्धं तद्दिने कर्त्तव्यमेव, "व्रतयज्ञविवाहेषु श्राद्धे होमेऽर्चने जपे। आरब्धे सूतकं न स्यादनारब्धे तु सूतकम्॥ आरम्भो वरणं यज्ञे संकल्पो व्रतजापयोः। नान्दीश्राद्धं विवाहादौ श्राद्धे पाकपरिष्क्रि( क्रि )या। निमन्त्रणन्तु वा श्राद्ध आरम्भः स्यादिति

श्रुतिः॥" इति राघवभट्टधृतविष्णुवचनात्। सूतकमशौचमात्रमत्र। मासिकादिकन्तु द्वितीयाशौचिन आद्यश्राद्धदिने, तस्यासङ्कल्पितत्वात्। "शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते।" इति प्रागुक्तस्मरणाच्च। एवं 'न व्रतिनां व्रते' इति विष्णुवचनादारब्धे व्रतेऽन्तरा सूतके मृतके च सत्यपि तस्याऽऽरब्धस्य समाप्तिः कार्यैव, "बहुकालिकसंकल्पो गृहीतश्च पुरा यदि। सूतके मृतके चैव व्रतं तन्नैव दुष्यति॥" इति विष्णूक्तेरेव। मदनरत्ने तु "पूर्वसङ्कल्पितं यच्च व्रतं सुनियतव्रतैः। तत्कर्त्तव्यं नरैः शुद्धं दानार्चनविवर्जितम्॥" इति। कौर्म्मेऽपि—"काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके। तत्र काम्यं व्रतं कुर्यादानार्चनविवर्जितम्॥" इति। अत्र काम्यत्वोक्तेरेतत्सर्वं वचनजातं काम्यव्रतपरमेव न नित्यव्रतपरमिति गौडमतम्।

श्राद्धारम्भेऽन्नपाकश्च सपिण्डेनैव कर्त्तव्य इत्याह कल्पतरौ देवलः—"तथैवामन्त्रितो दाता प्रातः स्नातः सहाम्बरैः। आरभेत नवैः पात्रैरन्नं श्राद्धे सबान्धवः॥" इति। अत्र हि सहकारितया बान्धवस्यैवोपादानम्। सहाम्बर—इत्यनेन द्वितीयवस्त्रग्रहणं द्योत्यते। नग्नत्वप्रतिषेधेनैवैकवस्त्रत्वप्राप्तेः। एकवस्त्रत्वञ्च "सव्यादंसात्परिभ्रष्टकटिदेशधृताम्बरः। एकवस्त्रं तु तं विद्याद्दैवे पित्र्ये च वर्जयेत्॥" इति शातातपोक्तं विज्ञेयम्। प्रकृतमनुसरामः—त्र्यहादिमरणाशौचमध्ये जननानिमित्तकदशाहादिसम्पूर्णाशौचपाते त्वल्पदिनव्यापकेनापि मरणाशौचेनैव शुद्धिः। "मरणोत्पत्तियोगे तु गरीयो मरणं भवेत्।" इति वचनात्। त्र्यहादिखण्डाशौचमध्ये त्र्यहादिसमकालाशौचान्तरपाते द्वितीयाशौचापगमेन शुद्धिः। अल्पदिनव्यापकेन जननमरणान्यतराशौचेन सह तदधिकदिनव्यापकजननमरणान्यतराशौचस्य साङ्कर्य्ये पूर्वोत्पन्नं परोत्पन्नं वाऽधिकदिनव्यापकमेवाशौचं सजातीयं प्रबलीभवति। इत्थञ्च मृतके मृतकं, सूतके सूतकं, मृतके सूतकं, सूतके मृतकमिति चतुर्षु सङ्कीर्णाशौचस्य भेदेषु समन्यूनाधिकपातभेदात्प्रत्येकं त्रैविध्येन द्वादशविधत्वं पर्यवस्यति।

अथान्तर्दशाहाशौचम्—सम्पूर्णाशौचस्य त्रिरात्रादिखण्डाशौचस्य वा मध्ये तद्वार्त्ताश्रुतौ तदवशिष्टैरेवाहोभिः शुद्धिस्तदुत्तरं षण्मासाभ्यन्तरे तद्वार्त्ताश्रुतौ पुत्रादीनां सपिण्डानां त्रिरात्रेण, त्रिरात्राद्यसम्पूर्णाशौचिनामसपिण्डानां स्नानेन, तदनन्तरं नवममासाभ्यन्तरे तद्वार्त्ताश्रुतौ पुत्रा-

दीनां तेषां पक्षिण्या[1], नवममासादूर्ध्वं यावत्तद्वार्त्ताश्रुतौ तेषामेकाहोरात्रेण, वर्षानन्तरं तच्छ्रुतौ तु स्नानोदकदानाभ्यामेव शुद्धिः। "विगतं तु विदेशस्थं शृणुयाद्यो ह्यनिर्दशम्। यच्छेषं दशरात्रस्य तावदेवाशुचिर्भवेत्॥ अतिक्रान्ते दशाहे तु त्रिरात्रमशुचिर्भवेत्। संवत्सरे व्यतीते तु स्पृष्ट्वैवापो विशुध्यति॥" इत्यादिमन्वादिवचनेभ्यः। षष्ठमासोत्तरं त्रिरात्रादिखण्डाशौचवार्त्तायामशौचाभावः। यत्र तु मरणमात्रं निश्चयेन श्रुतं तिथिमासादिकञ्च नावगतं तत्र श्रवणदिनादारभ्यैव स्वस्ववर्णानुरूपं सम्पूर्णाशौचमनुष्ठेयम्। निर्दहनाधिकारोक्तदेशान्तरमृतस्य पित्रादेरपि—

देशान्तरमृतः कश्चित्सगोत्रः श्रूयते यदि।
न त्रिरात्रमहोरात्रं, सद्यः स्नात्वा शुचिर्भवेत्॥
बाले देशान्तरस्थे च पृथक्पिण्डे च संस्थिते।
सवासा जलमाप्लुत्य शुद्धो भवति मानवः॥

इति पराशर-मनुस्मृतिभ्यां सद्यःशौचमेव सन्तिष्ठते। सद्यःशौचस्थले चाधिकारिणे सूर्योदयात्प्रागेव मरणवार्त्ता देया, सूर्योदयोत्तरञ्च श्राद्धाधिकारी दशगात्रपिण्डान्दत्त्वाऽऽद्यश्राद्धं सम्पाद्य क्षौरं कुर्यान्मासिकादिसपिण्डीकरणान्तञ्च तदुत्तरदिन इति सम्प्रदायः। अत एवासगोत्रकृत्रिमपुत्रादिकर्तृकश्राद्धे समुपस्थितेऽधिकारिणोऽशौचाभ्यन्तरे वार्त्तामदत्त्वाऽऽद्यश्राद्धदिने सूर्योदयात्प्रागेव वार्त्तादानेन तथा व्यवहारो मैथिलानामन्यथा मृतस्य सम्पूर्णाशौचलोपापत्तेश्च। जननाशौचेऽशौचाभ्यन्तरवार्त्तायां मरणाशौचाभ्यन्तरवद्व्यवस्था, तदनन्तरवार्त्तायान्त्वशौचाभावः।

यदि जननाशौचे मरणाशौच मरणाशौचे वा जननाशौचमापतेन्मृतश्राद्धाधिकारिणी च प्रसूतैव स्यात्तदा "सूतकाद् द्विगुणं शावं[2] शावात् द्विगुणमार्त्तवम्[3]। आर्त्तवात् द्विगुणं सूतिः" इति वृद्धात्रिस्मृतिबलेन प्रातिस्विकत्वा[4] (स्वस्वप्रतिभवत्वा) ज्जननाशौचमेव प्रबलम्भवतीति पुत्रजन्मनि तज्जन्मदिनाद्विंशे[5] दिने, कन्याजन्मनि तज्जन्मदिनात्त्रिंशे दिने तया श्राद्धा-

---

१. दिनद्वयसहिता रात्री रात्रिद्वयसहितं दिनं वा पक्षिणी। २. शवसम्बन्ध्यशौचम्। ३ ऋतु (रजोयोग) सम्बन्ध्यशौचम्। ४. स्वं स्वम्प्रति प्रतिस्वं, प्रतिस्वं भवं प्रातिस्विकम् = स्वस्वम्प्रतिभवमित्यर्थः। ५. विंशत्यादिभ्यस्तमडन्यतरस्यामित्यनेनात्र तमट् तु वैकल्पिकत्वान्न।

धिकारिण्या ब्राह्मणादित्रैवर्णिकया प्रसूतया क्षौरकर्म्म कारयित्वा तदुत्तरदिने वृषोत्सर्गवर्जमाद्यश्राद्धं तदपरदिने च मासिकादिसपिण्डीकरणान्तं कर्मजातं करणीयम् । वृषोत्सर्गो हि स्त्रीकर्तृकेऽनुपनीतब्राह्मण–क्षत्रिय–वैश्यकर्तृकेऽविवाहितशूद्रकर्तृके च श्राद्धे प्रतिषिद्धोऽस्तीति वृषोत्सर्गनिर्णये प्रतिपादितम् । प्रसूता श्राद्धाधिकारिणी शूद्रा चेत्पुत्रकन्यकयोरुभयोर्जन्मनि मासिकमेवाशौचमित्यविशेषात्त्रिंश एव दिने क्षौरमितरद्यथापूर्वम् ।

रजस्वलायाः–"दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति ।" इति मिताक्षराधृतस्मृते रजोयोगात्पञ्चमे दिने देव–पितृकर्म्माधिकाराच्छ्राद्धाधिकारिणी चेन्मरणाशौचस्य सप्तमाद्दिवसादेकादशं दिवसं यावच्छ्राद्धारम्भात्प्राग् ब्राह्मणी, नवमाद्दिवसात्त्रयोदशं दिवसं यावच्छ्राद्धारम्भात्प्राक् क्षत्रिया, द्वादशाद्दिवसात्षोडशं दिवसं यावच्छ्राद्धारम्भात्प्राग् वैश्या, सप्तविंशाद्दिवसादेकत्रिंशत्तमं दिवसं यावच्छ्राद्धारम्भात्प्राग् शूद्रा रजस्वला स्यात्तदा रजोदर्शनदिनतः पञ्चमेऽहनि क्षौरक्रियां कृत्वा तदुत्तरदिने आद्यश्राद्धं तत्परदिने च सपिण्डीकरणान्तं सब्राह्मणभोजनं कर्म्म कुर्यान्न तु तदशौचाभ्यन्तरेऽपि "सव्रणः सूतकी मृषी मत्तोन्मत्तरजस्वलाः । मृतबन्धुरबन्धुश्च वर्ज्या अष्टौ स्वकालतः ॥" इत्यनेन मध्ये वर्ज्यत्वस्मृतेः । पञ्चमेऽहनी–ति रजोनिवृत्तिकालस्योपलक्षणम् । उशनसा त्वत्र विशेषो दर्शितः—"ज्वराभिभूता या नारी रजसा च परिप्लुता । कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्म्मणा ॥ चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् । सा सचैलाऽवगाह्यापः स्नात्वा स्नात्वा पुनः स्पृशेत् ॥ दश द्वादशकृत्वो वा आचामेच्च पुनः पुनः । अन्ते च वाससां त्यागस्ततः शुद्धा भवेच्च सा ॥ दद्याच्छक्त्या ततो दानं पुण्याहेन विशुद्ध्यति । इति । आद्यश्राद्धकरणानन्तरं तद्दिने श्राद्धकर्त्री चेद्रजस्वला तदा सा तदार्त्तवदिनात् पञ्चमेऽहनि मासिकादिसपिण्डनान्तं कर्म्म कुर्यात् । रजस्वलायाः सप्तदशदिनाभ्यन्तरे पुना रजःसद्भावे सद्यःशौचम्, अष्टादशेऽहनि रजःसद्भाव एकाहोरात्रम्, एकोनविंशे दिनद्वयम्, विंशाद्दिनादूर्ध्वन्तु दिनत्रयम् । तदाहात्रिः—"रजस्वला यदि स्नाता पुनरेव र [illegible]

स्वला । अष्टादशदिनादर्वागशुचित्वं न विद्यते ॥ एकोनविंशतेरर्वागेकाहं स्यात्ततो द्व्यहम् । विंशत्प्रभृत्युत्तरेषु त्रिरात्रमशुचिर्भवेत् ॥ इति । पराशरेण त्वातुरमात्रेऽयं विधिरुक्तः—"आतुरे स्नान उत्पन्ने दशकृत्वोह्यनातुरः । स्नात्वा स्नात्वा स्पृशेदेनं ततः शुद्ध्येत्स आतुरः ॥" इति । मृताया मातुरशौचमध्ये पितुर्म्मरणे पितुः शेषेण शुद्धिः, मृतस्य पितुरशौचमध्ये मातरि मृतायां पित्रशौचान्ते मातुः पक्षिणी मधिकां क्षपयेत् । आत्मघातादिनिमित्तके पितृमरणे तु तज्जन्याशौचाभावान्न तदुत्तरमृताया मातुः पक्षिणीवृद्धिरिति केचित् ।

पतिशवेन सहैकचितामारुह्य मृतायाः स्त्रिया नाशौचवृद्धिः, किन्तु तन्त्रेण पत्यशौचसमाप्त्यैव शुद्धिः । दिनान्तरेऽनुगमनेन मृताया विभिन्नचितादग्धायास्तु पत्यशौचोत्तरं पक्षिणीवृद्ध्या शुद्धिः । पत्यशौचव्यपगमानन्तरं पत्न्यन्वारोहणे तु तत्पुत्रादेस्त्र्यहाशौचम् ।

कन्या-पुत्र-यमलोत्पत्तौ प्रसूतायाः सर्ववर्णाया मासमशौचं, पित्रादीनां तु यथोक्तं स्वस्वजात्यनुकूलम् । जननप्रयुक्ततदशौचमध्ये तयो[2]: कन्यामरणे शूद्रभिन्नायाः प्रसूतायाः सद्यःशौचं, पुत्रमरणात्तु यथाप्रागुक्तम् । प्रसूता शूद्रा चेत्प्रथमजातमरणेन शुद्धिर्न परजात-मरणेन, पित्रादीनां सपिण्डानान्तूभयत्र परजातमरणादेव शुद्धिः ।

## अथ रोदनाशौचम् ।

तत्र मृतस्य शूद्रस्यास्थिसञ्चयनाभ्यन्तरे तद्गृहे गत्वा रोदितुर्द्विजस्य त्रिरात्रमितरत्र त्वहोरात्रम् । अस्थिसञ्चयनादूर्ध्वं मासाभ्यन्तरे मृतशूद्रगृहे रोदितुर्द्विजस्य सचैलस्नानपूर्वकमहोरात्रमाशौचम् । मृतस्य शूद्रस्य

१. रजस्वलाशरीरस्था तदितराऽऽतुरशरीरस्था च दुष्टविद्युत् सद्यः कृतस्नानायास्तत्स्पर्शिकाया अरजस्वलायाः स्त्रियास्तथैव कृतस्नानस्य तदातुरस्पर्शकस्यानातुरस्य पुंसः शरीरम्प्रविशति, जलमज्जनेन च तच्छरीरतो जलम्प्रविशतीत्येवं दश द्वादशकृत्वः स्नायं स्नायं दूषिताङ्गस्पर्शपूर्वकजलमज्जनेन सर्वस्या अपि दुष्टविद्युतो जले प्रवेशात्सर्वे विशुद्धा भवन्ति । जलस्य विद्युदाकर्षकत्वमाधुनिकेनापि विज्ञानेन सिद्धम् । स्पर्शास्पर्शविधौ प्रमाणमेतत् ।

२. यमल( सहजात )योर्मध्य इत्यर्थः ।

बन्धुभिः सार्द्धं नीरोदनं विलपतो ब्राह्मणस्याहोरात्रम्। मृतवैश्य-क्षत्रिययोर्गृहे रोदितुर्द्विजस्य द्व्यहाशौचम् मृतविप्रगृहेऽस्थिसञ्चयनात्प्राग् रोदितुर्द्विजस्यैकाहाशौचम्। शूद्रस्य तु सर्वत्र नक्ताशौचमेव।

मृतकाशौचानुवृत्तौ यदि कश्चित्पश्चान्मूल्यं गृहीत्वा शवदाहं कुर्यात्तदा शवदाहस्यात्यधिकाशौचप्रवर्त्तकतया तन्निमित्तकाशौचसमाप्त्यैव शुद्धिः। विना मूल्यं किञ्चित्सम्बन्धवशाच्छवदाहमात्रकरणे तु त्रिरात्रमात्रेडितमेव।

शवस्पर्शे त्वह्निकृते नक्षत्रदर्शनाद्रात्रिकृते च सूर्यदर्शनाच्छुद्धिः। एतच्च सजातीयशवविषयम्, असजातीयशवस्पर्शे तु तत्सजातीयोक्तमेवाशौचम्। अस्पृश्यतानिवृत्तिस्तु विशेषानुक्तौ कर्म्माशौचत्रिभागकालेनैवेति न विस्मर्त्तव्यम्।

## अथ सदेशस्थाशौचम्।

सदेशश्च प्रागुक्तपारिभाषिकदेशान्तरलक्षणविरहितो देशस्तत्र मृतस्य स्वजात्युचिताशौचकालोत्तरं श्रवणादिनादारभ्याधोनियमेनाशौचम्प्रवर्त्तत इतीदमप्यतिक्रान्ताशौचमेव। तत्र दशाहादिपूर्णाशौचिनः सदेशे मृतस्य दशाहोत्तरं षण्मासं यावन्मरणश्रवणे त्रिरात्रं, तदुत्तरं नवममासं यावत्पक्षिणी, ततो वर्षं यावदेकरात्रं, तदुत्तरं स्नानमात्रमिति महामहोपाध्यायो मैथिलो रुद्रधरः। अत्रत्यविकल्पो विस्तरभयादनुपयोगाच्च नोपन्यस्तः। खण्डाशौचिनान्त्वत्र सद्यःशौचमेव।

मरणमासादेरज्ञानदशायां तु श्रवणदिनमारभ्य स्वस्वजात्युक्तं दशाहादिसम्पूर्णाशौचमेवावतिष्ठते। एतच्च प्रागुक्तं सर्वमशौचं मरणवज्जननेऽपि तुल्यम्—

"यथेदं शावमाशौचं सपिण्डेषु विधीयते। जननेऽप्येवमेव स्यान्निपुणं शुद्धिमिच्छताम्"॥ इति मनोरित्यलमत्रातिप्रसङ्गेन॥ "राज्ञां पुरोहितोऽमात्यः शुद्धिस्तस्य तदाश्रया"। इत्याहतुः शङ्खलिखितौ। अस्य अमात्यस्य नृपति-प्रतिनिधितया नृपतेरशौचे पुरोहितस्याशौचाभावान्नृपतेः शान्तिकं पौष्टिकञ्च कर्म्म पुरोहितेन कर्त्तव्य'मित्यर्थ इति हारलतादयः। व्यवहारोऽपि राजस्थानादावितथमेवास्ति।

---

## अथाद्यश्राद्धनिर्णयः ।

तत्राशौचान्तद्वितीयदिनकृत्यम् । तत्रादौ ब्राह्मणनिमन्त्रणं यथा—रात्रौ स्वगृहे गोमयोपलिप्तायां भूमौ ब्राह्मणमुदङ्मुखमुपवेश्य पातितवामजानुरपसव्येन दक्षिणामुखः प्रेतमुद्दिश्य 'ॐ गतोऽसि दिव्यलोकं त्वं कृतान्तविहितात्ययः । मनसा वायुभूतेन विप्रे त्वाहं नियोजये ॥" इति पठित्वा पुष्पचन्दनताम्बूलानि ब्राह्मणाय दत्त्वा तद्दक्षिणं जानु स्पृष्ट्वा 'ॐ अस्यां रात्रावमुकगोत्रस्य पितुरमुकप्रेतस्य श्व आद्यश्राद्धसम्पादनाय भवन्तं ब्राह्मणमहमामन्त्रये' इत्यनेनामन्त्रयेत् । ब्राह्मणेनापि 'ओम् आमन्त्रितोऽस्मि' इत्युक्तः 'ओम् अक्रोधनेन शुचिना सततं ब्रह्मवादिना । भवितव्यञ्च भवता मया च श्राद्धकारिणा ॥ सर्वायासविनिर्मुक्तेन कामक्रोधोज्झितेन च । भवितव्यञ्च भवता श्वस्तने श्राद्धकर्मणि ॥" इति ब्राह्मणं सम्बोध्य पठेत्, ब्राह्मणेनापि 'निर्विघ्ना रजनी चेत्स्यात्करिष्यामि तदाऽखिलम् ।' इत्युक्तः 'ओम् इदं पाद्य'मिति पाद्यं समर्प्य तत्प्रणम्य च प्रेतमुद्दिश्य तिलतैलेन जानुपर्यन्तं विप्रपादौ प्रक्षालयेदेवमेव प्रेतायाः स्त्रिया अपि श्राद्धे आत्मन एवोद्देश्यत्वाद्गतोऽसीत्यस्याविकृतस्यैव तत्रापि पाठ इति । मत्स्यपुराणम्—

"अशौचान्तद्वितीयेऽह्नि शय्यां दद्याद्विलक्षणाम् ।
काञ्चनं पुरुषं तद्वत्फलवस्त्रसमन्वितम् ॥
सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः ।
वृषोत्सर्गञ्च कुर्वीत देया च कपिला शुभा ॥"

विलक्षणां = जीवितावस्थोपयुक्तयथाशक्तिवस्त्रताम्बूलाऽऽस्तरणादिविशिष्टाम् । तद्वत् = शय्यावत् यद्वा तथेत्यर्थः । केचित्काञ्चनं पुरुषमित्येतत् "प्रेतप्रतिमां पुरुषाकृति"मिति व्याचक्षते, तेषां स्त्रीश्राद्धे वैषम्येण काञ्चनपुरुषदानानापत्तिर्दोषस्तस्माच्छय्यावद्विलक्षण एवायं काञ्चनपुरुषोऽपि न प्रेतप्रतिकृतिः । आभरणपदं करणल्युडन्तं भूषणपदञ्च भावल्युडन्तमित्यपौनरुक्त्यम् । शय्यादिदानानां विश्वजिन्न्यायेन स्वर्गप्राप्तिः फलं कल्प्यते, तथा च जैमिनिः—"स स्वर्गः स्यात्सर्वान् प्रत्यविशिष्टत्वात् ।"

वृषोत्सर्गस्यापीत्थमिदमेव फलमिति केचित् । वस्तुतस्तु विश्वजिन्न्यायमपोह्यात्र[1] वृषोत्सर्गे "एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ।

---

१. वस्तुतस्त्वत्र विश्वजिन्न्यायानवतार एव, तथाहि—यत्र फलं विशेषतो न दृश्यते

स मुच्यते प्रेतलोकात्स्वर्गलोकञ्च गच्छति ॥" इत्यर्थवादरूपस्मृत्युक्ता प्रेतलोकविमुक्तिपूर्वकस्वर्गलोकप्राप्तिः फलं रात्रिसत्रवत्तथा हि—त्रयोदशरात्रादिसाध्यरात्रिसत्रविधौ कस्यचिदपि फलस्याश्रुतेः ।

"प्रतितिष्ठन्ति हवा एते य एता रात्रीरुपयन्ति, ब्रह्मवर्चस्विनोऽन्नादा भवन्ति य एता उपयन्ति ।"

इति तदीयार्थवादस्थप्रतिष्ठाब्रह्मवर्चस्वितादिरूपमेव फलं कल्प्यते । यथा वा—"स्वाध्यायोऽध्येतव्यः" इति स्वाध्यायाध्ययनविधेर्यथाऽदृष्टार्थत्वपक्षे—"यदृचोऽधीते पयसः कू[1](कु)ल्या अस्य पितॄन् स्वधा अभिवहन्ति पय आहुतिभिरेव तद्देवांस्तर्पयति ते पितरो देवाश्चैनमध्येतारं तृप्ता आयुरादिभिस्तर्पयन्ति ।" इति ब्रह्मयज्ञजपाध्ययनस्यार्थवादं नित्याध्ययनेऽतिदिश्य तत्रस्थघृत कू(कु) ल्यादिप्राप्तिः फलं कल्प्यते ॥सिद्धान्ते च—

"लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना ।" इति न्यायमाश्रित्य "दृष्टे तु नादृष्टम्" इति सूत्रेण पुरुषार्थानुशासनेऽस्य स्वाध्यायाध्ययनस्याक्षरप्राप्तिस्तद्द्वारकमर्थज्ञानं च दृष्टमेव फलं निर्णीतमित्यन्यदिति, एवञ्च प्रेतलोकविमुक्तिपूर्वकस्वर्गलोकप्राप्तिर्वृषोत्सर्गस्य फलं निर्विवादमत एव कतिपयश्राद्धपद्धतिषु वृषोत्सर्गसङ्कल्पवाक्ये तथैवोल्लेखोऽपि दृश्यते । ये मीमांसका अर्थवादगतफलातिदेशं नेच्छन्ति तन्मते विश्वजिन्न्यायेन स्वर्ग एव फलमिति, तन्मते "स्वर्गकामः" इत्युक्तिरेव संगताऽत ए[3]व स्वाध्यायाध्ययनविधिफलचिन्ताप्रकरणस्थे—

"घृतकू(कु)ल्याद्यतिदेशः स्वर्गकल्पनं वा" इति ।

पुरुषार्थानुशासनपूर्वपक्षसूत्रे पक्षान्तरमुपन्यस्तमिति सूक्ष्मेक्षिकयावेक्षणीयं प्रेक्षावद्भिस्तदेवं 'स्वर्गकामः' इत्येतावन्मात्रस्यापि सङ्कल्पवाक्ये

---

न वा कथञ्चित् श्रूयते निष्फलत्वे च प्रवृत्त्यनुपपत्तिर्यथा—'विश्वजिता यजेत' इत्यादौ तत्रैव तदवसरोऽत्र त्वेतदीयार्थवादवाक्ये फलं दृष्टमेवेति ।

१. कूलमर्हन्तीति कूल्या महानद्य इति शतपथब्राह्मणव्याख्यातारः ह्रस्वोकारघटितपाठे तु 'कुल्याल्पा कृत्रिमा सरित्' ।

२. अर्थवादवाक्यानां प्ररोचनामात्रात्मकत्वात् ।

३. आर्थवादिकं फलातिदेशं केचिदिच्छन्ति केचिन्नेत्यत एव ।

निर्वोढुं शक्यत्वे तन्निरासाय सक्तु-रज्जु-बन्धन-प्रयासः केषाञ्चिद्वि- दुषां मुधैवेति प्रतीमः। यदपि "प्रेतलोकविमुक्तिपूर्वकस्वर्गलोकगमन- कामः" इत्येव सङ्कल्पवाक्ययं युक्तं 'स्वर्गलोकञ्च गच्छति' इति तदीयार्थ- वादवाक्यानुसारादिति श्राद्धरत्नटिप्पण्यां वैयाकरणकेसरिणस्तदप्यस- मीचीनं गमन-प्राप्त्योरनर्थान्तरत्वादिति कृतमतिधावनेन। वृषोत्सर्गे श्रेया- न्नीलो वृषस्तल्लक्षणं फलञ्चोक्तं मत्स्यपुराणे—

चरणानि मुखं पुच्छं यस्य श्वेतानि गोपतेः।
लाक्षारससवर्णश्च तं नीलमिति निर्दिशेत्॥
वृष एव स मोक्तव्यो नैव धार्यो गृहे भवेत्।
तदर्थमेषा चल(र)ति लोके गाथा पुरातनी॥
गौरीं वा प्युद्वहेत्कन्यां नीलं वा वृषमुत्सृजेत्।

"एवं वृषं लक्षणसन्नियुक्तं गृहोद्भवं क्रीतमथापि राजन्।
मुक्त्वा न शोचेन्मरणं महात्मा मोक्षे गतिञ्चाहमतोभिधास्ये"॥ इति।

चत्वारि चरणानि मुखं पुच्छञ्च यस्य गोपतेः श्वेतानि तदितरदखिलमङ्गं लाक्षारस( लाही )सदृशं तं नीलं जानीयात्स वृषो मोक्तव्यस्त्यक्तव्य एव गृहे नैव धार्य इति पूर्वसार्द्धश्लोकान्वयः। एवकारश्चात्राभिन्नक्रमः। ईदृशवृषोत्सर्गपक्षे वृषोत्सर्गसङ्कल्पवाक्ये 'मोक्षकाम' इति योज्यं 'मोक्षे गति'मिति मोक्षफलश्रुतेः। अत्रैव रुद्रधरोपाध्यायाद्युक्तेरपि तात्पर्यं न तु वृषत्वमवच्छिद्य, नीलवृषमुपक्रम्यैव हि 'एवं वृषं लक्षणसंनियुक्तम्' इति मोक्षफलप्रतिपादकवाक्यावतारः। एवञ्च "मोक्षश्च नीलवृषोत्सर्गे तत्तल्लक्षणवृषोत्सर्गे[1] वा" इति केषाञ्चिदुक्तिरयुक्तैव नीलवृषालाभे—

वर्णतस्ताम्रकपिलो ब्राह्मणस्य प्रशस्यते।
स्निग्धरक्तेन वर्णेन क्षत्रियस्य प्रशस्यते॥
काञ्चनाभेन वैश्यस्य कृष्णेनाप्यन्त्यजन्मनः।

इति स्मृत्युक्तो ब्राह्मणादिवर्णक्रमेण वृषो ग्राह्यः। अन्त्यजन्मनः= शूद्रस्य। ईदृशवृषोत्सर्गस्य वृषभस्य तु शब्देन[2] पितरः सपितामहाः।

---

१. 'वर्णतस्ताम्रकपिल' इत्यादिना ब्राह्मणादिजातिभेदेन भिन्नभिन्नलक्षणेत्यर्थः।

२. उत्सर्गोत्तरं यथेष्टाहारविहारादिजमदातिशयेनापस्किरमाणस्य वृषो यस्य

मोदमानाः ( वर्तमानाः ) प्रदृश्यन्ते स्वर्गलोके न संशयः ॥ जलं प्रविश्य लाङ्गूलैर्यत्तोयं वहते वृषः। दशवर्षसहस्राणि पितरस्तेन तर्पिताः ॥" ( सरोजकलिकाधृतस्मृतिः ) "सहस्ररत्नपात्रेण कनकेन यथाविधि। तृप्तिस्तु या पितॄणां वै सा वृषेण समाप्यते ॥" ( श्राद्धरत्नधृतस्मृतिः ) इत्याद्युक्तमप्यार्थवादिकं फलमवगन्तव्यम्। तमध्यापयीतेति विधिवाक्यस्थतच्छब्देन तत्प्रकरणोक्तोपनीताष्टवर्षादिब्राह्मणादित्रैवर्णिकस्यैव ग्रहणेनानुपनीतत्रैवर्णिकबालस्य स्त्रियाश्चोपनयनाभावहेतुकाद्वेदेऽनधिकाराद्वृषोत्सर्गस्य च "एतयैवोत्सृजेरन्" इति पारस्करवचनानुरोधेन ऋङ्मन्त्रपाठपूर्वकत्वावश्यकत्वाद्वृषोत्सर्गेऽनधिकारः, शूद्रस्य तु "कृष्णेनाप्यन्त्यजन्मनः" इति विशिष्य वृषविशेषोपदेशादग्न्याधाने वर्षासु रथकारस्येवाधिकारः 'एतयैवोत्सृजेरन्' इति-वचनाच्च, तत्र हि एतयैवेत्यस्य 'ऋचैवे'त्यर्थः। ब्राह्मणद्वारकस्तु रुद्राध्यायादिवैदिकमन्त्रपाठः प्रोक्तपारस्करवचनबलाच्चोत्सर्गमात्रं स्वकर्तृकऋङ्मन्त्रपाठेनेति व्यवहारसिद्धा पद्धतिः। स्त्रीशूद्रयोर्वेदानधिकारप्रपञ्चस्तु मत्कृतसायणीयर्ग्वेदभाष्यभूमिकाटीकायामवलोकनीयः। मतान्तराणीह विस्तरभयादनुपयोगाच्च नोपन्यस्तानि। अयञ्च द्विजदम्पतिपूजां कृत्वा कार्यः "सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः। वृषोत्सर्गञ्च कुर्वीत" इति मात्स्ये सम्पूज्येति क्त्वाश्रुत्या वृषोत्सर्गस्य द्विजदम्पतिपूजनानन्तर्यप्रतीतेः। अत एव शय्यादानादिवद् द्विजदम्पतिपूजनस्य न प्राधान्यमिति वृषोत्सर्गाङ्गतैवेति तत्सद्भाव एव शय्यादानादिना सह वृषोत्सर्गसमुच्चायकस्य वृषोत्सर्गञ्चेति चकारस्य स्वरसाच्च। अस्तु वा कथञ्चिदनङ्गता, तथापि समानकर्तृकयोः पूर्वकाले इति पूर्वकालार्थे विहितस्य क्त्वाप्रत्ययस्य वृषोत्सर्गाभावे तत्पूर्वकालार्थाभावादसङ्गतिः कथं वार्यतामिति सर्वथा वृषोत्सर्गाकरणे द्विजदंपतिपूजनमपि नैवेति वाचस्पति-वर्द्धमान-नरहरि-देवनाथ-वटेश्वरादिस्वरसो

---

दैनन्दिनः शब्दस्तेन न त्वतिसन्तप्तयाङ्कन्या ( दगनीसे ) भूयोभूयोऽङ्कनदाहवेदनया यश्चीत्कारस्तेन। जलं प्रविश्य लाङ्गूलैरित्युत्तरवाक्येनापि वृषहर्षफलस्यैव भङ्गया प्रतिपादनात्, प्रचलितोऽङ्कनकालिकशब्दव्यवहारस्तु गड्डलिकाप्रवाहाल्लोभमूलकत्वाद्वेति प्रतीयते। १. वृषोत्सर्गः।

मोदमानाः ( वर्तमानाः ) प्रदृश्यन्ते स्वर्गलोके न संशयः॥ जलं प्रविश्य लाङ्गूलैर्यत्तोयं वहते वृषः। दशवर्षसहस्राणि पितरस्तेन तर्पिताः॥" ( सरोजकलिकाधृतस्मृतिः ) "सहस्ररत्नपात्रेण कनकेन यथाविधि। तृप्तिस्तु या पितृणां वै सा वृषेण समाप्यते॥" ( श्राद्धरत्नधृतस्मृतिः ) इत्याद्युक्तमप्यार्थवादिकं फलमवगन्तव्यम्। तमध्यापयीतेति विधिवाक्यस्थतच्छब्देन तत्प्रकरणोक्तोपनीताष्टवर्षादिब्राह्मणादित्रैवर्णिकस्यैव ग्रहणेनानुपनीतत्रैवर्णिकबालस्य स्त्रियाश्चोपनयनाभावहेतुकाद्वेदेऽनधिकाराद्वृषोत्सर्गस्य च "एतयैवोत्सृजेरन्" इति पारस्करवचनानुरोधेन ऋङ्मन्त्रपाठपूर्वकत्वावश्यकत्वाद्वृषोत्सर्गेऽनधिकारः, शूद्रस्य तु "कृष्णेनाप्यन्त्यजन्मनः" इति विशिष्य वृषविशेषोपदेशादग्न्याधाने वर्षासु रथकारस्येवाधिकारः 'एतयैवोत्सृजेरन्' इति-वचनाच्च, तत्र हि एतयैवेत्यस्य 'ऋचैवे'त्यर्थः। ब्राह्मणद्वारकस्तु रुद्राध्यायादिवैदिकमन्त्रपाठः प्रोक्तपारस्करवचनबलाच्चोत्सर्गमात्रं स्वकर्तृकऋङ्मन्त्रपाठेनेति व्यवहारसिद्धा पद्धतिः। स्त्रीशूद्रयोर्वेदानधिकारप्रपञ्चस्तु मत्कृतसायणीयऋग्वेदभाष्यभूमिकाटीकायामवलोकनीयः। मतान्तराणीह विस्तरभयादनुपयोगाच्च नोपन्यस्तानि। अयञ्च द्विजदम्पतिपूजां कृत्वा कार्यः "सम्पूज्य द्विजदाम्पत्यं नानाभरणभूषणैः। वृषोत्सर्गञ्च कुर्वीत" इति मात्स्ये सम्पूज्येति क्त्वाश्रुत्या वृषोत्सर्गस्य द्विजदम्पतिपूजनानन्तर्यप्रतीतेः। अत एव शय्यादानादिवद् द्विजदम्पतिपूजनस्य न प्राधान्यमिति वृषोत्सर्गाङ्गतैवेति तत्सद्भाव एव शय्यादानादिना सह वृषोत्सर्गसमुच्चायकस्य वृषोत्सर्गञ्चेति चकारस्य स्वरसाच्च। अस्तु वा कथञ्चिदनङ्गता, तथापि समानकर्तृकयोः पूर्वकाले इति पूर्वकालार्थे विहितस्य क्त्वाप्रत्ययस्य वृषोत्सर्गाभावे तत्पूर्वकालार्थाभावादसङ्गतिः कथं वार्यतामिति सर्वथा वृषोत्सर्गाकरणे द्विजदंपतिपूजनमपि नैवेति वाचस्पति-वर्द्धमान-नरहरि-देवनाथ-वटेश्वरादिस्वरसो

---

दैनन्दिनः शब्दस्तेन न त्वतिसन्तप्तयाङ्कन्या ( दगनीसँ ) भूयोभूयोऽङ्कनदाहवेदनया यश्चीत्कारस्तेन। जलं प्रविश्य लाङ्गूलैरित्युत्तरवाक्येनापि वृषहर्षफलस्यैव भङ्ग्या प्रतिपादनात्, प्रचलितोऽङ्कनकालिकशब्दव्यवहारस्तु गड्डलिकाप्रवाहाल्लोभमूलकत्वाद्वेति प्रतीयते। १. वृषोत्सर्गः।

दक्षिणपार्श्वे चक्रेण तत्सजातीयवामपार्श्वे शूलेन" इति सुगतिसोपान-लेखनञ्च प्रमाणतयोपन्यस्य व्यवहारानुरोधेन तत्रत्यदक्षिणवामशब्दयो-र्लक्षणया तादृशस्यैवाऽर्थस्य द्वैतनिर्णयादौ प्रतिपादनात्। पुरोवर्त्तिन्येव चरणद्वयेऽङ्कनं प्रथमोपस्थितत्वादिति वाचस्पतिमिश्रोल्लेखो व्यवहार-विरुद्धत्वान्नाचर्यते लोकैः।

कातीयश्रौतसूत्रे यद्यपि वृषोत्सर्गे दक्षिणा न श्रूयते तथापि—"होतु-र्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च" इति कण्वशाखीयविष्णुवचनेन 'सर्व-शाखाप्रत्ययमेकं कर्मे'ति न्यायात्कातीयकल्पेऽपि तदन्वयात्तत्कल्पवद्भि-रपि दक्षिणा कार्यैव। एतच्छ्रुतदक्षिणाबाधभयादेव वृषोत्सर्गे यज-मानभिन्न एव होतेति सम्प्रदायः। अयं वृषोत्सर्गः काम्यतया यद्यशौ-चान्तद्वितीयदिनातिरिक्तेऽपि समये चिकीर्षितस्तदा "तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते" इति मृतप्रथमाब्दमध्ये निषेधस्मृतेस्तदनन्तरं कार्त्तिक्यां चैत्र्यामाश्विन्यां वा कार्यः—"कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाऽऽश्वयुजस्य मध्ये गवां सुसमिद्धमग्निं कृत्वा" इति कात्यायनपार-स्कराद्युक्तेः। अत्र रेवत्यामाश्वयुजस्य मध्य इति सामानाधिकरण्येना-न्वेति। अत एव—

"अथ चैत्र्यां वृषोत्सर्गः कार्त्तिक्यां वा प्रयत्नतः।
कर्तव्यस्त्वथ रेवत्यां त्रिभिर्वर्णैर्द्विजातिभिः॥"

इति स्मृत्या सहाविरोधस्तत्र रेवत्यामित्यस्याश्वयुज्यामित्यर्थात्। मृतप्रथमाब्दोत्तरं करणादेव मातृकापूजापूर्वकमाभ्युदयिकं तत्रावश्यं कर्त्तव्यं तस्येष्टत्वादब्दाप्राप्तौ तु "सहपिण्डक्रियां कृत्वा कुर्यादभ्युदयं ततः" इति स्मृत्यापि प्रतिषिद्धमेव। इह वचने 'सहपिण्डक्रियां कृत्वे'ति समानकर्तृ-ताप्रतीतेरुक्तवचनादाब्दमध्येऽपि तत्कर्त्तव्यमेव, तथैव केशवमिश्रादिभि-र्व्याख्यातत्वाद्व्यवहाराच्च।

द्विजदम्पति-पूजनस्य तु 'अशौचान्तद्वितीयेऽह्नि' इत्युक्त्या विहित-त्वादाद्यश्राद्धदिनकर्त्तव्ये वृषोत्सर्गे सत्येव कर्त्तव्यत्वम्। कार्त्तिक्यामपूप-त्रयदानं कृत्वा तदारम्भः कार्य इतीतरत्र विस्तरः। 'आद्यश्राद्धे अशौचान्त-द्वितीयेऽह्नि' इत्युल्लेखे प्रमाणन्तु 'मासपक्षतिथीनाञ्च निमित्तानाञ्च

दक्षिणपार्श्वे चक्रेण तत्सजातीयवामपार्श्वे शूलेन" इति सुगतिसोपान-लेखनञ्च प्रमाणतयोपन्यस्य व्यवहारानुरोधेन तत्रत्यदक्षिणवामशब्दयो-र्लक्षणया तादृशस्यैवाऽर्थस्य द्वैतनिर्णयादौ प्रतिपादनात्। पुरोवर्त्तिन्येव चरणद्वयेऽङ्कनं प्रथमोपस्थितत्वादिति वाचस्पतिमिश्रोल्लेखो व्यवहार-विरुद्धत्वान्नाचर्यते लोकैः।

कातीयश्रौतसूत्रे यद्यपि वृषोत्सर्गे दक्षिणा न श्रूयते तथापि—"होतु-र्वस्त्रयुगं दद्यात्सुवर्णं कांस्यमेव च" इति कण्वशाखीयविष्णुवचनेन 'सर्व-शाखाप्रत्ययमेकं कर्मे'ति न्यायात्कातीयकल्पेऽपि तदन्वयात्तत्कल्पवद्भि-रपि दक्षिणा कार्यैव। एतच्छ्रुतदक्षिणाबाधभयादेव वृषोत्सर्गे यज-मानभिन्न एव होतेति सम्प्रदायः। अयं वृषोत्सर्गः काम्यतया यद्यशौ-चान्तद्वितीयदिनातिरिक्तेऽपि समये चिकीर्षितस्तदा "तथैव काम्यं यत्कर्म वत्सरात्प्रथमादृते" इति मृतप्रथमाब्दमध्ये निषेधस्मृतेस्तदनन्तरं कार्त्तिक्यां चैत्र्यामाश्विन्यां वा कार्यः—"कार्त्तिक्यां पौर्णमास्यां रेवत्यां वाऽऽश्वयुजस्य मध्ये गवां सुसमिद्धमग्निं कृत्वा" इति कात्यायनपार-स्कराद्युक्तेः। अत्र रेवत्यामाश्वयुजस्य मध्य इति सामानाधिकरण्येना-न्वेति। अत एव—

> "अथ चैत्र्यां वृषोत्सर्गः कार्त्तिक्यां वा प्रयत्नतः।
> कर्त्तव्यस्त्वथ रेवत्यां त्रिभिर्वर्णैर्द्विजातिभिः॥"

इति स्मृत्या सहाविरोधस्तत्र रेवत्यामित्यस्याश्वयुज्यामित्यर्थात्। मृतप्रथमाब्दोत्तरं करणादेव मातृकापूजापूर्वकमाभ्युदयिकं तत्रावश्यं कर्त्तव्यं तस्येष्टत्वादब्दाप्राप्तौ तु "सपिण्डीकरणं कृत्वा कुर्यादभ्युदयं ततः" इति स्मृत्यापि प्रतिषिद्धमेव। इह वचने 'सपिण्डक्रियां कृत्वे'ति समानकर्तृ-ताप्रतीतेस्तन्मतेनादावब्दमध्येऽपि तत्कर्त्तव्यमेव, तथैव केशवमिश्रादिभि-र्व्याख्यातत्वाद्व्यवहाराच्च।

द्विजदम्पति-पूजनस्य तु 'अशौचान्तद्वितीयेऽह्नि' इत्युक्त्या विहित-त्वादाद्यश्राद्धदिनकर्त्तव्ये वृषोत्सर्गे सत्येव कर्त्तव्यत्वम्। कार्त्तिक्यामपूप-त्रयदानं कृत्वा तदारम्भः कार्य इतीतरत्र विस्तरः। 'आद्यश्राद्धे अशौचान्त-द्वितीयेऽह्नि' इत्युल्लेखे प्रमाणन्तु 'मासपक्षतिथीनाञ्च निमित्तानाञ्च

## अथ सामान्योत्सर्गनिर्णयः ।

स्कान्दे—"उपानद्द्वयञ्छत्रं छत्रं सूक्ष्मवासांसि चन्दनम् । जलं पात्राणि देयानि तथा पुष्पगृहाणि च ॥ पात्रकाणि च चित्राणि द्राक्षा-रम्भफलानि च" इति । रामायणे—"ततः पितरमुद्दिश्य ब्राह्मणेभ्यो ददौ धनम् । महार्हाणि च रत्नानि गाश्च वाहनमेव च ॥ यानानि दासी-दासांश्च वेश्मानि सुमहान्ति च । भूषणानि च मुख्यानि राज्ञस्तस्यौर्द्ध्व-देहिके" इति । एतच्च दानं वित्तशाठ्यवर्जं श्राद्धस्थलास्थदानतुल्यञ्च कार्यं, तथैव शिष्टाचारात् । काञ्चनपुरुषदानन्तु श्राद्धस्थलायामेव ॥

---

## अथ मलमासश्राद्धादिनिर्णयः ।

तत्र मलमासस्वरूपमाह हारीतः—"इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः । अग्नीषोमौ स्मृतौ मध्ये समाप्तौ पितृसोमकौ ॥ तमतिक्रम्य तु रविर्यदा गच्छेत्कदाचन । आद्यो मलिम्लुचो ज्ञेयः" इति । अस्यार्थः—यत्रेन्द्राग्नियागः स मासादिः सा शुक्लप्रतिपत्, यत्राग्नीषोमयागः स मासमध्यः सा पूर्णिमा, यत्र च पितृसोमयागः स मासान्तः सामावास्येति शुक्लप्रतिपदमारभ्य तदग्रिमामावास्यापर्यन्तं सूर्य्यसंक्रान्त्यभावे मलमास इति । ज्यौतिषे—"गतेऽब्दद्वितये सार्द्धे पञ्चपक्षे दिनद्वये । दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः" इति । एवञ्च द्वात्रिंशन्मासानष्टादशदिनानि चातीत्य मलमासो भवतीति सिद्धम् । अयं पौषे कदापि न भवति, तथा च तत्रैव—"दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित् । नपुंसकत्वं भवति न तु पौषस्य तु क्वचित् ॥" इति । नपुंसकत्वं संक्रमणाभाव-निबन्धनमिति मलमासत्वमित्यर्थः । बृहस्पतिः—

> नित्यनैमित्तिके कुर्यात्प्रयतः सन् मलिम्लुचे ।
> तीर्थस्नानं गजच्छायां प्रेतस्नानं तथैव च ॥
> गर्भे वार्द्धषिकृत्ये च मृतानां पिण्डकर्मसु ।
> सपिण्डीकरणे चैव नाधिमासं विदुर्बुधाः ॥

नित्यं = सन्ध्यावन्दनादि । नैमित्तिकं = ग्रहणादिनिमित्तक-स्नान-

पार्वणादि । तीर्थस्नानमविशेषोक्तमपीह द्वितीयाद्यावृत्तमेव ग्राह्यं, प्रथमावृत्तस्य—"मलिम्लुचे[1] त्वनावृत्तं तीर्थस्नानमपि त्यजेत्" इति बृहस्पतिनैव प्रतिषिद्धत्वात् । तत्र ह्यनावृत्तमित्यस्य प्रथमावृत्तमित्यर्थः । गजच्छाया = गजच्छायायोगनिमित्तकं श्राद्धम् । गजच्छायायोगश्च—

कृष्णपक्षत्रयोदश्यां मघास्विन्दुः करे रविः ।
यदा तदा गजच्छाया श्राद्धे पुण्यमवाप्यते ॥ इति ।
हस्ते सूर्ये स्थिते या तु मघायुक्ता त्रयोदशी ।
तिथिर्वैवस्वती नाम सा छाया कुञ्जरस्य तु ॥

इति च वायुपुराणोक्तप्रकारः । करे = हस्ते । एष च—

"दिवैव योगः शस्तोऽयं न तु रात्रौ कदाचन" ।

इति महाभारतोक्तेर्दिवोद्भव एव ग्राह्यो न रात्र्युद्भवः । अत्र मधुसर्पिर्युक्तपायसेन पावणं कार्यमित्युक्तं ब्रह्मपुराणादौ तत्फलातिशयश्च । प्रेतस्नानं = मरणनिमित्तकं स्नानम् । गर्भो गर्भाधाननिमित्तं कर्म । वार्द्धुषिकृत्यम् = ऋणप्रयोगः । मृतपिण्डकर्माणि = पूरकादिपिण्डदानविधयः । सपिण्डीकरणम् = आद्यश्राद्धादि सपिण्डीकरणान्तं कर्म । एषु विद्वांसो मलमासं प्रतिरोधकं न मन्यन्त इत्यर्थस्तथा च नाधिमासमित्यत्र प्रतिरोधकमिति शेषो यद्वा विदुरित्यस्य गणयन्तीत्यर्थस्तावताऽप्यर्थसाम्यात् । कालादर्शः—

"अब्दोदकुम्भमन्वादिमहालययुगादिषु । श्राद्धं दर्शेऽप्यहरहः श्राद्धसूनादिमासिकम् ॥ मलिम्लुचान्यमासेषु मृतानां श्राद्धमाब्दिकम् । श्राद्धन्तु पर्वदृष्टेषु तीर्थेष्वेव युगादिषु" इति । मलमासेऽपि कार्यमिति शेषः । यत्तु—"संवत्सरातिरेकेण मासो यः स्यान्मलिम्लुचः । तस्मिंस्त्रयोदशे श्राद्धं न कुर्यादिन्दुसंक्षये" ॥ इति ऋष्यश्रृङ्गवचनं तत् "काम्यं नैव कदाचन" इति वचनैकवाक्यतानुरोधात्काम्यदर्शश्राद्धपरम् । "दर्शेऽप्यहरहः श्राद्धं दानञ्च प्रतिवासरम् । गोभूतिलहिरण्यानां मासेऽपि स्यान्मलिम्लुचे" इति मत्स्यपुराणवचनेन नित्यकर्मणां तत्र विधानात् । एकोद्दिष्टादौ विशेषमाह हारीतः—

---

1. मलमासे ।

असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं बुधैः ।
तथैव मासिकं श्राद्धं सपिण्डीकरणं तथा ॥
प्रत्यब्दं द्वादशे मासि कार्या पिण्डक्रिया बुधैः ।
क्वचित्त्रयोदशेऽपि स्यादाद्यं मुक्त्वा तु वत्सरम् ॥

असङ्क्रान्ते = संक्रान्तिरहिते मलमासे इत्यर्थः । क्वचिदिति मलमासवति वर्षे । आद्यमिति द्वादशमासस्य मलमासत्वे मलमासेऽपि प्रथमाब्दिकमित्यर्थः । अत्र मासिकसपिण्डीकरणपदे आद्यश्राद्धस्याप्युपलक्षके । ज्यौतिषे—

जातकर्मणि यच्छ्राद्धं नवश्राद्धं तथैव च ।
प्रतिसंवत्सरश्राद्धं मलमासेऽपि तत्स्मृतम् ॥

नवश्राद्धं = चतुर्थ–पञ्चम–नवमैकादशाहश्राद्धम्—"चतुर्थे पञ्चमे चैव नवमैकादशे तथा । यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते" इति ब्रह्मपुराणात् । केचित्तु—"प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा । नवमैकादशे चैव तन्नवश्राद्धमुच्यते" इति स्मृत्युक्तं नवश्राद्धमाचक्षते । प्रतिसम्वँत्सरश्राद्धं = प्रथमाब्दिकम् । स्मृत्यन्तरम्—"आब्दिकं प्रथमं यत्स्यात्तत्कुर्वीत मलिम्लुचे । चतुर्दशे तु संप्राप्ते कुर्वीत पुनराब्दिकम्" इति । एतदुत्तरार्द्धस्य [ पुनराब्दिकं = द्वितीय–तृतीयादि–वार्षिकं त्रयोदशे मासेऽतीते चतुर्दशेऽर्थाच्चतुर्दशमासाद्यदिने कार्यम् ] इत्यर्थः । एतच्च यस्मिन् वर्षेऽधिमासद्वयपातस्तस्मिन्नेव । तस्मात्प्रथमाब्दिकं मलमासेऽपि कार्यं द्वितीयाद्याब्दिकन्तु शुद्धमास एव ।

"वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृतेऽहनि । मातापित्रोर्न तत्कार्यं व्याघ्रस्य वचनं यथा" ॥ इति मलमासप्रकरणस्थसत्यव्रतवचनञ्च "आब्दिकं प्रथमं यत्स्यात्" इत्यादिप्रागुक्तवचनानुरोधेन द्वितीयाद्याब्दिकपरमेव, अन्यथा "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं बुधैः" इति प्रागुक्तहारीतवचनविरोधस्य दुरुद्धरत्वाच्च । क्षताशौचादिजन्तु द्वितीयाद्याब्दिकमपि मलमास एव कर्त्तव्यम्—"तीर्थस्नानं गजच्छायां प्रेतश्राद्धन्तथैव च । प्रतिसम्वँत्सरश्राद्धमाशौचोत्पतितञ्च यत् ॥ मलिम्लुचेऽपि कर्त्तव्यम्" इत्यादिवचनात् । अशौचपदमत्र क्षताशौचादेरपि सामान्येन बोधकम् ।

मलमासमृतानां पुनर्यदि मलमास एवाब्दिकः कालः स्यात्तदा तत्रैव प्रत्याब्दिकं कार्यम्—

मलमासे मृतानां तु श्राद्धं यत्प्रतिवत्सरम् ।
मलमासेऽपि कर्त्तव्यं नान्येषान्तु कथञ्चन ॥

इति पैठीनसेः । इत्थञ्च—"संवत्सराभ्यन्तरे यद्यधिमासपातो भवति तदा मासिकार्थं दिनमेकं वर्धयेत्" इति विष्णुसूत्रे द्वैतनिर्णयोक्तर्यैकवाक्यताबलात् सम्वत्सरपदस्यैकादशमासपरत्वेन तदभ्यन्तरे मलमासपाते सप्तदशश्राद्धसंकल्पस्त्रयोदशे मासि पूर्णे क्षयाहे वार्षिकञ्च, तथा च परुच्चैत्रशुक्लमृतस्यैषमश्चैत्रस्याधिमासत्वे द्वादशमासतया मासिकवृद्धेरभावाच्चैत्रशुक्लपक्षे मलमास एव प्रथमं वार्षिकश्राद्धमेवमेव परुद्वैशाखकृष्णमृतस्यैषमश्चैत्रकृष्णपक्षे मलमास एव तत् । प्रतिपादितदिशा मलमासस्य शुक्लादित्वेन तद्रीत्या वैशाखकृष्णपक्षस्यापि चैत्रकृष्णपक्षत्वान्मासोल्लेखासङ्गतेरभावेन "मासपक्षतिथीनाञ्चे"ति वचनमपि समञ्जसम् । मलमासमृतानामपीत्थं मासिकवृद्धिरित्यग्रिमवर्षे त्रयोदशमास्येव प्रथमाब्दिकमिति प्राञ्चः ।

अत्र नव्याः—'सम्वत्सराभ्यन्तर' इति विष्णुसूत्रे सम्वत्सरपदस्य द्वादशमासपरत्वमेवाभिधानकोषादिषु दृष्टतया तत्रैव ( द्वादशमासात्मककाल एव ) तद्वृद्धेरिति द्वादशमासाभ्यन्तरेऽधिमासपाते मासिकवृद्धिर्भवतीति श्राद्धे परिगृहीतस्य कृष्णादिमासस्य न काप्युल्लेखासङ्गतिस्त्रयोदशमास्येवाब्दिकसम्पत्तेः । ततश्च तत्रापि सप्तदशपदं योज्यमेव । "असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं बुधैः" इति तु परुच्चैत्रशुक्लप्रतिपदि मृतस्यैषमश्चैत्रस्य मलमासत्वे मलमासशुक्लप्रतिपद्येव प्रथमाब्दिकसम्पादनेन चरितार्थमसमायामेवैतद्वर्षपूर्त्तेरिति वदन्ति ।

गोकुलनाथोपाध्यायास्तु—चैत्रशुक्लपक्षमृतस्य कस्यापि न मासिकवृद्धिः 'संवत्सराभ्यन्तरे' इति विष्णुसूत्रस्थ 'पात' पदसामर्थ्येन पौर्णमास्यन्तक्षणप्रतिपदाद्यक्षणोभयघटितत्वेन सह मध्यमचिह्नसम्बन्धो विवक्षितस्तथा सत्येव मलमाससम्बन्धो व्यवहार्यो न पूर्वापरचिह्नमात्रेण सूत्रस्थपातपदस्यान्यथावैयर्थ्याऽऽपत्तेः अत एव 'इन्द्राग्नी यत्र हूयेते' इति लघुहारीत-वचने व्यावर्त्तकत्वेन मध्यमचिह्नाभिधानं सङ्गच्छते । तेन मल-

मासशुक्लमृतानामेव मासिकवृद्धिर्न तु मलमासकृष्णमृतानाम् । एवञ्चैष-मश्चैत्रकृष्णमृतस्याग्रिमवर्षवैशाखस्य मलमासत्वे सम्वत्सराभ्यन्तरे प्रोक्ताधिमासपाताभावाच्चैत्रकृष्णपक्ष एव प्रथमाब्दिकं न तु द्वितीयवैशाख-कृष्णपक्ष इति न मासोल्लेखासङ्गतिर्न वा विष्णुसूत्रस्थसम्वत्सरपद-स्यैकादशमासोपलक्षकता । एतेनैषमो द्वितीयचैत्रकृष्णपक्षमृतस्याग्रिम-वर्षे वैशाखकृष्णपक्षे प्रथमाब्दिकप्रसक्त्या मासोल्लेखासङ्गतिरित्यपा-स्तम् । तत्र संवत्सराभ्यन्तरे निरुक्तमध्यमचिह्नसम्बन्धाभावादित्याहुरिति तत्कृतमासमीमांसायामेव कणोहत्यावलोकनीयं जिज्ञासुभिः ।

इत्थमत्र पक्षत्रये सत्यपि मैथिलप्रचलितव्यवहारो मध्यममतमनु-सृत्यैव । इदन्तु स्मरणीयम्—मलमासीयशुक्लपक्षमृतस्य मासिकवृद्ध्या-ग्रिमवर्षे तन्मासीयशुक्लपक्षे मरणतिथौ वार्षिकम्; मलमासीयकृष्णपक्ष-मृतस्य तु तदभावेनाग्रिमवर्षे तन्मासीयकृष्णपक्षे तत्तिथावेव तत् अत्रानु-भववैपरीत्यमगत्या मासिकवृद्ध्यवृद्धिभ्यां सोढव्यमिति ।

## अथ मत्स्यमांसनिर्णयः ।

तत्र "समांसो मधुपर्कः" इति श्राद्धमधुपर्कौ प्रक्रम्य गृह्यसूत्रम्—"नियुक्तस्तु यथाश्राद्धे यस्तु मांसं न भक्षयेत् । यावन्ति पशुरोमाणि ताव-न्निरयमृच्छति ॥" इति हारीतशातातपौ ।

"आमन्त्रितस्तु यः श्राद्धे दैवे[1] मांसं समुत्सृजेत् । यावन्ति पशुरो-माणि तावन्निरयमृच्छति ॥" इति यमः । समुत्सृजेत् = त्यजेत् । क्षत्रिय-विषये तु विशेषमाह स एव—"क्षत्रियैस्तु मृगव्येन विधिना यदुपार्जितम् । श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतञ्च यत् ॥" इति । मनुः—

नियुक्तस्तु यथान्यायं यो मांसं नात्ति मानवः ।
स प्रेत्य पशुतां याति सम्भवानेकविंशतिम् ॥
क्रीत्वा स्वयं वाप्युत्पाद्य परोपकृतमेव वा ।
देवान् पितॄन् समभ्यर्च्य खादन् मांसं न दुष्यति ॥
यज्ञार्थं पशवः सृष्टाः स्वयमेव स्वयम्भुवा ।

---

१. 'दैवात्' इति पाठान्तरम् ।

यज्ञस्य भूत्यै सर्वस्य तस्माद्यज्ञे वधोऽवधः ॥
या वेदविहिता हिंसा नियताऽस्मिंश्चराचरे ।
अहिंसामेव तां विद्याद्वेदाद्धर्मो हि निर्बभौ ॥

बभूवुर्हि पुरोडाशा भक्ष्याणां मृगपक्षिणाम् । पुराणेष्वपि यज्ञेषु ब्रह्म-क्षत्र-सवेषु च ॥ यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्यचरत्पुरा" इति । भृत्यानां = भरणीयवृद्धमातापित्रादीनाम् । पैठीनसिः—"श्राद्धे तु मांसमश्नीयाद् यथातिथिनिमित्तके" इति । अतिथिनिमित्तके इति—अतिथ्यर्थमुपात्तमतिथीनां भक्ष्यमित्यर्थः । महाभारते—"हविर्यत्प्रोक्षितं मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि । वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च ॥ अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत् । प्रोक्षिताभ्युक्षितं मांसं तथा ब्राह्मणकाम्यया ॥ पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते । विधिना दैव-दृष्टेन तद्भुक्त्वेह न दुष्यति" इति । मनुविष्णू—असंस्कृतांस्तु मन्त्रैर्वा नाद्याद्विप्रः कथञ्चन । मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः" इति ।

यत्तु—"मुन्यन्नं ब्राह्मणस्योक्तं मांसं क्षत्रियवैश्ययोः । मधुप्रदानं शूद्रस्य सर्वेषाञ्चाविरोधि[1] यत् ॥"

"यस्तु खादति मांसानि ब्राह्मणो वेदवित्तथा । स पच्यते निरालम्बे नरके तेन कर्मणा ॥" "यक्षरक्षःपिशाचान्नं मद्यं मांसं सुराऽऽसवम् । तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः" इत्यादिभिः पुलस्त्यादिवचनैर्ब्राह्मणस्य मांसभक्षणप्रतिषेधस्मरणाद्वैधान्यपि मांसानि ब्राह्मणेतरैरेव भक्षणीयानि सामान्यविशेषन्यायेन तत्तद्वचनस्थद्विजपदस्य क्षत्रियादिपरत्वादिति जल्पन्ति तदरुचिरम्—"असंस्कृतान् पशून्मन्त्रैर्नाद्याद्विप्रः कथञ्चन । मन्त्रैस्तु संस्कृतानद्याच्छाश्वतं विधिमास्थितः ॥ एष्वर्थेषु पशून् हिंसन् वेदतत्त्वार्थविद् द्विजः । आत्मानञ्च पशुञ्चैव गमयत्युत्तमां गतिम्" ॥ "यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः । भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्यचरत्पुरा ॥" इत्यादिमनुविष्णुवचनादिभिर्वैधमांसभक्षणे

---

१. उक्तत्रितयातिरिक्तं विहितमप्रतिषिद्धं वा यदविरोधि कालशाकादि वास्तुकादि च तत्सर्वेषां ब्राह्मणादीनामिति चतुर्थचरणस्यार्थः ।

ब्राह्मणानामप्रतिपदोक्ताधिकारस्मृतेः । वैध-पशुघात-विधानस्य "हविः-शेषञ्च यद् भवेत्" इति मनुवचनबलेन भक्षणपर्य्यन्तं तात्पर्यात् । एवञ्च यस्तु खादतीत्यादीनि प्रागुक्तवचनानि, "मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् । एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः" ॥ "यो यस्य भक्षयेन्मांसं स तस्याश्नाति किल्बिषम् ।" "भुक्त्वा तु मोहान्मांसानि नरः पुष्ट्यर्थमात्मनः ॥ अकृत्वेहात्मनः शुद्धिं तिर्य्यग्योनिषु पच्यते" "आत्मानमात्मकामित्वाज्जीवानां नैव घातयेत् । कष्टं हि व्याड[1]धर्मत्वाज्जीवमांसोपजीवनम्" इत्यादीनि मनु-हारीत-विष्णु-देवलादिवचनानि च वृथामांसभक्षणनिषेधपराण्येवेत्यविवादम् । अत एव—"नियुक्तस्तु यथाश्राद्धे" इत्यादिभिः प्राक् प्रदिपादितैर्हारीतशातातपयमवचनैः श्राद्धादावुपकल्पितस्य मांसस्याभक्षणे निदर्शितो दोषातिशयः सङ्गच्छते ।

"श्राद्धे दद्यात्प्रयत्नेन मांसं[2] दधि तिलांस्तथा" इत्यार्षवचनञ्च । सङ्गच्छते च—"हविर्यत्प्रोक्षितम्मन्त्रैः प्रोक्षिताभ्युक्षितं शुचि । वेदोक्तेन प्रमाणेन पितॄणां प्रक्रियासु च ॥ अतोऽन्यथा वृथामांसमभक्ष्यं मनुरब्रवीत् । प्रोक्षिताभ्युक्षित मांसं तथा ब्राह्मणकाम्यया ॥ अल्पदोषमिह ज्ञेयं विपरीते तु लिप्यते" ॥ "पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते । विधिना देवदृष्टेन तद्भुक्त्वेह न दुष्यति ॥ यथाविधिनियुक्तस्तु यो मांसं नात्ति मानवः । स प्रेत्य पशुतां याति सम्भवानेकविंशतिम्" इत्यादीनि महा-

---

१. व्याडाः = सिंहव्याघ्रादयो हिंस्रजन्तवः ।

२. कलौ पाराशरस्मृतिरिति पूर्वाचार्यैरभिहितमित्यथ च कलौ श्राद्धे मांसं न देयमित्येव युक्ततरं प्रतिभाति । तथा हि पराशरः—"यज्ञाधानं गवालम्भं संन्यासं पलपैतृकम् ( मांसेन पितृश्राद्धम् ) । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥" निगमः—"अक्षता गोपशुश्चैव श्राद्धे मांसं तथा मधु ( मद्यम् ) । देवराच्च सुतोत्पत्तिः कलौ पञ्च विवर्जयेत् ॥" नारदः—"देवराच्च सुतोत्पत्तिर्मधुपर्के पशोर्वधः । मांसदानं तथा श्राद्धे वानप्रस्थाश्रमस्तथा ॥ दत्ताक्षतायाः कन्यायाः पुनर्दानं परस्य च । दीर्घकालं ब्रह्मचर्यं नरमेधाश्वमेधकौ । महाप्रस्थानगमनं गोमेधश्च तथा वधः । इमान् धर्मान् कलियुगे वर्ज्यानाहुर्मनीषिणः ॥" शक्तिसङ्गमतन्त्रे—"यथाश्राद्धविधौ देवि मांसं मुख्यं प्रकीर्तितम् । कलौ तु तन्निषिद्धं स्याद् ब्राह्मणानां महेश्वरि ॥" इति । (सम्पादकः)

भारत-याज्ञवल्क्यादिवचनानि, "नाद्यादविधिना मांसं विधिज्ञोऽनापदि द्विजः। जग्ध्वा त्वविधिना मांसं प्रेत्य तैरद्यते च सः॥ न तादृशं भवत्येनो मृगहन्तुर्मृगार्थिनः। यादृशं भवति प्रेत्य वृथामांसानि खादतः॥ पितृदैवतयज्ञेषु प्रोक्षितं हविरुच्यते। विधिना देवदृष्टेन तद्भुक्त्वेह न दुष्यति" इत्यादीन्यवैधहिंसामात्रप्रतिषेधपराणि मनुविष्णुभारतवचनानि। तस्मात् "गृहेऽपि निवसन् विप्रो मुनिर्मांसविवर्जनात्" 'वर्षे वर्षेऽश्वमेधेन" इत्यादियाज्ञवल्क्यमन्वादिवाक्यानामपि वृथामांसभक्षण एव तात्पर्यमित्यगत्या मन्तव्यम्। अत एव "मांसैरन्या भवेत्तथा" इत्यनेन ब्रह्म-वायुपुराणयोर्माघकृष्णाष्टकाश्राद्धे मांसमेव द्रव्यत्वेनोक्तम्। अत्र मांसैरिति पशोस्तत्रापि छागस्यैव—"यद्युवाल्पतरसंभारः स्यात्तदा पशुनैव कुर्यात्" "छागोऽनादेशे पशुः" इति गोभिलसूत्रगौतमवचनाभ्याम्। यद्युवेति निपातसमुदायो यद्यर्थकः। वनाद्यधिकरणश्राद्धे तु मृगोऽप्यनादेशे। तथा च हरिवंशः—

"इक्ष्वाकुस्तु विकुक्षिं वै अष्टकायामथादिशत्। मांसमानय श्राद्धाय मृगं हत्वा महाबल" इति। 'मृगपक्षिणः' इति प्रोक्तमनुवचने मृगपदञ्च "ज्ञानञ्च तन्मनुष्याणां यत्तेषां मृगपक्षिणाम्" इत्यादिवत् पशुमात्रोपलक्षकं व्यापकधर्मावच्छिन्नवाचकपक्षिपदसाहचर्यादित्यविरोधः। वैधं मांसञ्च पुंसोरेव छागमृगयोः "स्त्रियं न दद्यात्तु बलिं दत्त्वा नरकमाप्नुयात्" इति कालिकापुराणात्, "अवध्याञ्च स्त्रियं प्राहुस्तिर्य्यग्योनिगतेष्वपि" इति स्मरणात्तथैव शिष्टाचारात् "पशुना यजेत" इत्यादिवत् "छागोऽनादेशे" इत्यत्राप्येकत्व-पुंस्त्वयोर्विवक्षणाच्चेत्यास्तां विस्तरः। एवं मत्स्यानामपि—

"यो यस्य मांसमश्नाति स तन्मांसाद उच्यते।
मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत्॥"

इत्यादि मन्वादिवाक्यप्रतिषिद्धो भक्षणविधिर्वैधातिरिक्तविषयक एव बोध्योऽन्यथा—

"पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः। राजीवान् सिंहतुण्डांश्च सशल्कांश्चैव सर्वशः" (मनुः) "सशल्कान्मत्स्यान्न्यायोपपन्नान् भक्ष-

त्" ( हारीतः ) "भक्ष्याः पञ्चनखाः श्वाविद्गोधाः कच्छपशल्लकाः। ाशश्च मत्स्येष्वपि हि सिंहतुण्डकरोहिताः॥" ( याज्ञवल्क्यः ) "राजीवाः सिंहतुण्डाश्च सशल्काश्च तथैव च। पाठीनरोहितौ चापि भक्ष्या मत्स्येषु कीर्त्तिताः॥" ( शङ्खः )

इत्यादिस्मृतीनां गर्भस्रावापत्तेः। न चैवं भक्षणविधिनिषेधयोरु-भयोः शास्त्रसंसततवे "मा हिंस्यात्सर्वा भूतानि" इति श्रुत्या सह "वायव्यं श्वेतमालभेत भूतिकामः", "अग्नीषोमीयं पशुमालभेत" इत्यादिश्रुतीनां प्रवर्तमानो मिथो विरोधो दुष्परिहर इत्याभिः सामान्याया 'मा हिंस्या'-दितिश्रुतेर्बाधः स्यादिति भ्रमितव्यम्, दत्तोत्तरत्वात् 'पूर्वा श्रुतिर्हिंसाया अनर्थहेतुत्वमात्रं बोधयत्युत्तरे च तस्याः ( हिंसायाः ) क्रतूपकारकत्व-मिति विभिन्नविषयतया विरोधाभावादिति साङ्ख्यतत्त्वकौमुद्यां वाच-स्पतिमिश्रैः समाहितत्त्वाच्च।

अत एव—"यं ते मन्थं यमोदनं यन्मांसं निपृणामि ते। ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः" ( अथर्ववेदः १८–४–४२ ) "द्वौ मासौ मत्स्यमांसेन त्रीन् मासान् हारिणेन तु। औरभ्रेणाथ चतुरः शाकुनेन तु पञ्च च॥ षण्मासाँश्छागमांसेन पार्षतेनाथ सप्त वै। शशकूर्मयोस्तु मांसेन मासानेकादशैव तु" (मनुः) "वाध्रीणसस्य मांसेन तृप्तिर्द्वादशवार्षिकी। कालशाक महाशल्काः खड्गलोहाऽऽमिषं मधु॥ आनन्त्यायैव कल्पन्ते मुन्यन्नानि च सर्वशः" ( कूर्मपुराणम् )

इत्यादीनां श्रुतिस्मृतिपुराणादीनां न वैयर्थ्यम्। औरभ्रेण = मेषसम्बन्धिना मांसेन। शाकुनेन = पक्षिसम्बन्धिना। पार्षतेन = श्वेत-बिन्दुयुक्तपृषन्नामकहरिणविशेषस्य मांसेन। वाध्रीणसश्छिन्नाण्डकोषो ( खागर ) इति लोकप्रसिद्धो महाछागविशेषो यो लम्बकर्णः श्वेतवर्णो वृद्धश्च "त्रिपिबन्त्विन्द्रियक्षीणं श्वेतं वृद्धमजापतिम्। वाध्रीणसन्तु तम्प्रा-हुर्याज्ञिकाः पितृकर्म्मणि" इति स्मृतेः। पक्षिविशेषोऽपि वाध्रीणसः— "कृष्णग्रीवो रक्तशिराः श्वेतपक्षो विहङ्गमः। स वै वाध्रीणसः प्रोक्त इत्येषा नैगमी श्रुतिः" इति स्मृतेः। त्रिपिबं = त्रिभिः = मुखेन कर्णा-भ्याञ्च पिबति यस्तम्। विग्रहस्तु—पिबतीति पिबस्त्रिभिः पिबस्त्रिपिब इति।

'पाघ्राध्माधेड्दृशः शः' इति शे 'पाघ्रे ति'-पिबादेशः। कालशाकं प्रसिद्धम्। महाशल्काः = रोहितादयो मत्स्याः। खड्गो गण्डको लोहो लोहितसर्व-शरीरश्छागस्तयोरामिषं = मांसम्। मधु = क्षौद्रम्। मुन्यन्नानि-षष्टिक-नीवारादयः। एतैः क्रियमाणं श्राद्धमनन्तकालपर्यन्तमखिलश्राद्धभागिपितृ-तृप्तिजनकमित्यर्थः। अत एव श्राद्धे देयपदार्थान् प्रक्रम्याह यमः—

"ततो विशदमन्नाद्यं भोजयेत्प्रयतो द्विजान्। अन्नं सूपं घृतं शाकं मांसं दधि पयो मधु॥ धाना(नाँ)श्च मधुसंयुक्ता(नि) इक्षूँश्चैव सगोर-सान्। शर्कराफलमूलञ्च सर्वं दद्यादमत्सरी" इति। अशक्तावाह गृह्यसूत्रम्-"शक्त्या वा" इति; विशिष्टाशक्तौ यथाशक्ति दद्यादित्यर्थः।

अशक्तावपि ब्राह्मणेभ्यो मांस-गोधूमाववश्यभोजयितव्यावुक्तौ—

"विना मांसेन यच्छ्राद्धं कृतमप्यकृतं भवेत्। क्रव्यादाः पितरो यस्मादलाभे पायसादयः", "दरवान्[1] यो द्विजः श्राद्धे दद्यान्नो मांसमु-त्सुकः। स दुरात्मा दुराचारो वेदमार्गस्य दूषकः"..."तस्मात्सर्वप्रय-त्नेन श्राद्धं देयं हि सामिषम्। अभोज्यविप्रान यः श्राद्धे मांसमन्याँ-स्तु भोजयेत्॥ स्वयमश्नाति वा मूढः स याति नरकं ध्रुवम्। श्राद्धे मांसं न यो दद्यान्न वाश्नाति कुतर्कतः॥ नरकार्हावुभौ श्रौत-स्मार्त्तधर्म्मस्य लोप-नात्" इति वृद्धयाज्ञवल्क्य-जातूकर्ण्य-स्कन्दपुराणवचनैः। "अगोधूमञ्च यच्छ्राद्धं कृतमप्यकृतं भवेत्" इत्यत्रिवचनेन च। 'अर्थे देवपितॄणां हि यो हिनस्ति पशून् द्विजः। स यज्ञफलमाप्नोति ते च यान्ति परां गतिम्" इति स्कान्दे च पितृदेवार्थहिंसायाः प्राशस्त्यं स्मर्यते, "स्वार्थमन्नं पचेद्यस्तु यो हिनस्ति वृथा पशून्। एकाकी मिष्टमश्नाति यश्च याति स रौरवम्॥" इति वृथाहिंसानिन्दा च। अत एव च पैठीनसिः-"परमान्नं कालशाकं मधु मांसं घृतं पयः। मुन्यन्नानि तिला विप्राः प्रकृत्या हविरष्टधा॥ शस्तान्यष्टौ तु सर्वेषु युगेषु मुनिसत्तमाः। पितॄणां देवतानाञ्च दुर्लभानि कलाविति" इति कण्ठत एवोक्तवान्। एतेन कलौ मांसवर्ज्यत्वपक्षोऽपि प्रत्युक्तः। देशादिभेदोऽपि न प्रतिबन्धकः—"न युगानां न देशानां न विप्राणां द्विजोत्तमाः। धर्मशास्त्रेषु वै भेदो दृश्यते मांसभक्षणे" इति वृद्धप्रचेतो-

1. आदरवान्।

वचनात्। बृहस्पतिः—"मद्यं मांसं मैथुनञ्च भूतानां लालनं स्मृतम्। तदेव विधिना कुर्यात्स्वर्गं प्राप्नोति मानवः" इति। ईश्वर-संवादेऽपि श्राद्धेतरत्र तद्वर्ज्यत्वमाह—'ब्रह्मचारी यतिर्मांसं त्यजेत्स्त्री पतिना विना। श्राद्धवर्जमथान्योऽपि संत्यजेत्तपसः कृते" इति। 'ब्रह्मचारी, यतिः पति-हीना (विधवा) स्त्री च (नित्यं) मांसं त्यजेत्तपसः कृतेऽन्योऽपि श्राद्धं तरत्र सन्त्यजे'-दिति तदर्थः। तस्मात्सर्वाणि मांस-भक्षण-निषेधवचनानि वृथाभक्षणपराण्येव। तथा चोक्तं स्कान्दे—"यत्र यत्र निषेधो हि श्रूयते मांसभक्षणे। जिह्वालाम्प्रति स ज्ञेयो न सूक्तविधिनाऽश्नतः" इति। श्राद्धनिमन्त्रितकर्तृकतदभक्षणनिन्दा च—

"नियोजितस्तु यः श्राद्धे यज्ञे वापि द्विजाधमः। मांसं नाश्नाति नियं याति वै पशुतां ततः" इति। इदन्तु बोध्यम्—यदा छागादीनालभ्य मांसमुपादित्स्यते तदा प्रथमं मन्त्रेण च्छागादयः प्रोक्षणीया इति। मन्त्रश्च पार्वणेषु 'ओं पितृभ्यस्त्वा जुष्टं प्रोक्षामि' इति, एकोद्दिष्टेषु च पितृभ्य इत्यत्र पित्रे इति परिवर्त्य स एव। अनालम्भपक्षे तु न मन्त्रप्रोक्षणापेक्षेति सिंहादिहतमृगादिमांसं लब्धक्रीतच्छागादिमांसं प्रस्तरावधिहतच्छागादिमांसञ्चामन्त्रप्रोक्षणनिरपेक्षमेव प्रक्षावदुपेक्षणीयमिति संक्षेपः। छागेषु तूपरः प्रशस्तः स च शृङ्गोत्पत्तिकाले जातेऽपि तद्रहित इति 'अश्वस्तूपरोगोमृगस्ते प्राजापत्या' इति श्रुतिव्याख्यायां मयैव सायणर्ग्वेदभाष्यभूमिकाटीकायाम्प्रतिपादितम्।

एषा च मत्स्य-मांस-भक्षण-व्यवस्था चातुर्वर्ण्यसामान्येन बोध्या। किन्तु "आमं शूद्रस्य पक्वान्नं पक्वमुच्छिष्टमुच्यते"[1] इति स्मृतेः शूद्रस्य मांसमप्याममेवेति विशेषः। विस्तरस्तु कल्पतरु-श्राद्धचिन्तामणि-द्वैत-परिशिष्ट-द्वैतनिर्णय-श्राद्धकौमुदी-श्राद्धविवेक-तिथ्यादितत्त्वादिषु द्रष्टव्यः॥

पितृतृप्तिकराण्याह याज्ञवल्क्यः—"हविष्यान्नेन वै मासं पायसेन तु वत्सरम्। मात्स्यहारिणकौरभ्रशाकुनच्छागपार्षतैः॥ ऐणरौरववाराहशाशमांसैर्यथाक्रमम्। मासवृद्ध्याभितृप्यन्ति दत्तैरिह पितामहाः॥ खड्गाऽऽमिषमहाशल्कं मधु मुन्यन्नमेव च। लोहामिषं महाशाकं मांसं वार्ध्रीणसस्य

१. छान्दसोऽत्र नाभावः।

च ।। यद्ददाति गयास्थश्च सर्वमानन्त्यमश्नुते" इति। हविष्यं=तिलव्रीह्यादि। मासं=मासपर्यन्तं, पितरस्तृप्यन्तीत्यग्रिमेणास्यान्वयः। मात्स्येति–मत्स्यसम्बन्धिभिर्म्मांसैरित्यर्थः। औरभ्रैर्मेषसम्बन्धिभिः। पार्षतैः= पृषच्छित्रमृगनाम्ना प्रसिद्धो मृगस्तत्सम्बन्धिभिः। रुरुर्मृगविशेषः। 'साभर'नाम्ना मैथिल्यां प्रसिद्धस्तत्सम्बन्धिभिः। हरिणस्ताम्रमृग एणः कृष्णमृग इत्युभयोर्भेदः "एणः कृष्णमृगो ज्ञेयस्ताम्रो हरिण उच्यते" इत्यायुर्वेदस्मरणात्। खड्गो गण्डकः (गेंडा) इति प्रसिद्धः। महाशाकं 'पटुआ' इति लोकप्रसिद्धम्।

---

## अथ कुशनिर्णयः।

तत्र यज्ञपार्श्वे वाकोवाक्यम्[१]—"कीदृशा यज्ञिया दर्भाः कीदृशाः पाकयज्ञियाः। कीदृशाः पितृदेवत्याः कीदृशा वैश्वदेविकाः।। हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञियाः। समूलाः पितृदेवत्याः कल्माषा वैश्वदेविकाः।। अप्रसूताः स्मृता दर्भाः प्रसूतास्तु कुशाः स्मृताः। अमूलाः कुतपा ज्ञेया इत्येषा नैगमी स्थितिः।। प्रादेशादधिका दर्भास्त्रिपत्रादियुताश्च ये। कुशास्ते याज्ञिकैः प्रोक्ताः स्नानादिषु पवित्रकाः।। दर्भाः किमर्थं दीयन्ते श्राद्धकालेषु किं तिलाः। किमर्थं वेदविच्छ्राद्धे किमर्थं यतिरुच्यते।। रक्षन्ति राक्षसान् दर्भास्तिला रक्षन्ति चासुरान्। वेदविद्रक्षयेच्छ्राद्धं यतीनां दत्तमक्षयम्।।" इति। पवित्रलक्षणमाह छन्दोगपरिशिष्टे— "अनन्तर्गर्भिणं साग्रं कौशं द्विदलमेव च। प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्र चित्।। एतदेव हि पिञ्जल्या लक्षणं समुदाहृतम्। आज्यस्योत्पवनार्थं यत्तदप्येतावदेव तु।। एतत्प्रमाणामेवैके कौशीमेवार्द्रमञ्जरीम्। शुष्कां वा शीर्णकुसुमां पिञ्जलीं परिचक्षते।।" इति। एवञ्च पवित्रं पिञ्जलीत्यनर्थान्तरम्। पिञ्जल्येव च

---

१. प्रश्नोत्तरस्वरूपं वाक्यं वाकोवाक्यं, यथा—"कः स्विदेकाकी चरति क उ स्विज्जायते पुनः। किं स्विद्धिमस्य भेषजं किं स्विदावपनं महत्" इति प्रश्नः, "सूर्य एकाकी चरति चन्द्रमा जायते पुनः। अग्निर्हिमस्य भेषजं भूमिरावपनं महत्" इति च तदुत्तरमिति स्पष्टं वेदे।

दर्भपिञ्जलीत्यपि । सा हि कुशान्तरवेष्टितप्रादेशमात्रसाग्रकुशपत्रद्वयस्व-रूपैवेति सर्वसम्मतम् ।

देवपित्रादिभेदेन कुशपत्रभेदानाह चतुर्विंशतिमतम्—

"द्वे द्वे शलाके देवानां तिस्रस्तिस्रश्च पार्वणे । एकोद्दिष्टे शलाकैका श्राद्धेष्वर्घेषु निःक्षिपेत्" इति । शलाका = पत्रम् । दर्भालाभे दूर्वा–काश-शर-मुञ्ज-श्यामाक-बल्वजादयस्तथा च स्मृतिः—"दर्भाभावे तु काशाः स्युः काशाः कुशसमाः स्मृताः । काशाभावे ग्रहीतव्या अन्ये दर्भा यथोचिताः ॥ दर्भाभावे स्वर्ण-रूप्य-ताम्रैः कर्म्मक्रिया सदा । कुशाकाशशरा दूर्वायवगोधू-मबल्वजाः ॥ सुवर्णं रजतं ताम्रं दश दर्भाः प्रकीर्त्तिताः" इति । गृह्यसूत्रमपि—"पवित्रपाणिर्दद्यात्" इति । पवित्रपाणिः = कुशहस्तः । 'पवित्रे स्थ' इति लिङ्गात्, 'अस्त्री कुशं कुथो दर्भः पवित्र'-मित्यमराच्च पवित्रपदमत्र कुशपरम् । कुशत्रयात्मकं वेणीरूपमुपयमनञ्च वामहस्ते धारयेत् "सव्ये चैव तथा त्रीन् वै बिभृयात्सर्वकर्म्मसु" इति सुमन्तोः । कात्यायनः—"स-पिण्डीकरणं यावदृजुदर्भैः पितृक्रिया । सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद्भ-वेत्" इति । बौधायनोऽपि—"देवानामृजवो दर्भाः पितृणां द्विगुणाः स्मृताः" इति । हारीतः—"पवित्रं ब्राह्मणस्यैव चतुर्भिर्दर्भपिञ्जलैः । एकैकं न्यूनमुद्दिष्टं वर्णे वर्णे यथाक्रमम्" इति । पित्र्यं कर्माधिकृत्य गृह्यसूत्रमपि—"द्विगुणास्तु दर्भा" इति । वामावर्त्तद्विगुणिता मोटकरूपा इति तदर्थः । यमस्तु—"समूलस्तु भवेद्दर्भः पितृणां श्राद्धकर्म्मणि । मूलेन लोकाञ्जयति शक्रस्य तु महात्मनः" इति । व्यासः—"तर्पणादीनि कार्याणि पितृणां यानि कानि चित् । तानि स्युर्द्विगुणैर्दर्भैः सप्तपर्णैर्विशेषतः" इति । 'पिण्डे तूप-(छिन्न) मूल एव "उपमूलं सकृल्लूनं बर्हिः पिण्डेषु शस्यते" इति स्मृतेः । उपेति मूलभागे सकृच्छिन्नं, छिन्नमूलमित्यर्थः । यस्यां तिथौ कुशसंग्रहो भाद्रकृष्णामावास्यायां ततो वर्षं यावत्कुशानां शुद्धिरिति "संग्रहाद्वर्षपर्यन्तं कुशानां शुद्धिरिष्यते" इत्यादिनोक्तमन्यत्र । संग्रहात् = संग्रहदिनमारभ्य ।

भविष्ये—"समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् । शूद्राऽऽनीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः" इति । आहरेत्=आनयेत् । शूद्रानीतैः क्रयक्रीतैरित्यत्र समित्पुष्पकुशादिभिरिति शेषः । समित्पुष्पकुशादिवहन-कर्त्तारं न प्रणमेत् "समित्पुष्पकुशादीनि वहतो नाभिवादयेत्" इति

विष्णुधर्मोत्तरीयात् । आदिना जलदुग्धादिग्रहणम् । अभिवादयेत्=प्रणमेत् । श्राद्धदिने प्रातः स्वयमुत्पाटिता अपि कुशाः प्रशस्ताः । निषिद्धास्तु—चितजाता वर्त्मजाता यज्ञस्तरणाऽऽसनपिण्ड-पितृतर्पणविनियुक्ता अमेध्यलिप्ता नीलीक्षेत्रजाताः कार्पासक्षेत्रजाताश्च । तथा च लघुहारीतः—"पथि दर्भाश्चितौ दर्भा ये दर्भा यज्ञभूमिषु । स्तरणाऽऽसनपिण्डेषु षट् कुशान् ( दर्भान् ) परिवर्जयेत्" इति । शङ्खलिखितौ—"पिण्डे कृतास्तु ये दर्भा यैः कृतं पितृतर्पणम् । मूत्रोच्छिष्टपुरीषञ्च तेषां त्यागो विधीयते" इति । स्मृत्यन्तरेऽपि—"ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृतर्पणे । हता मूत्रपुरीषाभ्यां तेषां त्यागो विधीयते" इति ।

---

## अथ गन्धादिदाननिर्णयः ।

तत्राऽऽह बैजवापः—"तस्योपरि कुशान् दत्त्वा प्रदद्याद्दैवपूर्वकम् । गन्धं पुष्पञ्च धूपञ्च दीपं वस्त्रोपवीतकम्" इति । तस्य=पिण्डस्य । गन्धोऽत्र चन्दनादिस्तथा च स्मृतिः—"चन्दनागरुकर्पूरपद्मकं कुङ्कुमं तथा । कस्तूरिकादयो गन्धाः पितॄणां तुष्टिकारकाः" इति । पुष्पमिति जात्येकत्वादेकवचनं पुष्पाणीत्यर्थस्तानि च मल्लिकाद्रोणादीनि । तथा च ब्रह्माण्डे—"शुक्लाः सुमनसः श्रेष्ठास्तथा पद्मोत्पलानि च । गन्धरूपोपपन्नानि तथा चान्यानि कृत्स्नशः" इति । स्मृतिचन्द्रिका—"मल्लिका मालती श्वेतयूथिका चम्पकं शुभम् । पिण्डीतकं कुङ्कुमञ्च पद्मानि जलजान्यपि ॥ उत्पलादीनि देयानि वर्णगन्धयुतानि च" इति । पिण्डीतकम्=मरुवकम्, 'मरुआ' इति 'मयना' इति वा लोकप्रसिद्धम् । मार्कण्डेयः-"जात्यश्च सर्वा दातव्या मल्लिका श्वेतयूथिका । जलोद्भवानि सर्वाणि कुसुमानि च चम्पकम्" इति । स्मृत्यन्तरमपि-"श्राद्धे जात्यः प्रशस्ताः स्युर्मल्लिका श्वेतयूथिका । तगरं मातुलुङ्गञ्च पितॄणां दत्तमक्षयम्" इति । मातुलुङ्गम्=बीजपूरम् । यद्यपीह जातीप्रदाने विप्रतिपत्तिस्तथा ह्यङ्गिराः-"न जातीकुसुमानि न कदलीपत्रम्" इति । क्रतुरपि—"असुराणां कुले जाता जाती पूर्वपरिग्रहे । तस्या दर्शनमात्रेण निराशाः पितरो गताः" इति । स्मृतिसङ्ग्रहे-षायामपि—"जातिञ्च वर्जयेत्" इति । एवं विप्रतिपत्तौ 'पिण्डदानमात्रेऽयं निषेधो न तु विप्रपूजादावपि इति केचित् । उक्तञ्च वृद्धयाज्ञवल्क्येन—

"कुन्दं शम्भोस्तु नो दद्यान्नोन्मत्तं गरुडध्वजे । पिण्डे जातिञ्च नो दद्यात्" इति । "जातीपुष्पं तथार्कञ्च किंशुकं करवीरकम् । पितृमूर्द्धनि यो दद्यात्स एव पितृघातकः" इति च । अर्कम्='आक' इति प्रसिद्धम् । किंशुकम्= पलाशम् । वस्तुतस्तु पीतजाती( ति )विषयक एवैष निषेधस्तथा च श्राद्धं प्रक्रम्य स्मृतिमञ्जूषायाम्—"शिरीष-बिल्व-धत्तूर-काञ्चनाराटरूषकम् । कर्कञ्च पारिभद्रञ्च पीतां जाति (ती)ञ्च वर्जयेत्" इति । अटरूषकम्-'अडूसा' इति । कर्कम्=क्षुद्रामलकम् । मात्स्ये—"पद्मबिल्वकधत्तूरपारिभद्राटरूषकाः । न देयाः पैतृकेषु" इति । पारिभद्रो निम्बः । तुलसी तु प्रशस्ता तथा च स्मृतिः—"चम्पकं शतपत्रञ्च भृङ्गराजञ्च बालकम् । तुलसी मालतीपत्रं पितॄणां तुष्टिकारकम्" इति । शतपत्रं=कमलम् । बालकं=हिबेरम् । यस्तु स्मृत्यर्थसारे तुलसीनिषेधः स पिण्डार्चनातिरिक्तेऽर्घदानादौ बोध्योऽन्यथा—"तुलसीं भृङ्गराजञ्च अपामार्गं शमीं तथा । पितृमूर्द्धनि यो दद्यात्स याति परमां गतिम्" इत्यनेन वृद्धयाज्ञवल्क्यवचनेन सह विरोधाऽऽपत्तेः । पारिजाते—"जलम्पर्युषितं त्याज्यं पत्राणि कुसुमान्यपि । तुलस्यगस्तिबिल्वानि गाङ्गं वारि न दुष्यति" इति । एतेन तुलस्यादीनि पर्युषितान्यपि ग्राह्याण्येव । तथा चोक्तं ज्ञानमालायाम्—"न पर्युषितदोषोऽस्ति जलजोत्पलचम्पके । तुलस्यगस्तिवकुले बिल्वे गङ्गाजले तथा ॥ न पर्युषितदोषोऽस्ति मालाकारगृहेषु च" इति । पर्युषितदोषाभावेऽवधिमाह स्कान्दे—"पालाशं दिनमेकञ्च पङ्कजञ्च दिनत्रयम् । पञ्चाहं बिल्वपत्रञ्च दशाहं तुलसीदलम्" इति । अत्र वचने 'पर्युषितं न दुष्यती'त्यस्येति शेषः । स्मृत्यन्तरे तु "एकाहं तिष्ठते जाती करवीरमहर्निशम् । जलजं सप्तरात्राणि षण्मासं तुलसीदलम्" इत्यनेन विशेषोदर्शितोऽपि शिष्टाचारविरुद्धत्वादुपेक्षणीयः । पर्युषितश्च पूर्वस्मिन् दिने त्रोटितमुत्तरस्मिन् दिने भवतीति प्रतीतम् । निषिद्धपुष्पाण्याह शङ्खः—"उग्रगन्धीन्यगन्धीनि चैत्यवृक्षभवानि च । पुष्पाणि वर्जनीयानि रक्तवर्णानि यानि च" इति । चैत्यवृक्षभवानि=जीर्णदेवालय-श्मशानालयस्थवृक्षोत्पन्नानि । रक्तवर्णानीति तु जलोद्भवातिरिक्तपराणि जलोद्भवानां तेनापि विधा-

१. 'चैत्यवृक्षोद्भवानि च' इति प्रचुरः पाठः ।

नात्। विष्णुः—"जवादिकुसुमं झिण्टी रूपकाः सकुरुण्टकाः। पुष्पाणि वर्जनीयानि श्राद्धकर्म्मणि नित्यशः" इति। "वर्जयेदुग्रगन्धीन्यगन्धीनि कण्टकिजातानि रक्तानि पुष्पाणि, सितानि सुगन्धीनि कण्टकिजातान्यपि दद्यात्" इति च। जवादि=ओण्ड्रादि ( ओढउल ) इति प्रसिद्धादि। झिण्टी=नीली। रूपकाः=अर्कवर्णाः। अन्यच्च "केशकीटापविद्धानि निशि पर्युषितानि च। स्वयं पतितपुष्पाणि त्यजेदुपहतान्यपि" इति। निशि पर्युषितानि=पूर्वस्यां रात्रौ त्रोटितानि। स्वयं पतितेति–शेफालिका ( शृङ्गार-हार )–बकुलभिन्नानीत्यवगन्तव्यम्। "भूमिस्पृष्टं न गृह्णीयाच्छेफाली-बकुलं विना" इति तत्प्रतिप्रसवोक्तेः। बकुलं='भालसरी' इति मैथिली-प्रसिद्धम्। विष्णुधर्म्मोत्तरीये—"देवोपरि धृतं यच्च वामहस्ते च यद्धृतम्। अधोवस्त्रधृतं यच्च जलेऽन्तःक्षालितञ्च यत्॥ देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम्" इति। अधोवस्त्रमधरीयवस्त्रम्। स्मृत्यन्तरे–स्नानं कृत्वा तु यत्किञ्चित्पुष्पं चिन्वन्ति ये द्विजाः। देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत्" इति।

धूपादौ देयान्याह विष्णुधर्म्मोत्तरीये—"धूपो गुग्गुलु(ल)को देय-स्तथा चन्दनसारजः। अगरुश्च सकर्पूरः सतुरुष्कस्तथैव च" इति। मरीचिः—"चन्दनागरुणी चोभे तमालोशीरपद्मकम्। घृताक्तं मधुनाक्तं च गुग्गुलं (लं) धूपमेव च" इति। तुरुष्कः=सिह्लकः–यावन इति यावत्, 'लोबान' इति लोकप्रसिद्धः। अत्र विशेषमप्याह मरीचिरेव—"तुरुष्कं गुग्गुलञ्चैव घृताक्तं युगपद्दहेत्। घृतं न केवलं दद्याद् दुष्टं वा तृणगुग्गुलम्" इति। तृणगुग्गुलः=सर्जरसः–'धूमन' इति भाषा प्रसिद्धः। कात्यायनः—"श्राद्धे धूपं प्रयत्नेन दशाङ्गं मधुमिश्रितम्। दद्यादगरुजं वापि पद्मकं देवदारुजम्" इति। कस्तूर्यादि तु प्रतिषिद्धमाह विष्णुः–"जीवजञ्च सर्वं न धूपाय" इति। जीवजमिति–जीवो मृगादिस्तज्जं कस्तूर्यादीत्यर्थः।

दीपे विधेयान्याह स्मृत्यन्तरे—"घृतेन दीपो दातव्यस्त्वथवाऽप्यो-षधीरसैः। वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्" इति। मरीचिः—"घृताद्वा तिलतैलाद्वा नान्यद्रव्यात्तु दीपकम्" इति। नान्यद्रव्येति व-सादिनिषेधः। वर्त्तिका चात्र कार्पासादीनाम्। "कौशेयं क्षौमकार्पासं

दुकूलमहतं तथा । श्राद्धेष्वेतानि यो दद्यात्कामानाप्नोति पुष्कलान्" इति प्राशस्त्यस्मृतेः ।

आचमने त्वाह कात्यायनः—"श्राद्धारम्भेऽवसाने च पादशौचे तथाऽर्चने । विकिरे पिण्डदाने च षट्सु चाऽऽचमनं स्मृतम्" इति । एतच्चाचमनं प्राङ्मुखेनोदङ्मुखेनेशानमुखेन वा कार्यम् "प्राङ्मुख उदङ्मुख ऐशान्याभिमुखो वाऽऽचामेत्" इति सिद्धवह्निखनात् । पादक्षालनन्तु सर्वत्र श्राद्धे दक्षिणामुखेनैव कार्यमाह देवलः—"प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेज्जलैः । उदङ्मुखो वा दैवत्ये पैतृके दक्षिणामुखः" इति । एतच्च सर्वं तरङ्गिण्यां सिद्धवह्निखितम्—दक्षिणाभिमुखः पादौ प्रक्षाल्य प्राङ्मुख उदङ्मुखो वा ऐशान्याभिमुखो वाऽऽचामेत्" इति । गायत्रीजपे यद्यपि "उपविश्य जपेद्धीमान् गायत्रीं तदनुज्ञया" इति सामान्याभिधानात्सङ्ख्या नास्ति तथाप्यन्यत्र प्रायेण वारत्रयाभिधानाद्वारत्रयमेव तज्जपः कार्यः । 'एकत्र निर्णीत' इति न्यायात्सुगतिसोपाने त्रिरिति स्पष्टमुक्तेश्च ।

अथाऽऽसनदानक्रमो यथा श्राद्धसूत्रधृतस्मृतौ—

"पितॄणामासनं दद्याद्वामपार्श्वे कुशान् सुधीः । दक्षिणे चैव देवानां सर्वदा श्राद्धकर्म्मणि" इति । न्युब्जीकृतं पात्रमादक्षिणादानं नोद्धरेदित्याह शौनकः—"नोद्धरेत्प्रथमं पात्रं पितॄणां यच्च पातितम् । आवृतास्तत्र तिष्ठन्ति पितरः शौनकोऽब्रवीत् ॥ उद्धरेद्यदि तत्पात्रं ब्राह्मणो ज्ञानदुर्बलः । अभोज्यं तद्भवेच्छ्राद्धं क्रुद्धे पितृगणे गते" इति । तच्चाधोमुखं पित्रासनवामभागे च स्थाप्यमाह वृद्धयाज्ञवल्क्यः—"सपवित्रं पितुः पात्रं दक्षिणाधोमुखं न्यसेत्" इति । मात्स्ये—"पितृपात्रं निधायाथ न्युब्जमुत्तरतो न्यसेत्" इति । अत्रोत्तरत इत्यस्योत्तरस्यां दिशीत्यर्थ इति कल्पतरुमतमयुक्तं शिष्टाचारविरुद्धत्वात् । "उत्तरत आयतना हि स्त्री" इत्यादिश्रुतिबलेनोत्तरशब्दस्य वामवाचकत्वाच्च । अत एव कात्यायनः—"कुर्यान्न्युब्जं तिलैर्युक्तं दक्षिगाग्रमतः परम् । पितृपात्रं निदध्यात्तु देवपित्रोश्च मध्यतः" इति स्मृतवान् । दक्षिणादिविषये विशेषमाह स्मृतिः—"सतिलं नामगोत्राभ्यां दद्याच्छक्त्या तु दक्षिणाम् । स्वस्तिवाचनकं कुर्यात्पिण्डानुद्धृत्य भक्तितः" इति । "दैवठ० श्राद्ध"मिति स्मृतेर्देवपूर्वा-

मेव दक्षिणां दद्यात्। इह सव्यापसव्यविचारश्चाचारानुरोधेनैव। यत्तु—"दक्षिणां पितृविप्रेभ्यो दद्यात्पूर्वं ततो द्वयोः" इति, "सर्वं कर्म्मापसव्येन दक्षिणादानवर्जितम्" इति च देवलस्तच्छाखान्तरपरम्। अत एवोक्तं गोभिलेन—"दैवे वाचयित्वा पिण्डपात्राणि चालयित्वा दक्षिणां दद्यात्" इति। इहार्घपात्रचालनमावश्यकम्—"अचालयित्वा तत्पात्रं स्वस्ति कुर्वन्ति ये द्विजाः। निराशाः पितरस्तेषां शप्त्वा यान्ति यथागतम्" इति स्मृतेः। पितृभ्योऽपसव्येन ब्राह्मणेभ्योऽन्नञ्च सव्येन दातव्यमाह कार्ष्णाजिनिः—अपसव्येन कर्त्तव्यं पित्र्यं कृत्यमशेषतः। अन्नदानादृते सर्वमेवं मातामहेष्वपि॥ अपसव्येन यस्त्वन्नं ब्राह्मणेभ्यः प्रयच्छति। विष्ठामश्नन्ति पितरस्ते च सर्वे द्विजोत्तमाः" इति। अग्निदग्धेति मन्त्रोच्चारणपूर्वकान्नविकरणोत्तरं हस्तपादप्रक्षालनाऽऽचमनहरिस्मरणानि कृत्वा गायत्रीं मधुवातेति त्र्यृचं मधुमध्विति च जपेदित्याह ब्रह्मपुराणे—"ततः प्रक्षाल्य हस्तौ च तथाऽऽचम्य हरिं स्मरेत्। प्रेतभागं विसृज्याथ प्रायश्चित्तोपशान्तये॥ सव्याहृतिं सप्रणवां गायत्रीञ्च ततो जपेत्। पठेन्मधुमतीः पुण्यास्तथा च मधुमध्विति" इति। प्रायश्चित्तेति-प्रायश्चित्तसाध्योपशान्तिसिद्धये इत्यर्थः। गायत्रीजपक्रमे योगियाज्ञवल्क्यः-"ओङ्कारं पूर्वमुच्चार्य भूर्भुवःस्वस्ततः परम्। गायत्रीप्रणवश्चान्ते जपो ह्येवमुदाहृतः" इति। अन्नोत्सर्गानन्तरं भोजनात्पूर्वं भोजनकालेऽपि मधुवातेति मन्त्रपाठमाह याज्ञवल्क्यः—"सव्याहृतिकां गायत्रीं मधुवाता इति त्र्यृचम्। जप्त्वा यथासुखं वाच्यं भुञ्जीरँस्तेऽपि वाग्यताः॥ अन्नमिष्टं हविष्यञ्च दद्यादक्रोधनोऽत्वरः। आतृप्तेश्च पवित्राणि जप्त्वा पूर्वजपन्तथा" इति। पूर्वजपमित्यनेन भोजनकालेऽपि मधुवातेति मन्त्रपाठप्राप्तिरिति रघुनन्दनोऽपि।



## अथ विहिताविहितपात्रनिर्णयः।

ब्रह्मपुराणम्—"सौवर्णरौप्यताम्राणां स्फटिकं शङ्खशुक्तयः। भिन्नान्यपि नियोज्यानि पात्राणि पितृकर्म्मणि" इति। स्मृत्यन्तरम्—"कनकं निर्जराणान्तु पितॄणां रजतं स्मृतम्" इति। हारीतः—"काञ्चनेन तु पात्रेण राजतौदुम्बरेण वा। दत्तमक्षयतां याति खड्गेनार्यकृतेन तु"

इति । खड्गेन = गण्डकेन[1] । आर्य्यकृतेन = त्रैवर्णिकसम्पादितेन । वायुपुराणम्—"तथार्घपिण्डभोज्येषु पितॄणां रजतं मतम्" इति । वर्ज्यान्याह पैठीनसिः—"लोहसीसकांस्यपाषाणहीनपात्राणि वर्जयेत्" इति । ब्रह्मपुराणे—"कांस्यभाण्डानि वर्ज्यानि पितृदैवकर्म्मणि" इति । वृद्धयाज्ञवल्क्यः—"मृदश्मनी तथा कांस्यमारकूटादिसम्भवम् । त्रपुसीसकलोहानामर्घपात्रं विवर्जयेत्" इति । धर्म्मप्रदीपः—"मृत्पात्रगतमर्घञ्च मृत्तिकागन्धलेपनम् । घृतधूपञ्च यो दद्यान्निराशाः पितरो गताः" इति । वृद्धशातातपः—"पात्रे तु मृण्मये यस्तु श्राद्धे भोजयते पितॄन् । स वै दाता पुरोधाश्च भोक्ता च नरकं व्रजेत्" इति । कस्मिन् पात्रे किं द्रव्यं दुष्यति किञ्च नेत्याह स्मृतिसागरसारधृता स्मृतिः—"नारिकेलजलं कांस्ये ताम्रपात्रे स्थितं मधु । गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना ॥ ताम्रपात्रधृतं मांसं यच्च गव्यं घृतेतरत् । आमिषं तु गवां मांसं दधि मद्यं पयो रजः ॥ द्रव्यान्तरयुतं मांसं पयसा संयुतं दधि । पयोऽनुद्धृतसारञ्च ताम्रपात्रे न दुष्यति" इति । गवां मांसमिति-गोमांसतुल्यमित्यर्थः । अनुद्धृतसारमनिष्कासितनवनीतम् । कात्यायनः—"आसुरेण तु पात्रेण यस्तु दद्यात्तिलोदकम् । पितरस्तस्य नाश्नन्ति दश वर्षाणि पञ्च च" इति । आसुरपात्रञ्च कुलालचक्रनिमितमित्याह स्मृत्यन्तरम्—"कुलालचक्रनिष्पन्नमासुरं मृण्मयं स्मृतम् । तदेव हस्तघटितं स्थाल्यादि दैविकं भवेत्" इति । "आसुरं चक्रनिष्पन्नं दैविकं हस्तनिर्मितम्" इति च ।

—०ः०ः०—

## अथ अप्रशस्तवस्तुनिर्णयः ।

देवलः—"अजाविमहिषीणान्तु पयः श्राद्धेषु वर्जयेत् । विकारान् पयसश्चैव माहिषं तु घृतं हितम्" इति । सुमन्तुः—"पयो दधि घृतञ्चैव गवां श्राद्धेषु पावनम् । महिषीणां घृतं प्राहुः श्रेष्ठं न तु पयः क्वचित्" इति । याज्ञवल्क्यः—"सन्धिन्यनिर्दशाऽवत्सागोपयः परिवर्जयेत् । औष्ट्रमैकशफं स्त्रैणमारण्यकमथाऽऽविकम्" इति । सन्धिनी=वृषभेणाऽऽक्रान्ता गौः "अथ सन्धिनी । आक्रान्ता वृषभेण" इत्यमरात् । "वृषाऽऽक्रान्ताञ्च

1. गण्डकास्थिनिर्मितेनेत्यर्थः ।

सन्धिनीम्" इति त्रिकाण्डाच्च। वेलामेकामतिक्रम्य दुह्यमानां वत्सान्तरेण सन्धीयमानां वा सन्धिनीमूचिरे चिरन्तनाः। "स्यन्दिनी-यमलसू-सन्धिनीनाञ्च" इति गौतमस्मृतेः 'सन्धिनी'पदमत्र स्रवत्पय-स्तनी-यमलवत्सप्रसविन्योरप्युपलक्षणम्। अनिर्दशा = प्रसूतावनतिक्रान्त-दशाहा। अवत्सा = मृतवत्सा। एषां द्वन्द्वे गोपदेन सह कर्म्मधारयोत्तरं षष्ठीतत्पुरुषः पयसा[1]। समासान्तविधेश्चानित्यत्वाद् 'गोरतद्धितलुकि' इति न प्रवृत्तम्। पयोग्रहणञ्च तद्विकारदध्यादेरप्युपलक्षणम्। औष्ट्रम् = उष्ट्रीसम्बन्धि। ऐकशफम् = एकशफा (वडवादि) सम्बन्धि स्त्रीग्रहणम-जातिरिक्तसकलद्विस्तनीनामुपलक्षणार्थम् "सर्वासां द्विस्तनीनाञ्च क्षीरम-भोज्यमजावर्जम्" इति शङ्खस्मृतेः। आरण्यकम् = मृग्यादिसम्बन्धि। आविकम् - मेषीसम्बन्धि। औष्ट्रादिषु विकारार्थतद्धितश्रतेस्तद्विकारमा-त्रस्य सर्वस्यापि पयोदधिघृतादेर्निषेधः। शङ्खः-"विडालोच्छिष्टमाघ्रातं श्राद्धे यत्नेन वर्जयेत्। कूष्माण्डं महिषीक्षीरमाढक्यो राजसर्षपाः॥ चण-का राजमाषाश्च घ्नन्ति श्राद्धं न संशयः" इति। आढक्यः=तुवर्यः 'राहड़ि' इति मैथिलीप्रसिद्धाः। मार्कण्डेयपुराणे—"यच्चोत्कोचादिना प्राप्तं पतितात्‌ यदुपार्जितम्। अन्यायकन्याशुल्कार्थं द्रव्यञ्चात्र विगर्हितम्॥ पित्रर्थम्मे प्रयच्छस्वेत्युक्त्वा यच्चाप्युपाहृतम्" इति। उत्कोचः"=उपदा 'घूस' इति प्रसिद्धः। चन्द्रिकायाम्—"कृष्णधान्यानि सर्वाणि वर्जयेच्छ्राद्धकर्म्मणि। न वर्जयेत्तिलाँश्चैव मुद्गमाषांस्तथैव च" इति। विष्णुः-"कूष्माण्डालाबुवा-र्त्ताकीग्राम्यमाहिषदुग्धकम्। पाल(ल्य)ङ्कीं राजिकां श्राद्धे द्विःस्विन्नञ्च विवर्ज-येत्॥" इति। ब्रह्माण्डे-"आसनारूढमन्नाद्यं पादोपहतमेव च। अमेध्यैर्जङ्गमैः स्पृष्टं शुष्कं पर्युषितञ्च यत्॥ द्विःस्विन्नं परदग्धञ्च तथैवाग्रावलेहितम्। शर्क-राकीटपाषाणैः केशैर्यच्चाप्युपद्रुतम्॥ पिण्याकं मथितञ्चैव तथातिलवणं च यत्। सिद्धाः कृताश्च ये भक्ष्याः प्रत्यक्षलवणीकृताः॥ वाससा चावधूतानि वर्ज्यानि श्राद्धकर्म्मणि" इति। द्विःस्विन्नं=सकृत्पाकेन भक्ष्यमपि हिङ्गुजी-रकादिसंस्कारार्थं पुनः पक्वमिति कमलाकरः। सूपकारशास्त्रोक्तदिशा पूर्ण-पाकनिष्पत्त्युत्तरं शैत्यापगमाय पुनः पाकयुक्तं, न तु किञ्चित्पाकोत्तरं तत्प-

---

1. पयःशब्देन सहेत्यर्थः।

रिमार्जनाय पाकान्तरयुक्तं व्यञ्जनादि, स्विन्नमित्यतीतार्थकक्तप्रत्ययनिर्देशादत एव भर्जनोत्तरं गुडादिपक्वमोदनादि लड्डुकादि च शिष्टैरादीयत इति रघुनन्दनादयः। उत्स्विन्नतण्डुलादीति तु वयम्, मिथिलायामद्यत्वेऽप्युत्स्विन्नतण्डुलादे[1]ः। सकलवैदिककर्म्मसु परिवर्ज्यत्वेन दृष्टत्वात्। अग्रावलेहितम् = पूर्वमेवाऽऽस्वादितम्। पिण्याकं (कः) = तिलकल्को हिङ्गु वा। पर्युषितञ्च पुनः सिद्धं हिरण्योदकस्पर्शाद्भोज्यमेव। "पर्युषि पुनःसिद्धमभोज्यमन्यत्र हिरण्योदकस्पर्शात्" इति सुमन्तुवचनात्। शातातपः—"गोकुले कन्दुशालायां तैलयन्त्रेक्षुयन्त्रयोः। अमीमांस्यानि शौचानि स्त्रीषु बालातुरेषु च" इति। कन्दुः = 'हलुआई' 'काउन' इत्यादिना मैथिल्यादिप्रसिद्धः। अमीमांस्यानि = अशौचभाक्त्वेनाविचारणीयानि। कूर्मपुराणम्—"कन्दुपक्वानि तैलेन पायसं दधि सक्तवः। द्विजैरेतानि भोज्यानि शूद्रगेहकृतान्यपि" इति। कन्दुपक्वं=केवलवह्नियोगेन कन्दौ[2]=लौहमयपात्र ('कडाह' 'लोहिया' इत्यादिप्रसिद्ध) विशेषे पक्वं भृष्टतण्डुलादि। यमः "अपूपाश्च करम्भाश्च धानावटकसक्तवः। शाकं मांसमपूपञ्च सूपं कृसरमेव च॥ यवागूं पायसञ्चैव यच्चान्यत्स्नेहसम्भवम्। सर्वं पर्युषितं भक्ष्यं सूक्तञ्च परिवर्जयेत्" इति। अपूपो द्विविधो घृतपक्वस्तैलपक्वश्चेति-द्वयोर्ग्रहणार्थं पुनरुक्तिः। सूक्तं=मधुरं, यच्चिरन्तनतयाऽम्लतां गतम्। करम्भाः=दधिसक्तवः, मतान्तरे दधिभक्ताः। मनुः—"दधि भक्ष्यञ्च सूक्तेषु सर्वञ्च दधिसम्भवम्" इति। विश्वामित्रः—"कपित्थं कुसुमञ्चैव नारिकेलञ्च पैनिकम्। जम्बूफलादि पक्वञ्च पिण्याकं[3] तन्दुलीयकम्[4]"इति। मत्स्यपुराणे—"मसूरशणनिष्पावराजमाषकुसुम्भिकाः। पद्मबिल्वार्कधत्तूरपारिभद्राटरूषकाः॥ न देयाः पितृकार्येषु पयश्चाजाविकं तथा। कोद्रवोदारवरककपित्थमधुकातसी॥ एतान्यपि न देयानि पितृभ्यः श्राद्धमिच्छता" इति। कपित्थम्="कथ, कथबेल" इत्यादिमैथिलीप्रसिद्धम्। निष्पावो = वल्लः, 'बोडा' इति 'भेटमासु' इति वा मैथिलीप्रसिद्ध इत्येके। कुसुम्भिका=

---

१. स्विन्नतण्डुल = 'उसिना चाउर' इति लोके।

२. एतच्च भर्जनपात्रस्य भर्जकजातिविशेषस्य च नाम।

३. पिड़ार इति लोके प्रसिद्धम्। ४. 'अल्पमारिषः। 'छोटका मरुसा' इति प्रसिद्धम्।

कुसुम्भपुष्पं तच्छाखादि च । "कुसुम्भं लतिकाशाकं वृन्ताकं पूतिकां तथा । भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः" इति हि तिथितत्त्वधृतोशनोवचनम् । बिल्वं = रक्तबिल्वम् । पारिभद्रः = सरलवृक्षो रक्तमन्दारवृक्षो निम्बवृक्षश्च तदीयत्वक्पत्राद्यपीह लक्षणया पारिभद्रः । अ(आ)टरूषकः = 'अडूसा' इति प्रसिद्धः फलविशेषः प्रागुक्तः । उद्दारः=काञ्चनारः 'कचनार' इति प्रसिद्धः पुष्पविशेषः । वरको=वन्यमुद्गः । मधुकं=ज्येष्ठीमधु 'जेठीमधु' इति मैथिलीप्रसिद्धम् । अतसी = उमा 'तिस्सी' इति प्रसिद्धा । यत्तु "करीरफलपुष्पाणि विडङ्गमरिचानि च । जम्भारिका सजम्बीरा सुपक्वं बीजपूरकम् ।। जम्बलाकूनि पिप्पल्यः पटोलं पिण्डमूलकम् । मसूराञ्जनपुष्पञ्च श्राद्धे दत्त्वा पतत्यधः" इति वृद्धपराशरस्मृतौ विडङ्गमरिचपिप्पल्यादेर्निषेधः स द्रव्यान्तरामिश्रितस्यैव अन्यथा 'मरिचादियोगात्सिद्धं प्रदेयं न तु दुष्यतीह' इति स्ववचनविरोधस्य वज्रलेपायितत्वात् । स्मृत्यन्तरे-"आमिषं दृतिपानीयं गोवर्जं क्षीरमामिषम् । मसूरमामिषं सस्ये फले जम्बीरमामिषम् ।। आमिषं शुक्तिकाचूर्णमारनालं तथाऽऽमिषम्" इति । दृतिश्चर्मपात्रम् । आरनालं = निस्तुषीकृताऽऽमगोधूमसाधितं तादृशपक्वगोधूमसाधितं वा काञ्जिकम् । "आरनालन्तु गोधूमैरामैः स्यान्निस्तुषीकृतैः । पक्वैर्वा सन्धितैस्तत्तु सौवीरसदृशं गुणैः" इति राजनिघण्टुः । "पितॄणां देवतानाञ्च मूलकं नैव दापयेत् । दत्त्वा नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि ।। ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् । अन्यथा नरकं याति क्षत्रवट्शूद्र एव च ।। वरं भक्ष्यमभक्ष्यन्तु पिबेद्वा गर्हितं च यत् । वर्जनीयं प्रयत्नेन मूलकं मदिरासमम्" इति स्मरणान्मूलकमपि श्राद्धे परिहरणीयमेव । "कर्षकान् पुंगवैर्वाह्यैर्मेध्येन हविषा सुरान् । श्रियं शक्रप्रवृत्तेन तर्पयिष्यामहे वयम्" इति हरिवंशे शक्रं प्रति सुरभिवाक्याद्वृषकृष्टभूजातैरेव विहितकर्मकर्त्तव्यता प्रतीयते । पुंगवैरिति पुमांसश्च ते गाव इति विगृह्य टजन्तमिति स्त्रीगवीवाहनप्रतिषेधः । मार्कण्डेये--"वर्ज्याश्चाभिषवा नित्यं शतपुष्पा गवे(वी)धुकाः । जम्बीरकं फलं वर्ज्यं कोविदाराश्च नित्यशः" इति । अभिषवः=सुरापानं सूक्तमित्येके । शतपुष्पा='सौंफ' इति मैथिली प्रसिद्धा । गवे(वी)धुकाः= आरण्यगोधूमा इति । 'जर्तिलयवाग्वा वा जुहुयाद्गवे(वी)धुकयवाग्वा वा जुहुयात्' इत्यादिश्रुति-

वाक्यव्याख्यायां शतपथब्राह्मणभाष्ये सायणः । 'तृणधान्यानि नीवाराः स्त्रीगवीधुर्गवीधुकाः' इत्यमरश्च । कोविदारः = रक्तकाञ्चनारः ( लाल कचनार ) इति प्रसिद्धः । शाल्यायनः—"मारिषं नालिका चैव रक्ता या"
कचनार ) इति प्रसिद्धः । शाल्यायनः—"मारिषं नालिका चैव रक्ता
या च कलम्बिका । आसुरान्नमिदं सर्वं पितॄणां नोपतिष्ठते" इति । "गान्धारिका पटोलानि श्राद्धकर्मणि वर्जयेत्" इति च । मारिषम् = 'मरुसा साग' इति प्रसिद्धम् । नालिका = स्वनामख्यातः शाकविशेषः । कलम्बिका = 'क(र)तमीसाग' इति प्रसिद्धा । गान्धारिका = 'गेनहारी साग' इति प्रसिद्धा । देवलः—"कण्डूरां श्वेतवृन्ताकं कुम्भाण्डञ्च विवर्जयेत्" इति । "कण्डूरा = कपिकच्छूः, 'कवाछु' इति मैथिलीप्रसिद्धा । कुम्भाण्डं = वर्त्तुलालावुरिति केचित्, 'कुम्हड़' इति लोकप्रसिद्धमिति बहवः



## अथ प्रशस्तवस्तुनिर्णयः ।

ब्राह्मे—"यवैर्व्रीहितिलैर्माषैर्गोधूमैश्चणकैस्तथा । सन्तर्पयेत्पितॄन्मुद्गैः श्यामाकैः सर्षपद्रवैः । नीवारैर्हरिश्यामाकैः प्रियङ्गुभिरथार्चयेत्" इति । प्रियङ्गुभिः = कङ्गुभिः । "अगोधूमञ्च यच्छ्राद्धं कृतमप्यकृतं भवेत्" इत्यत्रवचनन्तु गोधूमप्रशंसापरम् । सायणीये—"अगोधूमञ्च यच्छ्राद्धं माषमुद्गविवर्जितम् । तैलपक्वेन रहितं कृतमप्यकृतं भवेत्" इति । भारते—"वर्द्धमानतिलं श्राद्धमक्षय्यं मनुरब्रवीत् । सर्वकामैः स यजते यस्तिलैर्यजते पितॄन्" इति । प्रचेताः—कृष्णमाषास्तिलाश्चैव श्रेष्ठाः स्युर्यवशालयः । महायवा व्रीहियवास्तथैव च मधूलिकाः । कृष्णाः श्वेताश्च लोहाश्च ग्राह्याः स्युः श्राद्धकर्म्मणि" इति । मधूलिका = यावनाला, 'मुरहरी'-ति हिन्दुभाषाप्रसिद्धा । कार्ष्णाजिनिः-"यदिष्टं जीवतश्चासीत्तद्द्यात्तस्य यत्नतः । स तृप्तो दुस्तरं मार्गं ततो याति न संशयः" इति । मार्कण्डेयः-"गोधूमैरिक्षुभिर्मुद्गैः सतीनैश्चणकैरपि । श्राद्धेषु दत्तैः प्रीयन्ते मासमेकं पितामहाः । विदार्या च भरुण्डैश्च तिलैः शृङ्गाटकैस्तथा । कङ्कुकैश्च तथा कन्दैः कर्कन्धूबदरैरपि । पालेवतैरारुकैश्चाप्यक्षोटैः पनसैस्तथा । काकोल्या क्षीरकाकोल्या तथा पिण्डालकैः शुभैः । लाजाभिश्च सधानाभिस्त्रपुसैर्वारुचिर्भटैः" । सर्ष-

पाराजशाकाभ्यामिङ्गुदै राजजम्बुभिः। प्रियालाऽऽमलकैर्मुख्यैः" फल्गुभिश्च तिलण्टकैः। वेत्राङ्कुरैस्तालकन्दैश्चक्रिकाक्षीरिकावचैः। लोचैः समोचैर्लकुचैस्तथा वै बीजपूरकैः। मुञ्जातकैः पद्मफलैर्भक्ष्यभोज्यैश्च संस्कृतैः। रागखाण्डवचोष्यैश्च त्रिजातकसमन्वितैः। दत्तैस्तु मासं प्रयीन्ते श्राद्धेषु पितरो नृणाम्" इति। सतीनैः = 'बटुरा' इति प्रसिद्धैः। विदार्या = विदारीकन्देन। भरुण्डैः = मखान्नैः। शृङ्गाटकैः = सिंघाडा' इति प्रसिद्धैः। कञ्चुकैः = कञ्चनारैः। कन्दैः = ओलैः। कर्कन्धूः = वन्यं बदरमिति ग्रामबदरादस्य भेदेनापौनरुक्त्यम्। पालेवतैः = कोशातकीभिः "छोटका पड़ोर, झीङ्गा, अथवा चिरचिरी, इति प्रसिद्धाभिः। आरुकैः = 'अरुवी' इति प्रसिद्धैः। अक्षोटैः = 'अखरोट' इति प्रसिद्धैः। काकोल्या क्षीरकाकोल्या च = देशान्तरप्रसिद्धया। पिण्डालकं = 'सुथनी' इति प्रसिद्धम्। त्रपुसैर्वारुचिर्भटैः = 'काँकडि, खरबूजा' इत्यादि प्रसिद्धैः। 'सर्षपा'—इत्यत्र च्छान्दसो दीर्घः। प्रियालः = 'चिरोंजी' इति हिन्दुभाषा-प्रसिद्धः। फल्गुभिः = उदुम्बरैः। तिलण्टकैः = पटोलैः। चक्रिका = तिन्तिड़ी। क्षीरिका = 'खिरनी' इति प्रसिद्धा। मोचं = कदलीफलम्। लकुचैः 'बडहर' इति प्रसिद्धैः। रागखाण्डवः—"पिप्पलीशुण्ठियुक्तस्तु मुद्गयूषस्तु खाण्डवः। रागखाण्डवतां याति शर्करासंयुतन्तु तत्" इति निघण्टूक्तः पानविशेषः। कात्यायनः—"कदल्यादिफलैः शस्तैर्मूलैराद्रादिकैरपि। गोरसैर्मधुना दध्ना श्राद्धे सन्तर्पयेत्पितॄन्। कदल्याम्रफलादीनि श्राद्धे सम्पादयेत्सुधाः" इतीति निर्णयसिन्धौ।

---

## अथ वर्ज्यवस्तुनिर्णयः।

कूर्मपुराणे-"कुक्कुटाः सूकराः श्वानो वर्ज्याः श्राद्धेषु दूरतः। बीभत्समशुचिं नग्नं मत्तं धूर्तं रजस्वलाम्। नीलकाषायवसनं पाख(ष) ण्डाँश्च विवर्जयेत्" इति। रक्तवस्त्रमपि प्रतिषिद्धमुक्तं धर्मप्रदीपधृतमरीचिवचनेन—"काषायं खण्डवस्त्रञ्च रक्तवस्त्रन्तथैव च। एवंविधानि वस्त्राणि वर्जयेच्छ्राद्धकर्मणि" इति। इदमवधेयम्-गण्डक-नेपालकम्बल-कृष्णाजिन-गौरसर्षप-गौरकृष्णारण्य-त्रिविधतिल-त्रिदण्ड-यति-रज-

तान्नतच्छागादयः श्राद्धेऽतिप्रशस्ततयाऽऽवश्यकाः, काक-कुक्कुट-कुक्कुर-विडाल-विड्वराह-खञ्ज-षण्ढ-वृषल-वृषलीपति-काण-छिन्नकर्ण-नग्न-धूर्त्त कुष्ठि-व्रणि-नास्तिक-भयानकाशुचि-नीलकषायवस्त्र-लोह-सीस-चिररोगि-मद्यपाधिकाङ्ग-हीनाङ्गाभिशस्त-दातृप्रैष्य-भग्नकुल-कुलटा-पाषण्ड-चाण्डाल-पर्युषितान्नादयश्चापसारणीयाः। पनसाऽऽम्र-नारिकेल-कदली-खर्जूर-तिन्दुकाऽऽमलकी-प्राचीनामलकी-पद्मबीज-द्राक्षा-दाडिम-बिल्वाऽऽम्रातक-कण्टकारिका-लकुच-लवली-द्विविधबदरी-ना(ग)रङ्गक-केमुक-पूग-पटोल-बीजपूरक-क्षीरिकाऽऽटरूषक-शृङ्गाटक-गम्भारीफल-मधुक-कोविदार-पिप्पली जम्बूप्रभृतीन्यन्यान्यपि च भक्ष्याणि पक्वानि मधुराणि च कर्कट्यादीनि फलानि देयानि। केवला शुण्ठी, केवलं मरिचं, केवलं हिङ्गु च प्रतिषिद्धम्। कन्देषु कसेरु-दीर्घमूलक-शूरण-विदारीकन्द-शालूकार्द्रक-मुसली-शतावरीप्रभृतीनि भक्ष्याणि। व्यञ्जनसंस्कारकद्रव्येषु हरिद्राऽऽर्द्रक-हिङ्गुधान्याक-जीरक-मरि(री)च-दाडिमीबीज-सामुद्रिक-साम्भरसैन्धवान्यतमलवण-घृत-तैलादीनि शस्तानि। व्यञ्जनञ्च सति सम्भवेऽनेकं कुर्यादसत्येकमपि "ततोऽन्नं बहुसंस्कारं नैकव्यञ्जनं पानवत्" इति देवलवचने नैकेति प्रसज्यप्रतिषेधीयं नञं मत्वैकव्यञ्जनप्रतिषेधस्तु न कार्यो नैकधा-नारायण-नान्तरीयक-नाप्राप्तादिशब्दवन्नैकेत्यत्र 'न'-शब्देन सह सुप्सुपेति समासेन पर्युदासस्यैव ग्रहणादन्यथाऽसमर्थ-समासवाक्यभेदयोरापत्तेरित्यनेकव्यञ्जनप्राशस्त्यपरतयैकव्यञ्जनस्यापि विधिः। व्यञ्जनञ्च पाकोत्तरदत्तलवणमलवणमूषरलवण-सौवर्चलवण-कृतलवणान्यतमलवणसंस्कृतं हस्तदत्तञ्च प्रतिषिद्धम्। चिपिट-सक्तु-लाज-दधि-दुग्ध-गुडपक्व-घृतपक्व-लड्डुक-शष्कुल्यादीन्यग्निपक्वान्यप्यामश्राद्धेऽपि देयान्येवेति श्राद्धपल्लव-श्राद्धप्रदीप-श्राद्धविवेकाः सक्षीरशर्करं पृथुकान्नं, समधुका लाजाः, सशर्कराः सक्तवश्च श्राद्धेऽक्षय्यफलदाः। अश्रु(स्रु)दुष्टं, छिक्कादुष्टं, रसहीनं, निर्गन्धं, भावदुष्टं, हस्तमथितं, शूद्रस्पृष्टञ्च द्रव्यं, दुर्गन्धि-पर्युषितमल्पजलाशयस्थमप्रतिष्ठितजलाशयस्थमशुचिस्पृष्टं शूद्राऽऽनीतं रात्र्यानीतं याचितं स्वर्ण-रजत-कुश-तिल-मन्त्रान्यतमसम्बन्धरहितमभोज्यान्ननिखातजलाशयस्थं पतितादिनिखातजलाशयस्थञ्च जलं वर्ज्यमिति॥ शुक्लवासोविधिमाह शङ्खः-"श्राद्धकृच्छुक्लवासाः

स्यात्" इति। मरीचिरपि-"शुचयः शुचिवाससः स्युः" इति । श्राद्ध काल-क्रिया-मन्त्रादयो विधिवदेवानुष्ठेयास्तथा च स्मृतिः—"कालहीनं क्रियाहीनं मन्त्रहीनञ्च यद्भवेत् । भागहीनञ्च यच्छ्राद्धं भागं तं राक्षसं विदुः" इति । राक्षसं = राक्षससम्बन्धिनम् । गृह्यसूत्रम्-"तदहः शुचिरक्रोधनोऽत्वरितोऽप्रमत्तः सत्यवादी स्यादध्वमैथुनश्रम-स्वाध्यायान् वर्जयेत्" इति । तदहः = श्राद्धदिने । अत्यन्तसंयोगे व्याप्तिक्रियामध्याहृत्य वा द्वितीया[1] । शुचिः = वमन-विरेचन-रुधिरस्रावादिकृताशुद्धिरहितः, शुक्लवासाश्च । अप्रमत्तः = शास्त्रोक्तश्राद्धीयकालवेलादौ सावधानः । 'कालहीन'मित्यादिप्रागुक्तवचनबलात् । मैथुननिषेधस्तत्पूर्वदिनेऽपि । स्वाध्यायपदं श्राद्धीयमन्त्रातिरिक्तपरमन्यथा व्याघाताऽऽपत्तेः । रक्तस्रावादौ श्राद्धनिषेधमाह पुराणसमुच्चये-"कृत्वा तु रुधिरस्नानं (स्रावं) न विद्वाञ्छ्राद्धमाचरेत् । एकं द्वे त्रीणि वा विद्वान् (किन्तु) दनानि परिवर्जयेत् । यथा रजस्वला नारी ह्यशुचिस्त्रिदिनं भवेत् रक्तस्रावे तथा नृणामशुचित्वं प्रजायते" इति । स्मृत्यन्तरमपि-"नाभेरूर्ध्वमधो वापि यदि स्याद्रुधिरस्रवः । तद्दिने वैदिकं कर्म कृत्वा तु नरकं व्रजेत्" इति । व्रणे तु विशेषं ब्रूते स्मृतिः "पित्र्यं कर्म न कुर्वीत नाभेरूर्ध्वं व्रणो यदि । दैवं तत्रापि कर्त्तव्यं यदि स्याद्व्रणः करः" इति । श्राद्धकर्त्तुस्तैलाभ्यङ्गम्प्रतिषेधति देवलः—"दन्तधावनताम्बूलं स्निग्धस्नानमभोजनम् । रत्यौषधपरान्नानि श्राद्धकृत्सप्त वर्जयेत्" इति । ब्राह्मणेभ्यस्तु देयमेवेत्याह कात्यायनः—"तैलमुद्वर्त्तनं देयं ब्राह्मणेभ्यः प्रयत्नतः । तैरभ्यङ्गः प्रकर्त्तव्यो वर्ज्यकालांश्च चिन्तयेत्" इति । एवञ्चैतदेकवाक्यतया "पुत्रजन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा । नित्यस्नाने च कर्त्तव्ये तिथिदोषो न विद्यते" इति सुरेश्वरवचनोक्तोऽपि श्राद्धे तैलाभ्यङ्गो निमन्त्रितब्राह्मणविषयक एवेति देवलप्रतिषिद्धः श्राद्धे कर्त्तुस्तैलाभ्यङ्ग एकरक्तसम्बन्धाच्छिष्टाचाराच्च तत्सपिण्डानामपि बोध्यः । वृद्धमनुः-"मृते जन्मनि संक्रान्तौ श्राद्धे जन्मदिने तथा । अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा" इत्यनेन श्राद्धदिने कर्त्तुरुष्णजल-स्नानम्प्रतिषेधति । मृते = यस्मिन्नहनि बन्धुर्मृतस्तस्मिन् । जन्मनि = पुत्रोत्पत्तौ । श्राद्धोक्त-

---

(१) 'तदह'—रित्यत्रेति बोध्यम् ।

रनिषिद्धान्याह कूर्मलोचने—"यात्रां युद्धं नदीपारं मिथ्यालापं द्विभोजनम् । द्यूतक्रीडां दिवानिद्रां श्राद्धे सप्त विवर्जयेत्" इति । द्यूतञ्च कलहञ्चैव सायंसन्ध्यां दिवाशयम् । श्राद्धकर्त्ता च भोक्ता च पुनर्भक्तञ्च वर्जयेत्" इति स्मृत्यन्तरम् । "वर्ज्यानि, कुर्वता श्राद्धं कोपोऽध्वगमनं त्वरा । भोक्तुरप्यत्र राजेन्द्र त्रयमेतन्न शस्यते" इति विष्णुपुराणम् । राजमार्त्तण्डे—"पुनर्भोजनमध्वानं द्यूताध्ययनमैथुनम् । दानं प्रतिग्रहं सन्ध्यां श्राद्धं कृत्वाष्ट वर्जयेत्" इति । नव्यवर्द्धमानधृता स्मृतिः—"पुनर्भोजनमध्वानं भाराध्ययनमैथुनम् । दानं सन्ध्यां पुनः स्नानं श्राद्धं कृत्वाष्ट वर्जयेत्" इति । श्राद्धे दन्तधावनं प्रतिषेधति हेमाद्रौ वसिष्ठः—"उपवासे तथा श्राद्धे न कुर्याद्दन्तधावनम् । दन्तानां काष्ठसंयोगाद्दहत्यासप्तमं कुलम्" इति । भ्रमात्तत्करणे प्रायश्चित्तमुक्तं विष्णुरहस्ये—"श्राद्धोपवासदिवसे खादित्वा दन्तधावनम् । गायत्रीशतसम्पूतमम्बु प्राश्य विशुध्यति" इति । काष्ठग्रहणान्मृल्लोष्टादौ न दोष इति हेमाद्रौ । वस्तुतस्तु दन्तकाष्ठनिषेधे तदलाभे वा—अलाभे वा निषेधे वा काष्ठानां दन्तधावने । पर्णादिना विशुध्येत जिह्वोल्लेखं सदैव हि" इति पैठीनसिवचनम्, "अलाभे दन्तकाष्ठानां निषिद्धायां तिथौ तथा । अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्" इति मयूखोक्तवचनञ्चादरणीयम् । शिष्टाचारोऽप्येवमेव । एतच्च सर्वं श्राद्धतत्त्वे स्पष्टम् । श्राद्धकर्त्रा तद्दिने रात्रौ न भोक्तव्यम् "अहन्येव तु भोक्तव्यं कृते श्राद्धे द्विजन्मभिः । अन्यथा ह्यासुरं श्राद्धं परपाके च सेविते" इति जातूकर्ण्यवचनात् । नागरखण्डेऽपि—"यश्चैवास्तमिते सूर्ये भुङ्क्ते च श्राद्धकृन्नरः । व्यर्थतां याति तच्छ्राद्धं तस्माद्रात्रौ न भोजयेत्" इति । भोजयेदित्यत्र स्वार्थिको णिच्, भुञ्जीतेत्यर्थः । जातूकर्ण्यवचने 'परपाके च सेविते' इत्यनेन तद्दिने परपाकभोजनमपि प्रतिषिद्धं तथा च शातातपः—"श्राद्धं कृत्वा परश्राद्धे भुञ्जते ये तु विह्वलाः । पतन्ति पितरस्तेषां लुप्तपिण्डोदकक्रियाः" इति । पार्वणादिश्राद्धेषु शेषान्नं कर्त्रादिभिरवश्यभोक्तव्यम् "श्राद्धं कृत्वा तु यो विप्रो नाश्नाति पितृसेवितम् । स याति नरकं घोरं यावदाभूतसम्प्लवम्" इति जैमिन्यादिस्मरणात् । पितृसेवितं=श्राद्धावशिष्टम् । "प्रदक्षिणमनुव्रज्य भुञ्जीत पितृसेवितम्" इति याज्ञवल्क्यवचनाच्च । नवश्रा-

द्धादौ तु तत्प्रतिषिद्धमेव "नवश्राद्धेषु यच्छिष्टं गृहे पर्युषितञ्च यत्। दम्पत्योर्भुक्तशिष्टञ्च न भुञ्जीत कदाचन" इति स्मृतेः। ग्रहे=चन्द्र-सूर्योपरागे। पर्युषितं=भाण्डादिषु रक्षितम्। ग्रहणवेलायां शुद्धयर्थं भाण्डादिषु कुशनिक्षेप-व्यवहारे तु प्रमाणं मृग्यमेव। नवश्राद्धञ्च "प्रथमेऽह्नि तृतीयेऽह्नि पञ्चमे सप्तमे तथा। नवमैकादशे चैव तन्नवश्राद्धमुच्यते" इत्युक्तं वेदितव्यम्। हारीतः—"एकादशाहे भुक्त्वान्नं भुक्त्वा सञ्चयने तथा। उपोष्य विधिवत्स्नात्वा कूष्माण्डैर्जुहुयाद्घृतम्" इति। विष्णुः-"प्राजापत्यं नवश्राद्धे पादोनं चाद्यमासिके। त्रैपक्षिके तदर्द्धन्तु पञ्चगव्यं द्विमासिके" इति। एतदापद्विषयमनापदि च "चान्द्रायणं नवश्राद्धे पराको मासिके मतः" इति हारीतोक्तम्। अनापद्येव क्षत्रियादिश्राद्धभोजन आह षट्त्रिंशन्मतम्—"चान्द्रायणं नवश्राद्धे पराको मासिके स्मृतः। त्रैपक्षिके सान्तपनं कृच्छ्रो मासद्वये स्मृतः॥ क्षत्रियस्य नवश्राद्धे व्रतमेतदुदाहृतम्। वैश्यस्याद्‌र्धाधिकं प्रोक्तं क्षत्रियात्तु मनीषिभिः॥ शूद्रस्य तु नवश्राद्धे चरेच्चान्द्रायणद्वयम्। सार्द्धं चान्द्रायणं मासे त्रिपक्षे त्वैन्दवं स्मृतम्॥ मासद्वये पराकः स्यादूर्ध्वं सान्तपनं स्मृतम्" इति। शातातपः—"नवश्राद्धग्रामयाजकान्नसंग्रहभोजने। नारीणां प्रथमे गर्भे भुक्त्वा चान्द्रायणञ्चरेत्। चान्द्रायणं नवश्राद्धे पराको मासिके मतः। मासत्रयेऽतिकृच्छ्रः स्यात्षण्मासे कृच्छ्र एव हि। आब्दिके कृच्छ्रपादः स्यादेकाहः पुनराब्दिके। अत ऊर्ध्वं न दोषोऽस्ति शङ्खस्य वचनं यथा" इति। अनेन शातातपवचनेन नवश्राद्धादावेव श्राद्धतच्छेषान्नयोर्भक्षणम्प्रतिषिद्धमस्ति। पुनराब्दिकं = सपिण्डीकरणोत्तरदिने क्रियमाणं काम्यमेकोद्दिष्टम्, "पूर्वेद्युराब्दिकं श्राद्धं परेद्युः पुनराब्दिकम्" इति मनोः। मैथिलास्तु-"सपिण्डीकरणादूर्ध्वं यावदब्दत्रयं भवेत्। तावदेव न भोक्तव्यं श्राद्धीयान्नं क्षयेऽहनि॥ प्रथमेऽब्दे तु मांसानि द्वितीयेऽस्थीनि चैव हि। तृतीये रुधिरं भुङ्क्ते चतुर्थेऽन्नं विशुध्यति" इति स्मृतेस्तृतीयसाम्वँत्सरिकपर्यन्तं श्राद्धीयान्नं प्रतिषेधन्ति तथैव शिष्टाचाराच्च, ततश्च मैथिलकर्त्तृकतृतीयसाम्वँत्सरिकपर्यन्तश्राद्धान्नभोजनाभावे प्रमाणं नोपलभामहे' इति द्वैतपरिशिष्टोक्तिरसङ्गतैवेत्यवधेयम्। एकपङ्क्त्युपविष्टानां ब्राह्मणानामन्नादिदाने व्यतिक्रमो न कार्यः "एकपङ्क्त्युपविष्टानां विप्रा-

णां श्राद्धकर्मणि। भक्ष्यं भोज्यं समं दद्याद्विपरीतन्तु निष्फलम्" इति वचनात्। "यस्त्वेकपङ्क्त्यां विषमं ददाति स्नेहाद्भयाद्वा यदि वाऽर्थहेतोः। वेदेषु दृष्टामृषिभिस्तु गीतां तां ब्रह्महत्यां मुनयो वदन्ति॥ एकपङ्क्त्युपविष्टानां दुष्कृतानां दुरात्मनाम्। सर्वेषां तत्समं तावद्यावत्पङ्क्तिर्न्न भिद्यते" इति वह्निपुराणाच्च। तत् = भोजनम्। तथोष्णादिकमेव दद्यात्तथा च गृह्यसूत्रम्—"उष्णं स्विन्न(ष्ठ)मन्नं दद्यात्" इति। आदित्यपुराणेऽपि—"विविधं पायसं दद्याद्भक्ष्याणि सुबहून्यपि। स्निग्धोष्णानि च यो दद्यादग्निष्टोमफलं लभेत्" इति। श्राद्धे ब्राह्मणोच्छिष्टं भूमिगतं दासवर्गाय देयम्, तथा च मनुः—"उच्छेषणं भूमिगतमजिह्मस्याशठस्य च। दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते" इति। उच्छेषणमुच्छिष्टम्। पित्र्ये = पितृसम्बन्धिकर्मणि। एवञ्च "श्राद्धं भुक्त्वा य उच्छिष्टं वृषलाय प्रयच्छति। स मूढो नरकं-याति कालसूत्रमवाक्शिराः" इति मनुवचनं पात्रस्थोच्छिष्टपरं प्रागुक्तमनूक्तेतरशूद्रपरं वा वेदितव्यम्।



## अथ निमन्त्रणीयादिब्राह्मणनिर्णयः।

महाभारतम्—"विद्यावेदव्रतस्नाता ब्राह्मणाः सर्व एव हि। सदाचारपराश्चैव विज्ञेयाः सर्वपावनाः॥ पाङ्क्तेयाँस्तु प्रवक्ष्यामि ज्ञेयास्ते पङ्क्तिपावनाः। त्रिणाचिकेतः पञ्चाग्निस्त्रिसुपर्णः षडङ्गवित्॥ ब्रह्मदेयानुसन्तानश्छन्दोगो ज्येष्ठसामगः। मातापित्रोर्यश्च वश्यः श्रोत्रियो दशपूरुषः॥ ऋतु कालाभिगामी च धर्मपत्नीषु यः सदा। वेदविद्याव्रतस्नातो विप्रः पङ्क्तिं पुनात्युत॥ अथर्वशिरसोऽध्येता ब्रह्मचारी यतव्रतः। सत्यवादी धर्मशीलः—स्वकर्मनिरतश्च यः॥ ये च पुण्येषु तीर्थेषु अभिषेककृतश्रमाः। मखेषु च सममन्त्रेषु भवन्त्यवभृथप्लुताः[1]॥ अक्रोधना ह्यचपलाः क्षान्ता दान्ता जितेन्द्रियाः। सर्वभूतहिता ये च श्राद्धेष्वेतान्निमन्त्रयेत्" इति। पाद्मेऽप्येतान्प्रकृत्य "एतेषु दत्तमक्षय्यमेते वै पङ्क्तिपा-

---

१. अवभृथो यज्ञान्तकर्मविशेषस्तत्र प्लुताः = स्नाता इत्यर्थः। 'दीक्षान्तेऽवभृथो यज्ञ'—इत्यमरः।

वनाः । यतयो मोक्षधर्मज्ञा योगाः सुचरितव्रताः ॥ ये चेतिहासं प्रयताः श्रावयन्ति द्विजोत्तमान् । ये च भाष्यविदः केचिद्ये च व्याकरणे रताः ॥ अधीयते पुराणं ये धर्मशास्त्राणि चाप्युत । अधीत्य च यथान्यायं विधिवत्तस्य कारिणः ॥ उपपन्नो गुरुकुले सत्यवादी सहस्रदः । अग्र्याः सर्वेषु वेदेषु सर्वप्रवचनेषु च ॥ यावदेते प्रपश्यन्ति पङ्क्त्यां तावत्पुनन्ति च । ततो हि पावनात्पङ्क्त्या उच्यन्ते पङ्क्तिपावनाः ॥ अनृत्विगनुपाध्यायः स चेदग्र्यासनं व्रजेत् । ऋत्विग्भिरन(भ्य)नुज्ञातः पङ्क्त्या हरति दुष्कृतम् ॥ अथ चेद्वेदवित्सर्वैः पङ्क्तिदोषैर्विवर्जितः । न चेत्स्यात्पतितो राजन् पङ्क्तिपावन उच्यते" इति । त्रिणाचिकेतः=यजुर्वेदपारङ्गमः । त्रिकृत्वश्चितो नाचिकेतोऽग्निर्येनेति व्युत्पत्तेः । 'पूर्वपदात्संज्ञायामग'-इति णत्वम् । त्रिणाचिकोऽध्वर्युवेदभागस्तद्व्रतञ्च तद्योगात्पुरुषोऽपी'ति तु श्रकृतवचनटीकायां कुल्लूकभट्टः । पञ्चाग्निः=गरुड-कालिकादिपुराणोक्तः पञ्चभिरग्निसूर्यैर्ग्रीष्मे तपोविशेषकर्त्ता । त्रिसुपर्णः=बह्वृचवेदभागस्तद्व्रतञ्च तत्सम्बन्धात्पुरुषोऽपि । "त्रिणाचिकेतस्त्रिमधुस्त्रिसुपर्णः षडङ्गवित्" इति पङ्क्तिपावनप्रक्रमे मार्कण्डेयपुराणम् । तत्र त्रिमधुः=त्रयो मधुशब्दा यस्मिन् स मधुवातेति मन्त्रो यत्र तादृश ऋग्वेदस्तदध्ययनकर्तृत्वादृग्वेदी पुरुषोऽपि । यथोक्तगुणवदलाभे सामान्यगुणा अपि भोज्यास्तत्र विशेषतो मातामह-मातुल-दौहित्र-श्वशुर-स्वस्रीय-जामात्रादयो वक्ष्यन्ते । सन्निहितांस्तु स्वल्पगुणानपि न त्यजेदेव "यस्त्वासन्नमतिक्रम्य ब्राह्मणं पतितादृते । दूरस्थं भोजयेन्मूढो गुणाढ्यं नरकं व्रजेत् ॥ तस्मान्नातिक्रमेत्प्राज्ञो ब्राह्मणान् प्रातिवेशिकान् । सम्बन्धिनस्तथा सर्वान् दौहित्रं विट्पतिं तथा ॥ भागिनेयं विशेषेण तथा बन्धून् गृहाधिपान् । नातिक्रामेन्नरश्चैतान् सुमूर्खानपि गोपते ॥ अतिक्रम्य महारौद्रं रौरवं नरकं व्रजेत्"

---

१. एतद्विवरणं विशिष्य द्रष्टव्यं कठोपनिषदः प्रथमवल्ल्याः १३-१८ पर्यन्ते "त्रिणाचिकेतस्त्रिभिरेत्य सन्धिं त्रिकर्मकृत्तरति जन्ममृत्यू । ब्रह्मयज्ञं देवमीड्यं विदित्वा निचाय्येमां शान्तिमत्यन्तमेति ॥ त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते नाचिकेतम् । स मृत्युपाशान् पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके" इत्यादिभिरुक्तम् ।

इति ब्रह्मपुराणस्मरणात् । 'नास्ति मूर्खे व्यतिक्रम'-इति व्यासाद्यभिधानादत्र ब्राह्मणानित्यल्पविद्यानिति न तु मूर्खानित्यवगन्तव्यम् । सुमूर्खानिति तु दौहित्रादिविशेषणम् । प्रातिवेशिकानितरजातीनपि भोजयेदिति स्पष्टमन्यत्र । दक्षः—"दीनानाथविशिष्टेभ्यो दत्तञ्च सफलं भवेत्" इति । दीनः=निर्वाहोपायशून्यः, अनाथः=अरक्षकः । व्यासः—"दयामुद्दिश्य यद्दानमपात्रेभ्योऽपि दीयते । दीनान्धकृपणेभ्यश्च तदानन्त्याय कल्पते" इति । ब्राह्मणालाभे दर्भवटुं निधायापि श्राद्धं कार्यमाह प्रभासखण्डे— "अलाभे ब्राह्मणस्यैव कौशः कार्यो वटुः प्रिये । एवमप्याचरेच्छ्राद्धं षड्दैवत्यं समाहितः ॥ विभक्तिं कारयेद्यस्तु पितृहा स प्रजायते" इति । ब्राह्मणसङ्ख्यामाह बृहस्पतिः—"आतुरं तद्भवेच्छ्राद्धं दश यत्र न भुञ्जते । श्रोत्रिया भोजनीयाश्च नव सप्त त्रयोदश ॥ ज्ञातयो बान्धवा निःस्वास्तथा चातिथयोऽपरे । प्रदद्याद्दक्षिणां तेषां यथाशक्त्यनुरूपतः ॥ हतमश्रोत्रिये दानं हतो यज्ञो ह्यदक्षिणः । तस्मात्पणं काकिणीं (नीं) वा पुष्पं फलमथापि वा ॥ प्रदद्याद्दक्षिणां यज्ञे तथा स सफलो भवेत्" इति । काकिणी (नी)=कपर्द्दकः । 'पणचतुर्थांश'-इति-शब्दकल्पद्रुमः । "वराटकानां दशकद्वयं यत्सा काकिणी (नी)" इति लीलावती । काकिनीति नकारघटितोऽपीत्यमरटीकायां रायमुकुटस्तथा च पञ्चतन्त्रे "ईश्वरा भूरिदानेन यल्लभन्ते फलं किल । दरिद्रस्तच्च काकिन्या प्राप्नुयादिति नः श्रुतम्" इति ।

यज्ञोऽत्र श्राद्धमेव प्रकरणात् । सम्वर्त्तः—"श्रोत्रियाय दरिद्राय अर्थिने च विशेषतः । यद्दानं दीयते तस्मै तद्दानं शुभकारकम्" इति । श्रोत्रियलक्षणमाह यमः—"ओङ्कारपूर्विकास्तिस्रः सावित्रीं यश्च विन्दति । चरति ब्रह्मचर्यञ्च स वै श्रोत्रिय उच्यते" इति । पद्मपुराणम्—"जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते । वेदाभ्यासी भवेद्विप्रः श्रोत्रियस्त्रिभिरेव हि" इति । इत्थमेव मार्कण्डेयपुराणेऽपि । दानकमलाकरः—"एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च । षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्" इति । छन्दोऽधीत इत्यर्थे "श्रोत्रियश्छन्दोऽधीते" इति पाणिनिसूत्रनिपातितोऽयं श्रोत्रियशब्दः । याज्ञवल्क्यः—"गोभूतिलहिरण्यादि पात्रे दातव्यमर्चितम् । नापात्रे विदुषा किञ्चिदात्मनः श्रेय

इच्छता ॥ विद्यावन्तश्च ये विप्राः सुव्रताश्च तपस्विनः। सत्यसंयमसंयुक्ता ध्यानयुक्ता जितेन्द्रियाः ॥" इति। अत्र 'दानपात्राणि' इति शेषः। शातातपः—"प्रदाय मुष्टिशाकं वा श्रद्धाभक्तिसमन्वितः। महते पात्रभूताय सर्वाभ्युदयमाप्नुयात्" इति। मनुः—"श्रोत्रियायैव देयानि हव्यकव्यानि दातृभिः। अर्हत्तमाय विप्राय तस्मै दानं महाफलम् ॥ एकैकमपि विद्वांसं दैवे पित्र्ये च भोजयेत्। पुष्कलं फलमाप्नोति नामन्त्रज्ञान् बहूनपि ॥ सहस्रं हि सहस्राणामनृचां यत्र भुञ्जते। एकस्तान्मन्त्रवित्प्रीतः सर्वानर्हति धर्मतः" इति। व्यासः—"सममब्राह्मणे दानं द्विगुणं ब्राह्मणब्रुवे। अधीते शतसाहस्रमनन्तं वेदपारगे" इति। अब्राह्मणः शूद्रादी राजसेवकादिश्च। ब्राह्मणब्रुवो य आत्मानं ब्राह्मणं ब्रूते न तु वस्तुतो लक्षणसम्पन्नो ब्राह्मणः। यथाह व्यासः—"गर्भाधानादिभिर्युक्तस्तथोपनयनेन च। कर्मकृच्च न चाधीते स भवेद् ब्राह्मणब्रुवः" इति। बृहस्पतिः—"शूद्रे समगुणं दानं वैश्ये च द्विगुणं स्मृतम्। क्षत्रिये त्रिगुणं प्राहुर्ब्राह्मणे षड्गुणं स्मृतम् ॥ श्रोत्रिये चैव साहस्रमाचार्ये द्विगुणं ततः। आत्मज्ञे शतसाहस्रमनन्तं त्वग्निहोत्रिणे" इति। प्रतिषेधमाह विष्णुः—"न दानं यशसे दद्यान्न भयान्नोपकारिणे। न नृत्यगीतशीलेभ्यो धर्मार्थमिति निश्चयः" इति। व्यासः—"नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते। रोदित्यन्नं दीयमानं मया दुष्कर्म किं कृतम्" ॥ शातातपः—"ब्राह्मणातिक्रमो नास्ति विप्रे वेदविवर्जिते। ज्वलन्तमग्निमुत्सृज्य न हि भस्मनि हूयते" इति। "अन्यायाधिगतां दत्त्वा सकलां पृथिवीमपि। श्रद्धावर्जमपात्राय न किञ्चिद्गतिमाप्नुयात्" इति च। विशिष्टदानमाह स एव—"अभिगत्य तु यद्दानं यच्च दानमयाचितम्। विद्यते सागरस्यान्तस्तस्यान्तो नैव विद्यते" इति। अभिगत्य देवब्राह्मणाभिमुखं गत्वा अधिकन्तु ग्रन्थान्तरेभ्योऽवसेयम। न चैवम्—"आसुरं तद्भवेच्छ्राद्धं दश यत्र न भुञ्जते" इत्यादिप्रागुक्तबृहस्पत्यादिवचनैः सह—"द्वौ दैवे पितृकार्ये त्रीनेकैकमुभयत्र वा। भोजयेत्सुसमृद्धोऽपि न प्रसज्जेत विस्तरे ॥ सत्क्रियां देशकालौ च शौचं ब्राह्मणसम्पदः। पञ्चैतान् विस्तरो हन्ति तस्मान्नेहेत विस्तरम्" इति म वचनस्य 'नवावरान् भोजयेदयुजो वा यथोत्साहम्" इति गौतमवचनस्य च विरोधो दुष्परिहर इति वाच्यम्, प्रकृत-

मनुवचनस्य पार्वणैकोद्दिष्टाभ्युदयिकादिश्राद्धपरकतया पूर्वोक्तबृहस्पति-वचनस्य च षोडशश्राद्धपरकतया विभिन्नविषयत्वेन विरोधस्य दूरापहतत्वादत एवाह बह्वृचगृह्यकारः—"अथातः पार्वणश्राद्धे काम्य आभ्युदयिक एकोद्दिष्टे ब्राह्मणान्" इत्युपक्रम्य "एकैकमेकैकस्य द्वौ द्वौ त्रीस्त्रीन् वा" इति । 'द्वौ द्वौ' इति पक्ष आभ्युदयिकविषय इति कुल्लूकभट्टः । ब्राह्मणभोजनविधौ दौहित्रादिविषये मनुना विशेषो दर्शितः—"व्रतस्थमपि दौहित्रं श्राद्धे यत्नेन भोजयेत् । कुतपं चासने दद्यात्तिलैश्च विकिरन्महीम् ॥ श्राद्धे त्रीणि पवित्राणि दौहित्रः कुतपस्तिलाः । त्रीणि चात्र प्रशंसन्ति शौचमक्रोधमत्वराम्" इति । कुतपो नेपालकम्बलः । तिलविकरणं दौहित्रमन्तरेणापि । तथा—"मातामहं मातुलञ्च स्वस्रीयं श्वशुरं गुरुन् । दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् ॥ इति । स्वस्रीयो भागिनेयः । विट्पतिर्जामाता । बन्धुर्मातृष्वसृपुत्रादयः । एष द्वितीयः कल्पो, मुख्यस्तु श्रोत्रियादिभोजनमेवेति प्रागेवोक्तम् । अपाङ्क्तेयानाह-पाद्मे स्वर्गखण्डे-"कितवो भ्रूणहा यक्ष्मी पशुपालो निराकृतिः । ग्रामप्रेष्यो वार्द्धुषिको गायनः सर्वविक्रयी ॥ अगारदाही गरदः कुण्डाशी सोमविक्रयी । सामुद्रिको राजदूतस्तैलिकः कूटकारकः । पित्रा विवदमानश्च यस्य चापपतिर्गृहे । अभिशस्तस्तथा स्तेनः शिल्पं यश्चोपजीवति ॥ पर्वकारश्च सूची च मित्रध्रुक् पारदारिकः । अव्रतानामुपाध्यायः काण्डपृष्ठस्तथैव च ॥ श्वभिश्च यः परिक्रामेद्यः शुना दष्ट एव च । परिवित्तिस्तु यश्च स्याद् दुश्चर्मा गुरुतल्पगः ॥ कुशीलवो देवलको नक्षत्रैर्यश्च जीवति । ईदृशा ब्राह्मणा ये च अपाङ्क्तेयास्तु ते मताः ॥ रक्षांसि भुञ्जते हव्यं यदेषां तु प्रदीयते । श्राद्धे भुक्त्वा महाराज दुश्चर्मा गुरुतल्पगः ॥ श्राद्धं नाशयते तस्य पितरोऽपि न भुञ्जते । सोमविक्रयिणे दत्तं विष्ठातुल्यं भवेन्नृप ॥ भिषजे शोणितसमं नष्टं देवलके तथा । अप्रतिष्ठं वार्द्धुषिके निष्फलं परिकीर्त्तितम् ॥ बहुवाणिजके दत्तं नेह नामुत्र तद्भवेत् । भस्मनीव हुतं हव्यं तथा पौनर्भवे

---

१. छागलोमजकम्बलमिति शब्दकल्पद्रुमः । मेदिनीकारमते तु कुतपो दौहित्रकुशादि तत्र दौहित्रस्य प्रकृतवचने पृथगुपादानादग्रहणं बोध्यम् । हेमचन्द्रमते भागिनेयातिथी अपि गृह्येते ।

द्विजे। ये च धर्म्मादपेतेषु चरित्रापगतेषु च। हव्यं कव्यं प्रयच्छन्ति तेषां तत्प्राय नश्यति॥ ज्ञानपूर्वन्तु ये तेभ्यः प्रयच्छन्त्यल्पबुद्धयः। पुरीषं भुञ्जते तस्य पितरः प्रेत्य निश्चितम्॥ एतान् विद्धि महाबाहो अपाङ्क्तेयान् द्विजाधमान्। शूद्राणामुपदेशन्तु ये कुर्वन्त्यल्पबुद्धयः॥ षष्टि काणः शतं खञ्जः श्वित्री यावत्प्रपश्यति। पङ्क्त्यां समुपविष्टायां तावद्दूषयते नृप॥ अपाङ्क्ते यो यतः पङ्क्त्यां भुञ्जानो ननु पश्यति। तावत्फलाद् भ्रंशयति दातारं तस्य बालिशम्" इति। कितवो धूर्त्तो यद्वा द्यूतकारकः 'धूर्त्तोऽक्षदेवी कितव' इत्यमरात्। तथा च मनुः—"जटिलञ्चानधीयानं दुर्बलं कितवं तथा। याजयन्ति च ये पूगांस्तांश्च श्राद्धे न भोजयेत्" इति। भ्रूणहा = गर्भघ्नः। यक्ष्मा = राजयक्ष्मरोगी। निराकृतिः = स्वाध्यायवर्जितः। वार्द्धुषिकः= धनवृद्ध्यर्थं द्रव्यप्रयोक्ता। गरदो विषदायकः। कुण्डाशी = पत्यौ जीवति जारजनितः कुण्डस्तदन्नभोजी यद्वा कुण्डं = योनिकुण्डं तदुपलक्ष्यीकृत्याश्नाति = जीवनयात्रां यापयति यः, स इति महाभारतदानधर्म्मप्रकरणे। सामुद्रिको हस्तरेखादिदर्शनेन फलाफलकथकः। तैलिकः = तैलनिष्पादकस्तथा चापाङ्क्तेयानुद्दिश्य मनुः-"समुद्रयायी वन्दी च तैलिकः कूटकारकः" इति। कूटकारकः—"नैव धर्म्मेण तद्राज्यं नार्जवेन न चौजसा। अक्षकूटमधिष्ठाय हृतं दुर्योधनेन तु" इतिमहाभारतोक्तेः, "द्विगुणा वाऽन्यथा ब्रूयुः कूटाः स्युः पूर्वसाक्षिणः" इति याज्ञवल्क्योक्तेश्च कूटो माया मिथ्याव्यवहार इति यावत्तत्कर्त्ता। उपपतिर्जारः। अभिशस्तः='आक्षारितः क्षारितोऽभिशस्त'-इत्यमराल्लोकापवाददूषितः। पर्वकारः = धनुःशरादिनिर्माता, अमावास्यादिपर्वसु नियमेन पौरोहित्यकार्यकारी च। पारदारिकः=परस्त्रीलम्पटः। अव्रतानाम् = ब्रह्मचारिनियमशून्यानाम्। काण्डपृष्ठः = शस्त्राजीवी। परिवित्तिः = कनिष्ठे विवाहितेऽविवाहितो ज्येष्ठः। कुशीलवः= नटवृत्तिः। देवलकः=देवांशोपजीवी "देवकोषोपजीवी च नाम्ना देवलको मत" इति देवलस्मृतेः। पौनर्भवे = द्विष्कृतभर्तृकस्त्रीपुत्रे। प्रोक्तमनुवचने 'समुद्रयायी'-त्यत्र ताच्छील्ये णिनिस्तेन समुद्रयानशीलो गृह्यते न तु

---

१. छान्दसोऽयं प्रयोगः। २. मूर्खम्। ३. सङ्घान्-बहूनिति यावत्
४. अधीयतेऽसावध्यायो वेदः, स्वस्याध्यायः स्वाध्यायः-स्वशाखीयो वेद इत्यर्थः।

संयोगतः समुद्रयात्राकृत्। भोज्यवर्ज्यब्राह्मणविवेकस्तदन्नादिविवेकश्च विस्तरेण "ये स्तेनपतितक्लीबा ये च नास्तिकवृत्तयः। तान्हव्यकव्ययो-विप्राननर्हान्परिवर्जयेत्" इत्यादिभिर्वचनैरुक्तो मनुनेति तत्त्वाधिकजिज्ञा-सुभिर्द्रष्टव्यम्। निमन्त्रणं स्वीकृत्य श्राद्धे भोजनमकुर्व प्रत्यवायमाह मनुः— "केतितस्तु यथान्यायं हव्यकव्ये द्विजोत्तमः। कथञ्चिदप्यतिक्रामन्पापः सूकरतां व्रजेत्" इति। केतितः=निमन्त्रितः। भोजनप्रकारमाह बृहद्धर्म-संहितायां व्यासः-"न क्षीरे लवणं दद्यान्न ताम्रे गुडमेव च। क्षीरं तथाऽऽ-मिषं भुक्त्वा न भुञ्जीत कदाचन" इति। आमिषं=मांसम्। स्मृत्यन्तरे-"ग-व्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना' इति। विष्णुपुराणे-"मौनेनैव तु यो भुङ्क्ते सर्व्वमेव दृढव्रतः। एकविंशतिगात्राणि तारयन्नरकार्णवात्"॥ इति भोजनकाले भाषमाणे प्रायश्चित्तमाह संवर्त्तः—"भुञ्जानश्च यदा ब्रूया-द्गायत्र्यष्टशतं जपेत्" इति। व्यासः-"पङ्क्तिमध्ये न भोक्तव्यं पङ्क्तिं नैव विल-ङ्घयेत्। पञ्चाङ्गुलीभिर्भोक्तव्यं नाङ्गुलीपृष्ठमालिहेत्" इति। अङ्गुलीपृष्ठ-मङ्गुल्युपरिभागम्। आलिहेदित्यत्र जिह्वयेति शेषः। शङ्खः-"एकपङ्क्त्युपवि-ष्टानां विप्राणां सह भोजने। यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं विवर्जयेत्॥ मोहाद्भुञ्जीत यः पङ्क्त्यामुच्छिष्टं सह भोजनम्। प्रायश्चित्तं चरेद्विप्रः कृच्छ्रं सान्तपनन्तथा" इति सामान्येनोक्तमप्येतत्सर्वमविशेषाच्छ्राद्धेऽपि योज्य-मित्युक्तम्। यश्च श्राद्धे निमन्त्रणं स्वीकृत्य शूद्रया सह रमते ब्राह्मणस्तम्प्र-त्यप्याह स एव—"आमन्त्रितस्तु यः श्राद्धे वृषल्या सह मोदते। दातु-र्यद्दुष्कृतं किञ्चित्तत्सर्वं प्रतिपद्यते" इति। तृप्तिप्रश्नार्थं ब्राह्मणान् कुत्र कथं पृच्छेदित्याह मनुः-"पित्र्ये स्वदितमित्येव वाच्यं गोष्ठे तु सुश्रुतम्। सम्प-न्नमित्यभ्युदये दैवे रुचितमित्यपि" इति। पित्र्ये = पितृकर्म्मण्येकोद्दिष्टा-दौ श्राद्धकर्त्रा स्वदितम्? इति ब्राह्मणाः प्रष्टव्याः, गोष्ठे 'गोष्ठ्यां शुद्ध्यर्थ-मात्मन' इति प्राक्प्रतिपादितद्वादशविधश्राद्धान्यतमश्राद्धे स्वदितमिति, अभ्युदये = आभ्युदयिकश्राद्धे सम्पन्नमिति; दैवे=देवोद्देश्यके श्राद्धे रुचि-तमितीत्येतद्व्याख्यायां कुल्लूकः।

—०ः०ः०—

## अथ भूस्वामिपितृभ्योऽन्नदाननिर्णयः ।

परकीये प्रदेशे तद्भूमिस्वामि-पितृभ्योऽन्नमदत्त्वा श्राद्धं न कार्य-मित्याह यमः—"परकीय-प्रदेशेषु पितॄणां निर्वपेत्त यः । तद्भूमि-स्वामि-पितृभिः श्राद्ध-कर्म विहन्यते" इति । ब्रह्मपुराणं महाभारतञ्च—"परकीय-गृहे यस्तु स्वान पितॄंस्तर्पयेद् यदि । तद्भूमि-स्वामिनस्तस्य हरन्ति पितरो बलात् ॥ अग्रभागं ततस्तेभ्यो दद्यान्मूल्यञ्च जीवताम्" इति । पितृ-पदञ्चात्राजहत्स्वार्थलक्षणया मृतमात्रपरमाकाङ्क्षातौल्यात्सकल-शिष्टाचाराच्चेति मात्रादिश्राद्धस्यापि संग्रहः । गृहपदं स्थानमात्र-परं प्रोक्त-यमवचनैकवाक्यतानुरोधात् । तेन परकीयगृहे = परस्वत्वाऽऽस्पदस्थाने । अग्रभागोऽत्र श्राद्धीय-द्रव्यस्य ( अन्नादेः ) । तेभ्यः = तद्भूस्वामि-पितृभ्यः । जीवताञ्च भूस्वामिनां कृते किञ्चिन्मूल्यमानतिकारकं दद्यादित्यर्थः । 'मूलञ्च जीवता'मिति द्वैतपरिशिष्टे पाठस्तत्र मूलं = ताम्बूलादीत्यर्थः । ब्रह्मवैवर्त्ते—"पिण्डं पित्रे भूमि-भर्त्तुर्न प्रदाय च मानवः । श्राद्धं करोति यो मूढो नरकं याति निश्चितम्" इति । पिण्ड-मन्नम् । कूर्मपुराणे—"पारक्ये भूमिभागे तु पितॄणां नैव निर्वपेत् । स्वामिभिस्तद्विहन्येत मोहाद् यत्क्रियते नरैः" इति । तस्मात्तत्र तद्भूमि-स्वामि-पितृभ्योऽग्रभागं दद्यादिति शेषः । एतच्च पितृ-रीत्या पित्र्यत्वा-न्नैमित्तिकत्वेन वृद्धिश्राद्धेऽप्यपसव्येनैव कर्त्तव्यम् । वृद्धिश्राद्धम्प्रक्रम्य प्रवर्त्तमानस्य—"नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते । पात्राणां पूरणादीनि दैवेनैव हि कारयेत्" इति कात्यायन-वचनस्य नैमित्तिकेतर-वृद्धि-श्राद्ध-विषयत्वात् । स्वगृहेऽपि तद्भूमीश्वरत्वं वस्तुतो न स्वस्येति तत्रापि भू-स्वामि-पित्रन्न-दानमुचितमेव । इदञ्चाग्रभाग-दानमन्नत्या-गात्पूर्वमेवेति मैथिल-निबन्धारः शिष्टाचारश्च । स्वस्य स्वामित्वे तु नैतद् ध्येयमिति स्पष्टमेव । अस्यापवादमाहाऽऽदित्यपुराणम्—"अटवी पर्वताः पुण्या नदी-तीराणि यानि च । देवखाताश्च गर्त्ताश्च न स्वाम्यं तेषु विद्यते ॥ इति । यमश्च—"अटव्यः पर्वता नद्यः पुण्यान्यायतनानि च । सर्वाण्यस्वामिकान्याहुर्न हि तेषु परिग्रहः" इति । आयतनानि = देवालयादीनि । परिग्रहः = स्वाम्यम् । अत्र नदी-पदं तत्कूलान्तर्हस्त-

चतुष्टयात्मक-तीर-परम्—"प्रवाहमवधिं कृत्वा यावद्धस्त-चतुष्टयम्। "तत्र नारायणः स्वामी नान्यः स्वामी कदाचन" इति श्राद्धचिन्तामणि-धृत-स्मृतेस्ततश्चैषामटव्यादीनामस्वामिकतया तत्र भूस्वामिभ्यस्तत्पितृभ्यो वा नान्नादि-दानमिति पर्य्यवसन्नमाचारोऽपीत्थमेव शिष्टानाम्। एतच्च भू-स्वामिनेऽन्नदानं न नित्य-श्राद्धे, तस्य महायज्ञान्तर्गतत्वेनाश्राद्धत्वात् समाप्ति-जनक-विघ्न-संसर्गाभावे मङ्गलजन्य—विघ्नध्वंसवदन्यथासिद्धत्वादिति केशवमिश्राः।



## अथ पितृपात्रेऽन्नपरिवेषणनिर्णयः।

अन्नपरिवेषणं पाणिभ्यामेव—"पाणिभ्यां तूपसंगृह्य स्वयमन्नस्य वर्द्धितम्। विप्रान्तिके पितॄन् ध्यायञ्छनकैरुपनिःक्षिपेत्" इत्युपक्रम्य "गुणांश्च सूपशाकाद्यान् पयो दधि घृतं मधु। विन्यस्य प्रयतः सम्यग् भूमावेव समाहितः॥ भक्ष्यं भोज्यञ्च विविधं मूलानि च फलानि च। हृद्यानि चैव मांसानि पानानि सुरभीणि च॥ उपनीय तु तत्सर्वं शनकैः सुसमाहितः। परिवेषयेच्च प्रयतो गुणान् सर्वान् प्रदर्शयन्॥" इति मनुवचनादिति द्वैतनिर्णये महामहोपाध्यायो नरहरिर्व्यवहारोऽप्ययमत्वेतन इत्थमेवात एव पद्धत्त्यादावपि 'कराभ्यामादाये'त्येव सर्वत्रोक्तम्। द्वैतपरिशिष्टे केशवमिश्रास्तु—"कर्मोपदिश्यते यत्र कर्त्तुरङ्गं नचोच्यते। दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः" इति च्छन्दोग-परिशिष्टाद्दक्षिण-करेणैवान्नं परिवेषणीयमत एव—"श्राद्धे हवन-काले तु पाणिनैकेन निर्वपेत्। तर्पणे द्वितये कुर्यादेष एव विधिः सदा" इति नाना-निबन्ध-धृता स्मृतिः सङ्गच्छते। प्रतिषिद्धञ्च हस्त-द्वय-योगेनान्न-परिवेषणं भृगु-संहितायाम्—"उभयोर्हस्तयोर्युक्तं यदन्नमुपनीयते। तद्विप्रलुम्पन्त्यसुराः सहसा दुष्ट-चेतसः" इत्यनेन। येत्वत्र वचने 'युक्तं शुभाभ्यां पाणिभ्यामिति पाठान्तरं मत्वा युक्तमित्यस्य पाणिभ्यामसम्बद्धमित्यर्थं कुर्वते ते हेया एव। "एकेन पाणिना दत्तं न कदाचन भक्षयेत्। घृतं तैलं च पानीयं लवणं गोरसं तथा" इति तरङ्गिणी-लिखित-वचनन्तूत्तरार्द्धोक्त-घृत-तैलादि-मात्र-विषयमिति व्याचक्षते, तद्रभसात्, 'पाणिभ्यां तूपसंगृह्ये'ति मनुना

कर्त्तरङ्गस्य परिवेषणेऽभिहिततया च्छन्दोगपरिशिष्टोक्त-वचनस्यात्राविषयत्वात् 'श्राद्धे हवनकाल' इत्यस्य च श्राद्धांशे परिवेषणातिरिक्त-कर्मपरत्वात्। भृगुसंहितायां 'युक्तं ह्युभाभ्यां पाणिभ्या'मिति पाठ-खण्डनेन दुराग्रहग्रस्तत्वाच्च। तरङ्गिणीलिखित-वचनस्यास्मत्पक्षेऽपि घृत-तैलादि-मात्र-विषयतायां विरोधाभावाच्च किञ्च "उभयोर्हस्तयोर्मुक्तं यदन्नमुपनीयते। तद्विप्रलुम्पन्त्यसुराः सहसा दुष्टचेतसः" ॥ इति मनु-वचनेन, "उभयोरित्यधिकरणसप्तमी—उभयोः करयोर्मुक्तमवस्थितं यदन्नं ब्राह्मणान्तिकमानीयते तदसुरा दुष्टबुद्धय आच्छिन्दन्ति तस्मान्नैकहस्तेनानीय परिवेष्टव्यम्" इति तट्टीकायां कुल्लूकभट्ट-व्याख्यानेन च मिश्रोक्त सर्वं दुराग्रह-निबन्धनमेव। वस्तुतस्तु "एकेन पाणिने"-ति तरङ्गिणीलिखितवचनोक्तस्य 'एकेने'त्यस्य। 'केवलेने' त्यर्थः 'पाणिने'-त्येकवचनञ्च जाति-विवक्षया। तथा च केवलहस्तदत्त-घृत-तैल जल-लवण-गोरस-प्रतिषेधकमिदमेतच्च "हस्तदत्ताश्च ये स्नेहा लवणं व्यञ्जनानि च। दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते च किल्बिषम् ॥ तस्मादन्तरितं देयं पर्णेनाथ तृणेन वा। प्रदद्यान्न तु हस्तेन नाऽऽयसेन कथञ्चन" इति वसिष्ठवचनं स्पष्टयति। अत एव "खदिरं लवणं वह्निर्गोरसो व्यञ्जनं जलम्। हस्ताद्धस्ते न दातव्यं हन्ति पुण्यं पुराकृत"-मिति स्मृत्यन्तरमपि सङ्गच्छते। तस्माच्छ्राद्धेऽन्नपरिवेषणं पाणिभ्यामेवेति निष्प्रत्यूहः पन्था इति मे प्रतिभाति।



## अथ श्राद्धस्थाननिर्णयः।

श्राद्धानर्ह-स्थानान्याह पृथ्वीचन्द्रोदये शङ्खः—"गो-गजाश्वादि-जुष्टेषु कृत्रिमायां तथा भुवि। न कुर्याच्छ्राद्धमेतेषु पारक्यासु च भूमिषु ॥" इति। कृत्रिमायां निबद्धायाम्। पारक्यासु परकीयासु। यमः—"रूक्षं कृमि-हतं क्लिन्नं सङ्कीर्णानिष्टगन्धिकम्। देशन्त्वनिष्टशब्दञ्च वर्जयेच्छ्राद्ध-कर्मणि ॥" इति एतच्च सति सम्भवे। स्मृतिसारः—"नैकवासा न च द्वीपे नान्तरिक्षे कदाचन। श्रुति-स्मृत्युदितं कर्म्म न कुर्यादशुचिः क्वचित्" इति। अन्तर्जलस्य तटे। दिवोदासः—"म्लेच्छ देशे तथा रात्रौ सन्ध्यायां

विप्रवर्जिते। न श्राद्धमाचरेद्विद्वान्म्लेच्छाकाशे कथञ्चन" इति। म्लेच्छदेशादि-त्यागोऽपि सम्भवे सत्येव बोध्यः। यत्तु—"प्रणष्टाश्रमधर्म्माश्च देशा वर्ज्याः प्रयत्नतः" (वायुपुराणम्) "किरातेषु कलिङ्गेषु कौङ्कणेषु खसेष्वपि। सिन्धोरुत्तरकूलेषु नर्मदायाश्च दक्षिणे॥ पूर्वेण करतोयाया न देयं श्राद्धमुच्यते" (ब्रह्मपुराणम्) उत्तरेण महानद्या दक्षिणेन तु कीकटान्। देशस्त्रैशङ्कवो[2] नाम श्राद्धकर्मणि वर्जितः" (स्कन्दपुराणम्) इत्यादिवचन-जातं तत्काम्यश्राद्ध-प्रतिषेधकमितरथा तत्तद्देशस्थानां सर्वश्राद्ध-विलयापत्तेः। अत एव—"येषु स्थानेषु यच्छौचं धर्माचारश्च यादृशः। तत्र तन्नावमन्येत धर्मस्तत्रैव तादृशः" येषु देशेषु ये देवा येषु देशेषु ये द्विजाः। येषु स्थानेषु यत्तोयं या च यत्रैव मृत्तिका" इति मरीचिस्मृतिः सङ्गतिमेति। कीकटदेशस्य कर्मानर्हता तु मघवानं सम्बोध्य श्रूयते—"किन्ते कृण्वन्ति कीकटेषु गावो नाशिरम् दुह्रे न तपन्ति घर्मम्। आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयानः" इति। कृण्वन्ति = कुर्वन्ति। आशिरं = महावीरपात्रम्। दुह्रे = पूरयन्ति। घर्मम् = सौभरादि पात्रम्। आ नो भरेति। नः अस्मभ्यम्। आ भर = आहर, 'हृग्रहोर्भ'—इति हस्य भः। 'त्रिशङ्कोर्वर्जयेद्देशं सर्वं द्वादशयोजनम्"॥

अथ प्रसङ्गाच्छ्राद्ध[3]-देशा उच्यन्ते—

तत्र मनुः—"शुचि-देशं विविक्तं तु गोमयेनोपलेपयेत्। दक्षिणा-प्रवणञ्चैव[4] प्रयत्नेनोपपादयेत्" इति। दक्षिणा-प्रवणमिति-हस्त-मित-चतुरस्र-चतुरङ्गुलोच्छ्रित-सैकत-पिण्डिकां दक्षिणा-प्रवणां = दक्षिणस्यां दिश्यवनतां ('दछिनाठार' इति मैथिली-प्रसिद्धां) प्रयत्नेन सम्पादयेदित्यर्थः। 'प्रुङ्गता'—विति निष्पन्न'प्रवण'पदेन तथा वालुका-पिण्डिका-निर्माणं कार्य्यं येन तदुपरि त्यज्यमानं द्रव्य-जलादि दक्षिणस्यामेव दिशि निर्गच्छेदिति सूचितम्भवति। तथा च श्रूयते—"दक्षिणा-प्रवणो वै पितृ-लोकः" इति। मनुः—"चतुरस्रां पिण्डिकां तस्मिन्

१. णत्वं स्मार्त्तत्वात्। २. त्रिशङ्कुसम्बन्धी।

३. एतच्च श्राद्धपदं पार्वणादेरपि बोधकं प्रकृतोक्तमन्वादिवचनानां श्राद्ध-सामान्यमुद्दिश्यैव प्रवृत्तेः। ४. दक्षिणाप्लवनमिति प्रचुरः पाठः।

हस्त-दीर्घां समन्ततः। चतुरङ्गुलमुत्सेधां दक्षिण-प्लवनां शिवे ॥ पिण्ड-निर्वपणं तत्र कार्यं गृह्य-विधानतः। दैवे पूर्व-प्लवञ्चैव कारयेच्चैव वारुणे ॥ तिलांश्च विकिरेत्तत्र परितो बन्धयेदजान्। असुरोपहता भूमिस्तिलैः शुद्ध्यत्यजेन वा" इति। चतुरङ्गुल-मुत्सेधां = चतुरङ्गुलोच्छ्रिताम्। अत्राङ्गुलि-हस्तयोर्मानं कर्त्तुरेव तथा च च्छन्दोगपरिशिष्टे—"मानक्रियायामुक्तायामनुक्ते मानकर्त्तरि। मानकृद् यजमानः स्याद्विदुषामेष निश्चयः" इति। वारुणे = पितृभूमिमपेक्ष्य पश्चिमे। कौर्मे—"गोमयेनोदकैर्भूमिं शोधयित्वा समाहितः" इति। मेदिन्या मेदःक्लिन्नत्वं हेतूकृत्य ब्राह्मे—"तस्माच्छ्राद्धे पञ्चगव्यैर्लेप्या शोध्या तथोल्मुकैः। गौर-मृत्तिकयाच्छन्ना प्रकीर्णा तिलसर्षपैः" इति। अत्र भूरिति शेषः। "मेदसा दूषिता भूमिरविमुक्ते तु वर्जिता। पूता समभवत्सर्वा महादेवेन रक्षिता" इति मात्स्यवाक्याद्वाराणस्यधिकरणकश्राद्धे तद्धर्मेगोमयोपलेपमात्रमपेक्षितं तस्य प्रागुक्तमनुवचनेन शुचिदेशेऽपि विहितत्वात्। विष्णुधर्मोत्तरीयम्—"दक्षिणाप्रवणे देशे तीर्थादौ च गृहेऽपि वा। भूसंस्कारादि-संयुक्ते श्राद्धं कुर्यात्प्रयत्नतः ॥ इति। मात्स्ये—"गोमयेनोपलिप्ते तु दक्षिण-प्रवणे स्थले। श्राद्धं समाचरेद्भक्त्या गोष्ठे वा जलसन्निधौ" इति। स्थल-विशेषे फलविशेषमाह भारतम्—"तस्य देशाः कुरुक्षेत्रं गया गङ्गा सरस्वती। प्रभासं पुष्करञ्चेति तेपु श्राद्धं महाफलम्" इति। माधवीये व्यासः—"महोदधौ प्रयागे च काश्याञ्च कुरुजाङ्गले" इति। स्कन्द-पुराणम्—"तुलसीकाननछाया यत्र यत्र भवेद् द्विज। तत्र श्राद्धं प्रदातव्यं पितॄणां तृप्तिहेतवे" इति।

प्रजापतिस्मृतौ—"धात्रीबिल्ववटाश्वत्थमुनिचैत्यगजान्विता। श्राद्धं छायासु कर्त्तव्यं प्रासादाद्रौ महावने" इति। अन्वितेत्यत्र भूमिरिति शेषः। चैत्य-चितास्थं मन्दिरम्। शङ्खः—गङ्गायमुनयोस्तीरे पयोष्ण्यमरकण्टके। नर्म्मदाबाहुदातीरे भृगुलिङ्गे हिमालये ॥ गङ्गाद्वारे प्रयागे च नैमिषे पुष्करे तथा। सन्निहत्यां गयायाञ्च दत्तमक्षय्य (य) तां व्रजेत् ॥ इति। पयोष्णी=पय उष्णं यस्याः सा—विन्ध्याचलदक्षिणदेशस्था नदी। शूल-

---

१. गोमयोपलेपस्य।

पाणौ बृहस्पतिः—"गया (ङ्गा) यां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा। गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम्॥ धर्म्मारण्यं धर्म्मपृष्ठं धेनुकारण्यमेव च। दृष्ट्वैतान्स्त्रपितॄंश्चार्चन् वंशान् विंशतिमुद्धरेत्॥ इति। शङ्खः—"अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः। गयाशीर्षे वटे श्राद्धं यो नो दद्यात्समाहितः॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्" इति। याज्ञवल्क्यः—"यद्ददाति गयास्थश्च सर्वमानन्त्यमुच्यते। अपि जायेत सोऽस्माकं कुले कश्चिन्नरोत्तमः॥ गयाशीर्षे वटे श्राद्धं यो नः कुर्यात्समाहितः।" इति। वसिष्ठः—"नन्दन्ति पितरस्तस्य सुकृष्टेनेव कर्षकाः। यद्गयास्थो ददात्यर्थं पितरस्तेन पुत्रिणः" इति। यमः—"एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः। तेषां वै समवेतानां यद्येकोऽपि गयां व्रजेत्॥ यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्" इति। वाय्वग्निपुराणयोः—"उद्यतश्चेद्गयां गन्तुं श्राद्धं कृत्वा विधानतः। विधाय कार्पटीवेषं[1] कृत्वा ग्रामप्रदक्षिणम्॥ ततो ग्रामान्तरं गत्वा श्राद्धशेषस्य भोजनम्। ततः प्रतिदिनं गच्छेत्प्रतिग्रहविवर्जितः॥ पदे पदेऽश्वमेधस्य फलं स्याद्गच्छतो गयाम्। गृहाच्चलितमात्रेण गयाया गमनम्प्रति॥ स्वर्गारोहणसोपानं पितॄणाञ्च पदे पदे" इति। महाभारते—"ततो गयां समासाद्य ब्रह्मचारी समाहितः। अश्वमेधमवाप्नोति गमनादेव भारत" इति। ब्रह्मचर्यन्नाम दिव्यमानुषीणां चित्रकाष्ठपोतस्थमृण्मयादीनामप्यप्रार्थनमस्मरणमसङ्कल्पनमनभिप्रेक्षणमसङ्कीर्त्तनमनभिभाषणमनभिगमनमसन्दर्शनमसमागमश्चासा'-मिति हारीतोक्तं ब्रह्मचर्यं वेदितव्यम्। दिव्या उर्वशीतिलोत्तमादयः। पोतं=प्रतिमाकरणार्हं रजतादि तत्रस्थानां चित्रकाष्ठादिरचितानाम्। मृण्मयादीनां=मृदादिरचितमूर्त्तीनाम्। अनभिप्रेक्षणं=सम्यगाभिमुख्येनानवलोकनम्। असन्दर्शनम् अग्रतः पृष्ठतः पार्श्वतश्चाङ्गप्रत्यङ्गावलोकनाभावः। सर्व एवैते रागजनिताः प्रतिषिद्धा इति कल्पतरुः। तदग्रेऽपि पुनर्म्महाभारत एव—"यत्राक्षयवटो नाम त्रिषु लोकेषु विश्रुतः। यत्र दत्तं पितृभ्यस्तु भवत्यक्षयमित्युत॥ महानद्यामुपस्पृश्य[2] तर्पयेत्पितॄ-

---

१. जीर्णवस्त्रखण्डधारिवेषं भिक्षुवेषमित्यर्थः। २. यद्यपि 'उपस्पर्शस्त्वाचमन'-मित्यमरस्तथापीह वचनान्तरानुरोधाल्लक्षणया स्नानं गृह्यते—स्नानमन्त्रस्तु—

देवताः। अन्नयान्पितृलोकान्स कुलञ्चैव समुद्धरेत्॥ ततो ब्रह्मसरो गच्छेद्धर्म्मारण्योपशोभितम्। ब्रह्मलोकमवाप्नोति प्रभातामिव शर्वरीम्॥ ब्रह्मणा तत्र सरसि यूपः पुण्यः प्रकल्पितः। यूपम्प्रदक्षिणं कृत्वा वाजपेय-फलं लभेत्॥ ततो गच्छेत्तु राजेन्द्र धेनुकं लोकविश्रुतम्। एकरात्रोषितो यत्र प्रयच्छेत्तिलधेनुकान्॥ सर्वपापविमुक्तात्मा सोमलोकं व्रजेद्ध्रुवम्। तत्र चिह्नम्महाराज अद्यापि सुमहद्भुवि॥ कपिला सहवत्सा वै पर्वते विचरत्युत। सवत्सायाः पदानि स्म दृश्यन्तेऽद्यापि तत्र वै॥ तेषु तेषु तु राजेन्द्र पदेषु नृपसत्तम। यत्किञ्चिदशुभं कर्म्म तत्प्रणश्यति भारत॥ ततो गृध्रवटं गच्छेत्स्थानं देवस्य धीमतः। स्नायीत भस्मना तत्र ह्यभिगम्य वृषध्वजम्॥ ब्राह्मणानां भवेच्चीर्णं व्रतं द्वादशवार्षिकम्। इतरेषान्तु वर्णानां सर्वं पापं प्रणश्यति॥ उद्यन्तञ्च ततो गच्छेत्पर्वतं गीतनादितम्। सावि-त्र्यास्तु पदं तत्र दृश्यते भरतर्षभ॥ तत्र सन्ध्यामुपासीत ब्राह्मणः संशित-व्रतः। उपासिता भवेत्सन्ध्या तेन द्वादशवार्षिकी॥ योनिद्वारञ्च तत्रैव विद्यते भरतर्षभ। तत्राधिगम्य मुच्येत पुरुषो योनिसङ्कटात्॥ शुक्ल-कृष्णावुभौ पक्षौ गयायां यो वसेन्नृप। पुनात्यासप्तमञ्चैव कुलान्यत्र न संशयः॥ एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाश्वमेधेन नीलं वा वृषमुत्सृजेत्॥ ततः परं व्रजेद्राजँस्तीर्थसेवी नराधिप। अश्व-मेधमवाप्नोति सिद्धिञ्च परमां लभेत्॥ ततो गच्छेत्तु राजेन्द्र धर्मपृष्ठं महाफलम्। तत्र धर्म्मो महाराज नित्यमास्ते युधिष्ठिर॥ अभिगम्य तत-स्तत्र वाजि[1]मेधफलं लभेत्। ततो गच्छेत्तु राजेन्द्र ब्रह्मणस्तीर्थमुत्तमम्॥ तत्राधिगम्य राजेन्द्र ब्रह्माणं भरतर्षभ। राजसूयाश्वमेधाभ्यां फलम्प्राप्नोति मानवः" इति। पुनस्तत्रैव धौम्यतीर्थयात्रायामुक्तम्—"सर्वां प्राचीं दिशं राजन्राजर्षिगणसेविताम्। रम्यान्ते कीर्त्तयिष्यामि युधिष्ठिर यथास्मृति॥ यस्यां गिरिवरः पुण्यो गयो राजर्षिसत्कृतः। शिवं ब्रह्मसरो यत्र सेवितं त्रिदशर्षिभिः॥ यदर्थे पुरुषव्याघ्र कीर्त्तयन्ती पुरा स्मृतिः। एष्टव्या बहवः

---

फल्गुतीर्थे पुण्यजले करोमि स्नानमादृतः। पितॄणां विष्णु(स्वर्ग)लोकाय भुक्ति-मुक्तिप्रसिद्धये" इति।

१. वाजी = अश्वस्तस्य मेधो हिंसा यस्मिंस्तस्याश्वमेधस्य फलमित्यर्थः।

पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ उत्तारयति सन्तत्यान्दश पूर्वान्दशापरान् ।
महानदी बहुनदी तथा गयशिरो नृप ॥ यत्रासौ कीर्त्यते विप्रैरक्षय्य-
करणो वटः । तत्र दत्तं पितृभ्योऽन्नमक्षयं भवति प्रभो ॥ सा च पुण्यजला
तत्र फल्गुनामा महानदी । वहुमूलफला चापि कौशिकी भरतर्षभ" इति ।
लोमशतीर्थयात्रायाञ्च—"ततो महीधरं जग्मुर्धर्म्मज्ञेनाभिरक्षितम् । राज-
र्षिणा पुण्यकृता गयेनानुपमद्युते ॥ सरो गयशिरो यत्र पुण्या चैव महा-
नदी । ऋषिजुष्टं महापुण्यं तीर्थं ब्रह्मसरोरुहम् ॥ अगस्त्यो भगवान् यत्र
गतो वैवस्वतम्प्रति । उवास सततं यत्र धर्म्मो राजा सनातनः ॥ सर्वासां
सरितां यत्र समुद्भेदो विशांपते । यत्र सन्निहितो नित्यम्महादेवः पिनाक-
धृक् ॥ तत्र ते पाण्डवा वीराश्चातुर्म्मास्यैस्तदेजिरे । ऋषियज्ञेन महता
यत्राक्षयवटो महान्" इति । आङ्गिरसतीर्थयात्रायाम्—"मुण्डपृष्ठं गयाञ्चैव
नैर्ऋतं देवपर्वतम् । तृतीयां क्रौञ्चपादाञ्च ब्रह्महत्या विमुच्यते" इति ।
प्रह्लादतीर्थयात्रायां वामनपुराणे—"गयायां गोपतिं द्रष्टुं स जगाम महासुरः ।
सरसि ब्रह्मणः स्नात्वा कृत्वा चास्य प्रदक्षिणम् ॥ पिण्डनिर्वपणं पुण्यं
पितृणां स चकार ह" इति । नरसिंहपुराणे—"शिवनद्यां शिवकरं गया-
याञ्च जनार्दनम् । सर्वत्र परमात्मानं यः पश्यति स मुच्यते" इति । शिव-
नदी = विहारनामकनगरनिकटस्था नदी । वायुपुराणे—"महाकल्पकृतं
पापं गयाम्प्राप्य विनश्यति । गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गवि गृध्रवटे चैव श्राद्धं दत्तं महाफलम् ॥ भरतस्याश्रमे पुण्ये नित्यं पुण्य-
तमैर्वृते । मतङ्गस्य पदं तत्र दृश्यतेऽद्यापि मानुषैः ॥ ख्यापितं धर्मसर्वस्वं
लोकस्यास्य निदर्शनात् । तत्पङ्कजवनं पुण्यं पुण्यकृद्भिर्निषेवितम् ॥
यस्मिन्पाण्डुर्विशत्येव तीर्थं सर्वनिदर्शनम् । तृतीयायां तथा पादे निःक्षी-
रायाञ्च मण्डले ॥ महाह्रदे च कौशिक्यां दत्तं श्राद्धं महाफलम् । मुण्ड-
पृष्ठे पदं न्यस्तं महादेवेन धीमता । बहून् वर्षशतांस्तप्तं तपस्तीर्थेषु दुष्क-
रम् । अल्पेनाप्यत्र कालेन नरो धर्म्मपरायणः ॥ पाप्मानमुत्सृजत्याशु
जीर्णत्वचमिवोरगः । नाम्ना कनकनन्देति तीर्थं जगति विश्रुतम् ॥ उदी-
च्यां मुण्डपृष्ठस्य ब्रह्मर्षिगणसेवितम् । तत्र स्नात्वा दिवं याति स्वशरी-

---

१. छान्दसत्वात्पुंस्त्वम् ।

रेण मानवः ॥ दत्तञ्चापि सदा श्राद्धमक्षयं समुदाहृतम् । स्नात्वा दिनत्रयं तत्र निःक्षीरायां द्विजोत्तमः ॥ मानसे सरसि स्नात्वा श्राद्धं निर्वर्त्तयेन्नरः। (मानसे = दक्षिणमानसे) उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ तस्मिन्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् । कामान्स लभते दिव्यान् मोक्षोपायाँश्च भूरिशः ॥ इति । एवञ्च गयाम्प्राप्य महानदी (फल्गुनदी) ब्रह्मसरोधेनुकगृध्रवटोद्यन्तधर्म्मपृष्ठब्रह्मतीर्थानां सप्तानां यथाक्रमं दर्शनं कुर्यान्मुण्डपृष्ठोत्तरदिक्स्थायां निःक्षीरायां दिनत्रयं स्नात्वा दक्षिणमानसे श्राद्धं विधायोत्तरमानसे तद्विधेयमिति प्रघट्टकार्थः । गारुडे ब्रह्मवाक्यम्- "गयासुरोऽभवत्पूर्वं वीर्यवान् परमः स च । तपोऽतप्यन्[1]महाघोरं सर्वभूतोपतापनम् ॥ ततः सन्तापिता देवास्तद्वधार्थं हरिं गताः । शरणं हरिरूचे तान्भवितव्यं शिवात्मभिः ॥ पातितेऽस्य मया देहे तथेत्युक्त्वा सुरा हरिम् । कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥ आनीय कीकटे देशे शयनञ्चाकरोद्बने । विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥ अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः । तस्य देहे लिङ्गरूपी स्थितः शुद्धे पितामहः ॥ विष्णुराहाथ मर्यादां पुण्यक्षेत्रं भविष्यति । तत्र श्राद्धं पिण्डदानं स्नानादि कुरुते तु यः ॥ स स्वर्गं ब्रह्मलोकञ्च गच्छेन्न नरकं नरः । गयातीर्थं परं ज्ञात्वा यागञ्चक्रे पितामहः । ब्राह्मणान्पूजयामास ऋत्विजः समुपागतान् ॥ नदीं सरस्वतीं दृष्ट्वा स्थितां व्याप्य दिशं ततः । भक्ष्यभोज्यफलानाञ्च कामधेनुं ततोऽसृजत ॥ पञ्चक्रोशं गयातीर्थं ब्राह्मणेभ्यो ददौ प्रभुः । धर्म्मयागे तु लोभाद्वै प्रतिगृह्य धनादिकम् ॥ स्थिता विप्रास्तदा शप्ता गयायां ब्रह्मणा पुनः । मा भूत्त्रिपुरुषी विद्या मा भूत्त्रिपुरुषं धनम् ॥ युष्माकं स्याद्वारिवहा नदी पाषाणपर्वतः । शप्तैस्तु प्रार्थितो ब्रह्मानुग्रहं कृतवान्प्रभुः ॥ लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः । युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥ ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा । वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥ समुद्राः सरितः सर्वे वापीकूपह्रदानि च । स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । पापं तत्सङ्गजं सर्वं गयाश्राद्धाद्विनश्यति ॥ असंस्कृता मृता ये च पशुचौरहताश्च ये । सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति

---

१. आर्षमत्र परस्मैपदमन्यथा तपस्तपः कर्म्मकस्यैवे-त्यनेनात्मनेपदप्रसक्तेः ।

ते ॥ गयायां पिण्डदानेन यत्फलं लभते नरः। न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि" इति। तत्रैव—"गयाशिरसि यः पिण्डान् येषां नाम्ना तु निर्वपेत्। नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः" इति च। गयाशिरोलक्षणमाहादित्यपुराणे—"पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः ॥ उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम्। एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम्" इति। वायुपुराणे—"नागाज्जनार्दनाद्ब्रह्मयूपाच्चोत्तरमानसात्। एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते ॥ पितामहं समासाद्य यावदुत्तरमानसम्। फल्गुतीर्थन्तु विज्ञेयं देवानामपि दुर्लभम् ॥ क्रौञ्चपादात्फल्गुतीर्थं यावत्साक्षाद्गयाशिरः। मुखं गयासुरस्यैतत्तस्माच्छ्राद्धमथाक्षयम् ॥ मुण्डपृष्ठाच्च पूर्वस्मिन् पश्चिमे दक्षिणोत्तरे। श्राद्धे क्रोशद्वयं मानं गयायां ब्रह्मणेरितम् ॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। तन्मध्ये सर्वतीर्थानि त्रैलोक्ये यानि सन्ति वै" इति। मात्स्ये—"पितृतीर्थं गया नाम सर्वतीर्थवरं स्मृतम्। यत्रास्ते देवदेवेशः स्वयमेव पितामहः ॥ यत्रैषा पितृभिर्गीता गाथा भागमभीप्सुभिः। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत् ॥ यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति। एतच्च प्रघट्टोक्तं ब्रह्महत्यादिपापविमोचनादिरूपं फलं गयाश्राद्धोद्देश्यपित्रादेरेव न तु तच्छ्राद्धकर्तुस्तस्य तु प्रतिपदोक्तमेवेति बोध्यम्। गारुडे—"सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम्। दुर्लभं, किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः" इति। कल्पतरुधृते वराहपुराणे—"सनत्कुमार उवाच-शृणुष्व वाक्यं नृपतिर्बभूव विशालनामा स पुरीं विशालाम्। उवास धन्यो धृतिमानपुत्रः स्वयं विशालाधिपतिर्द्विजाग्र्यान् ॥ पप्रच्छ पुत्राप्ति-समित्रहन्ता तं ब्राह्मणाः प्राचुरदानसत्त्वाः। राजन् पितॄंस्तर्पय पुत्रहेतोर्गत्वा गयायां विधिवत्तु पिण्डैः ॥ ध्रुवं सुतस्ते भविता नृवीर सहस्रहन्ता सकलक्षितीशः। इतीरिते ब्राह्मणैः सम्प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात् ॥ समागतस्तीर्थवरं द्विजेश गयामिमां तद्गतमानसः सन्। आगत्य सोऽथ प्रवरं[1] सुतीर्थं गयाशिरो यत्र गतिः पितॄणाम् ॥ पिण्डप्रदानं विधिना प्रयच्छत्तावद्वियत्युत्तममूर्त्तियुक्तान्[2]। पश्यन्स पुसः सितरक्त-

---

१. आर्षत्वादडभावः। २. आकाशे।

रेण मानवः ॥ दत्तञ्चापि सदा श्राद्धमक्षयं समुदाहृतम् । स्नात्वा दिनत्रयं तत्र निःक्षीरायां द्विजोत्तमः ॥ मानसे सरसि स्नात्वा श्राद्धं निर्वर्त्तयेन्नरः । ( मानसे = दक्षिणमानसे ) उत्तरं मानसं गत्वा सिद्धिं प्राप्नोत्यनुत्तमाम् ॥ तस्मिन्निर्वर्त्तयेच्छ्राद्धं यथाशक्ति यथाबलम् । कामान्स लभते दिव्यान् मोक्षोपायाँश्च भूरिशः ॥ इति । एवञ्च गयाम्प्राप्य महानदी ( फल्गुनदी ) ब्रह्मसरोधेनुकगृध्रवटोद्यन्तधर्म्मपृष्ठब्रह्मतीर्थानां सप्तानां यथाक्रमं दर्शनं कुर्यान्मुण्डपृष्ठोत्तरदिकस्थायां निःक्षीरायां दिनत्रयं स्नात्वा दक्षिणमानसे श्राद्धं विधायोत्तरमानसे तद्विधेयमिति प्रघट्टकार्थः । गारुडे ब्रह्मवाक्यम्- "गयासुरोऽभवत्पूर्वं वीर्यवान् परमः स च । तपोऽतप्यन्[1]महाघोरं सर्वभूतोपतापनम् ॥ ततः सन्तापिता देवास्तद्वधार्थं हरिं गताः । शरणं हरिरूचे तान्भवितव्यं शिवात्मभिः ॥ पातितेऽस्य मया देहे तथेत्युक्त्वा सुरा हरिम् । कदाचिच्छिवपूजार्थं क्षीराब्धेः कमलानि च ॥ आनीय कीकटे देशे शयनञ्चाकरोद्बली । विष्णुमायाविमूढोऽसौ गदया विष्णुना हतः ॥ अतो गदाधरो विष्णुर्गयायां मुक्तिदः स्थितः । तस्य देहे लिङ्गरूपी स्थितः शुद्धे पितामहः ॥ विष्णुराहाथ मर्यादां पुण्यक्षेत्रं भविष्यति । तत्र श्राद्धं पिण्डदानं स्नानादि कुरुते तु यः ॥ स स्वर्गं ब्रह्मलोकञ्च गच्छेन्न नरकं नरः । गयातीर्थं परं ज्ञात्वा यागञ्चक्रे पितामहः । ब्राह्मणान्पूजयामास ऋत्विजः समुपागतान् ॥ नदीं सरस्वतीं सृष्ट्वा स्थितां व्याप्य दिशं ततः । भक्ष्यभोज्यफलानाञ्च कामधेनुं तथासृजत् ॥ पञ्चक्रोशं गयातीर्थं ब्राह्मणेभ्यो ददौ प्रभुः । धर्म्मयागे तु लोभाद्वै प्रतिगृह्य धनादिकम् ॥ स्थिता विप्रास्तदा शप्ता गयायां ब्रह्मणा पुनः । मा भूत्त्रिपुरुषी विद्या मा भूत्त्रिपुरुषं धनम् ॥ युष्माकं स्याद्वारिवहा नदी पाषाणपर्वतः । शप्तैस्तु प्रार्थितो ब्रह्मानुग्रहं कृतवान्प्रभुः ॥ लोकाः पुण्या गयायां ये श्राद्धिनो ब्रह्मलोकगाः । युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा ॥ ब्रह्मज्ञानं गयाश्राद्धं गोग्रहे मरणं तथा । वासः पुंसां कुरुक्षेत्रे मुक्तिरेषा चतुर्विधा ॥ समुद्राः सरितः सर्वे वापीकूपह्रदानि च । स्नातुकामा गयातीर्थं व्यास यान्ति न संशयः ॥ ब्रह्महत्या सुरापानं स्तेयं गुर्वङ्गनागमः । पापं तत्सङ्गजं सर्वं गयाश्राद्धाद्विनश्यति ॥ असंस्कृता मृता ये च पशुचौरहताश्च ये । सर्पदष्टा गयाश्राद्धान्मुक्ताः स्वर्गं व्रजन्ति

---

१. आर्षमत्र परस्मैपदमन्यथा तपस्तपः कर्म्मकस्यैवे -त्यनेनात्मनेपदप्रसक्तेः ।

ते ॥ गयायां पिण्डदानेन यत्फलं लभते नरः। न तच्छक्यं मया वक्तुं कल्पकोटिशतैरपि" इति। तत्रैव—"गयाशिरसि यः पिण्डान् येषां नाम्ना तु निर्वपेत्। नरकस्था दिवं यान्ति स्वर्गस्था मोक्षमाप्नुयुः" इति च। गयाशिरोलक्षणमाहादित्यपुराणे—"पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। महानद्याः पश्चिमेन यावद्गृध्रेश्वरो गिरिः॥ उत्तरे ब्रह्मयूपस्य यावद्दक्षिणमानसम्। एतद्गयाशिरो नाम त्रिषु लोकेषु विश्रुतम्" इति। वायुपुराणे—"नागाज्जनार्दनाद्ब्रह्मयूपाच्चोत्तरमानसात्। एतद्गयाशिरः प्रोक्तं फल्गुतीर्थं तदुच्यते॥ पितामहं समासाद्य यावदुत्तरमानसम्। फल्गुतीर्थन्तु विज्ञेयं देवानामपि दुर्लभम्॥ क्रौञ्चपादात्फल्गुतीर्थं यावत्साक्षाद्गयाशिरः। मुखं गयासुरस्यैतत्तस्माच्छ्राद्धमथाक्षयम्॥ मुण्डपृष्ठाच्च पूर्वस्मिन् पश्चिमे दक्षिणोत्तरे। श्राद्धे क्रोशद्वयं मानं गयायां ब्रह्मणेरितम्॥ पञ्चक्रोशं गयाक्षेत्रं क्रोशमेकं गयाशिरः। तन्मध्ये सर्वतीर्थानि त्रैलोक्ये यानि सन्ति वै" इति। मात्स्ये—"पितृतीर्थं गया नाम सर्वतीर्थवरं स्मृतम्। यत्रास्ते देवदेवेशः स्वयमेव पितामहः॥ यत्रैषा पितृभिर्गीता गाथा भागमभीप्सुभिः। एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्॥ यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्। इति। एतच्च प्रघट्टोक्तं ब्रह्महत्यादिपापविमोचनादिरूपं फलं गयाश्राद्धोद्देश्यपित्रादेरेव न तु तच्छ्राद्धकर्तुस्तस्य तु प्रतिपदोक्तमेवेति बोध्यम्। गारुडे—"सकृद्गयाभिगमनं सकृत्पिण्डप्रपातनम्। दुर्लभं, किं पुनर्नित्यमस्मिन्नेव व्यवस्थितिः" इति। कल्पतरुधृते वराहपुराणे—"सनत्कुमार उवाच—शृणुष्व वाक्यं नृपतिर्बभूव विशालनामा स पुरीं विशालाम्। उवास धन्यो धृतिमान्नपुत्रः स्वयं विशालाधिपतिर्द्विजाग्र्यान्॥ पप्रच्छ पुत्रार्थि-ममित्रहन्ता तं ब्राह्मणाः प्राचुरदानसत्त्वाः। राजन् पितॄंस्तर्पय पुत्रहेतोर्गत्वा गयायां विधिवत्तु पिण्डैः॥ ध्रुवं सुतस्ते भविता नृवीर सहस्रहन्ता सकलक्षितीशः। इतीरिते ब्राह्मणैः सम्प्रहृष्टो राजा विशालाधिपतिः प्रयत्नात्॥ समागतस्तीर्थवरं द्विजेश गयामिमां तद्गतमानसः सन्। आगत्य सोऽथ प्रवरं सुतीर्थं[1] गयाशिरो यत्र गतिः पितॄणाम्॥ पिण्डप्रदानं विधिना प्रयच्छत्तावद्दिवि[2] त्युत्तममूर्त्तियुक्तान्। पश्यन्स पुंसः सितरक्त-

---

१. आर्षत्वादडभावः। २. आकाशे।

कृष्णानुवाच राजा किमिदं भवद्भिः ।।—संवत्स्यते, शंसत सर्व्वमेव कौतूहलं मे मनसि प्रवृत्तम् । सित उवाच । अहं सितस्ते जनकोऽस्मि राजन्नाम्ना च वर्णेन च कर्म्मणा च ।। अयञ्च रक्तो जनको ममास्ति नृशंसकृद्ब्रह्महा पापकारी । अन्धेश्वरो नाम पिताऽस्य चान्यः कृष्णो हि नाम्नापि च वर्णतश्च ।। एतेन कृष्णेन हताः स वै जन्मन्यनेके ऋषयः पुराणाः । एतौ मृतौ द्वावपि पितापुत्राववीचिसंज्ञं नरकं प्रविष्टौ ।। अन्धेश्वरो मे जनकः परोऽस्य तत्कृष्णरक्तावपि दीर्घकालम् । अहञ्च शुद्धेन निजेन कर्म्मणा शक्रासनं-प्राप्य सुदुर्लभं तत् ।। त्वया पुनर्म्मन्त्रविदा गयायां पिण्डप्रदानेन बलादिमौ च । मोक्षापितौ तीर्थवरप्रभावादवीचिसञ्ज्ञं नरकं गतौ तौ ।। पितॄन् पितामहाँश्चैव तथैव प्रपितामहान् । प्रीणयामीति[1] यत्तोयं त्वया दत्तमरिन्दम ।। तेनास्मद्युगपद्योगो जातो वाक्येन सत्तम । तीर्थप्रभावाद्गच्छामः पितृलोकं न संशयः।। अत्र पिण्डप्रदानेन एतौ तव पितामहौ । दुर्गतावपि संसिद्धौ पापाद्विकृतलिङ्गकौ ।। एतस्मात्कारणात्पुत्र अहमेतौ प्रगृह्य तु । आगतोऽस्मि भवन्तं वै इष्टं यास्यामि साम्प्रतम्" इति । "तीर्थप्रभावाद्यलेन ब्रह्मघ्नस्यापि सत्तमः । पितुः पिण्डप्रदानेन कुर्य्यादुद्धरणं सुतः" इति च । इत्थञ्च गयाश्राद्धेन श्राद्धोद्देश्यस्य महापातकिनोऽपि सद्गतिर्भवत्यपुत्रस्यापि च पुत्र इति निर्गलति ।

बृहस्पतिः—"काङ्क्षन्ति पितरः पुत्रान्नरकाद्भयभीरवः ।
गयां यास्यति यः पुत्रः सोऽस्मान्सन्तारयिष्यति ।।
गयायां धर्म्मपृष्ठे च सरसि ब्रह्मणस्तथा ।
गयाशीर्षेऽक्षयवटे पितॄणां दत्तमक्षयम्" इति ।

तत्राविभक्तानां पुत्राणाम्मध्ये ज्येष्ठस्यैवाधिकारः, कनिष्ठस्य तु ज्येष्ठानुज्ञयैव न त्वेकोद्दिष्टवत्पृथक् पृथक् स्वातन्त्र्येण । विभक्तानान्तु सर्वेषां पृथगेव—"भ्रातॄणामविभक्तानामेको धर्मः प्रवर्त्तते । विभागे सति धर्मोऽपि भवेत्तेषां पृथक् पृथक्" इति नारदपुराणात् । एवञ्च "एष्टव्या

---

१. आर्षत्वाच्छन्दोभङ्गः ।

२. एतेन गयायां तर्पणवाक्यम् 'ओमद्यामुकगोत्रः पितामुकशर्म्मा तृप्यतामिदं सतिलजलं तस्मै स्वधा पितरं प्रीणयामि इत्यादिरूपमेव योज्यं तथैव शिष्टाचाराच्च ।

बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्। यजेत वाऽश्वमेधेन नीलं वा वृष-मुत्सृजेत्"॥ "एष्टव्या बहवः पुत्राः शीलवन्तो गुणान्विताः। तेषां तु समवेतानां यद्येकोऽपि गयां व्रजेत्" इत्यादि मत्स्य-पुराणवचन-यमव-चनयोरपि विभक्तभ्रातृविषयत्वमेव। एतेनैतद्वचनद्वयबलेनाविभक्तानामपि पृथगधिकारः, समवेतानामित्यस्याविभक्तानामित्यर्थादित्यपास्तम्। प्रोक्तना-रदवचनविरोधस्य दुष्परिहरत्वेन समवेतानामित्यस्य 'सर्वेषा'मित्यर्थ एव सर्वसम्मतत्वाच्च। तेन 'पृथग्भूतानां पुत्राणां सर्वेषां मध्ये यद्येकोऽपि गयां व्रजे'-दित्येवं क्रमेणैतद्वचनद्वयार्थः कार्यः। अत्र श्राद्धे कालनियमो नास्ती-त्युक्तं वायुपुराणे—"गयायां सर्वकालेषु पिण्डं दद्याद्विचक्षणः। अधि-मासे जन्मदिने अस्ते[1] च गुरुशुक्रयोः॥ न त्यजेच्च गयाश्राद्धं सिंहस्थे च बृहस्पतौ। मीने मेषे स्थिते सूर्ये कन्यायां कार्मुके घटे॥ नारद! त्रिषु लोकेषु गयाश्राद्धं सुदुर्लभम्" इति। कार्म्मुके=धनुषि। घटे=कुम्भे। महानदी (फल्गु)-वेदिपञ्चक-प्रेतशिला-प्रेतपर्वत-काकबलि-पाण्डुशिला-रामकुण्डोत्तरमानसोदीचीकनखल-दक्षिणमानस-जिह्वालोल-विष्णुपद-सरस्वती-गयाशीर्ष-गयाकूपाक्षयवटमातङ्गवापी-धर्म्मारण्य-धर्मपृष्ठ-धेनु-कारण्य-बोधगया-ब्रह्मसरो-रुद्रपद-ब्रह्मपद-ब्रह्मयोनि-कात्तिकपद-श्वेता-गायत्री-मङ्गला-सूर्यपद-चन्द्रपद-गणेशपद-सभ्याग्निपदाऽवसथ्याग्नि-पद-दधीचिपद-कर्णपद-मातङ्गपद-क्रौञ्चपदेन्द्रपदागस्त्यपद-काश्यपपद-घृतकुल्यादि-गजकर्ण-रामगया-विशालादि-सीताकुण्ड-मुण्डपृष्ठ-धौत-पदाऽऽदिगया-भीमगया-वसिष्ठाश्रम-वैतरणी-गोप्रचाराक्षयवटनामानि गयातीर्थानि प्रशस्तानीति प्रपञ्चितमितरत्र। अत्रत्यश्राद्धविधानन्तु गया-श्राद्धपद्धतौ द्रष्टव्यम्। श्राद्धकरणाक्षमत्वे पिण्डमात्रमपि देयमुक्तं तत्रैव-"पिण्डदानं ततः शस्तं पितॄणामतिदुर्लभम्। विलम्बो नैव कर्त्तव्यो नैव विघ्नं समाचरेत्" इति। ततः=श्राद्धकरणाक्षमत्वे। पिण्डद्रव्याणि तु—"पाय-सेनाथ चरुणा सक्तुना पिण्डकेन[2] वा। तण्डुलैः फलमूलाद्यैर्गयायां पिण्डपातनम्॥ तिलकल्केन खड्गेन गुडेन सघृतेन वा। केवलेनैव दध्ना वा अन्नेन मधुनाथ वा॥ पिण्याकं सघृतं खण्डं पितृभ्योऽक्षय-

---

१. 'अस्तमयने' इत्यर्थः।

२. पि०

मित्युत" इति "पायसेन गयायाञ्च सक्तुना पिण्डकेन वा। चरुणा तण्डुलाद्यैर्वा पिण्डदानं विशिष्य[1] ( विधीयते )" इति, "पायसेनाथ पिण्डेन सक्तुना चरुणा तथा। पिण्डदानन्तण्डुलैश्च गोधूमैस्तिलमिश्रितैः" इति च वायुपुराणाग्निपुराणादौ प्रदर्शितानि। पिण्डकेन हिङ्गु 'सिह्ल' पदाभिधगन्धद्रव्येण। खड्गेन=गण्डकेन। पिण्याकस्तिलस्तत्कल्कश्च। खण्डो गुडविकारः। अतएव प्राचुर्येण यवचूर्णपिण्डा एव प्रचलन्ति गयायाम्। केचित्तु-"ऐङ्गुदं बदरोन्मिश्रं पिण्याकं दर्भसंस्तरे। न्युप्य पिण्डं ततो राम इदं वचनमब्रवीत्॥ इदं भुङ्क्ष्व महाराज प्रीतो, यदशना वयम्। यदन्नाः पुरुषा राजँस्तदन्नाः पितृदेवताः" इति रामायणादन्नालाभ इङ्गुद्यादिपिण्डविधिं मन्यन्ते। इङ्गुदी = तापसवृक्षस्तस्येदमैङ्गुदम्। वायुपुराणे-"शमीपुष्पप्रमाणेन पिण्डं दद्याद्गयाशिरे। उद्धरेत्सप्तगोत्राणि कुलमेकोत्तरं शतम्" इति। वामनपुराणे-"प्रेतराजोऽथ वणिजं कञ्चि-त्प्राह स्वमुक्तये। गयायां तीर्थजुष्टायां स्नात्वा शौचसमन्वितः॥ मम नाम समुद्दिश्य पिण्डनिर्वपणं कुरु। तत्र पिण्डप्रदानेन प्रेतभावादहं सखे॥ मुक्तस्तु सर्वदा नृणां प्राप्स्यामि शुभलोकताम्। एवमुक्त्वा तु वचनं प्रेतराजोऽनुजैः सह॥ स्वनामानि यथान्यायं सम्यगाख्यातवान्रहः[2]। स्वकर्म्मधर्म्मयोगेन धनमुच्चावचं बहु॥ उपार्जयित्वा प्रययौ गयाशिरस-मुत्तमम्[3]। पिण्डनिर्वपणं तत्र प्रेतानामनुपूर्वशः॥ चकार स्वपितृणाञ्च दायादानामनन्तरम्। आत्मनश्च महाबुद्धिर्म्महावेद्यां तिलैर्विना॥ एव-म्प्रदत्तेष्वथ वै पिण्डेषु प्रेतभावतः। विमुक्तास्ते ततः प्रेता ब्रह्मलोकमथो गताः" इति। वायुपुराणे-"आनन्त्याय भवेद्दत्तं खड्गि[4]मांसं पितृक्षये। कृष्णो लोह[5]स्तथा च्छाग आनन्त्याय प्रकल्पते॥ गयायामक्षयं श्राद्धं जप-होमतपांसि च। पितृक्षयो हि तत्पुत्र तेन तत्राक्षयो भवेत्' इति। "गया-गजो गयादित्यो गायत्री च गदाधरः। गया गयासुरश्चैव षड्गया मुक्ति-दायिकाः" इति च। जीवितस्य पिण्डप्रदानविधिर्गयास्थजनार्दनहस्ते

---

१. 'प्रशस्यते' इति तु प्रचुरः पाठः।

२. आर्षत्वात्ल्यबभावः। ३. 'गयातीर्थमनुत्तम'-मिति पाठान्तरम्। ४. खड्गी= गण्डकः ( गेंडा ) इति मैथिली-प्रसिद्धो वन्यपशुविशेषः। ५. लोहित इत्यर्थः।

प्रोक्तस्तत्रैव—"जनार्दनो भस्मकूटे तस्य हस्ते तु पिण्डदः। आत्मनोऽप्यथवाऽन्येषां सव्येनैव तिलैर्विना॥ जीवतां दधि-सम्मिश्रं सर्वे ते विष्णुलोकगाः" इति। पिण्डदानमन्त्रस्तु-"यस्तु पिण्डो मया दत्तस्तव हस्ते जनार्दन। यमुद्दिश्य त्वया देयस्तस्मिन् पिण्डो मृते प्रभो॥ एष पिण्डो मया दत्तस्तव हस्ते जनार्दन। अन्तकाले गते मह्यं त्वया देयो गदाशिरे" इति। गयास्थब्राह्मणपूजाप्रमाणं तत्रैव यथा तत्रत्या ब्राह्मणा-ब्रह्माणमूचुः "त्वया यद्दत्तमखिलं तत्सर्वं शापतो गतम्। जीवनार्थं प्रसादं नो भगवन् कर्त्तुमर्हसि॥ तच्छ्रुत्वा ब्राह्मणान् ब्रह्मा प्रोवाचेदं दयान्वितः। तीर्थोपजीविका यूयमाचन्द्रार्कं भविष्यथ॥ लोकाः पुण्यगयायां ये श्राद्धिनो ब्रह्मलोकगाः। युष्मान् ये पूजयिष्यन्ति तैरहं पूजितः सदा" इति। "पतितस्यापि कर्त्तव्यं गयायां पिण्डपातन"मित्युक्तं पतितादीनां गयाश्राद्धं यथादेशाचारं प्रथमाब्दिकसम्पूर्त्तौ कार्यमाह ब्रह्मपुराणे—"क्रियते पतितानान्तु गते संवत्सरे क्वचित्। देशधर्म्मप्रमाणत्वाद्गयाकूपे स्वबन्धुभिः" इति। अत्र पितृश्राद्धात्पृथङ्मातृश्राद्धं कार्यमित्युक्तं वायुपुराणे-"अष्टकासु च वृद्धौ च गयायाञ्च क्षयाहनि। मातुः श्राद्धं पृथक्कुर्यादन्यत्र पतिना सह" इति। गयायाम्मुण्डनादि न कर्त्तव्यमित्यप्युक्तं तत्रैव—"मुण्डनञ्चोपवासश्च सर्वतीर्थेष्वयं विधिः। वर्जयित्वा कुरुक्षेत्रं विशालां विरजां गयाम्" इति। संन्यासिना च दण्डत्यागपूर्वकमेव गयायां पिण्डा देया इत्यपि तत्रैव—"दण्डम्प्रदर्शयेद्भिक्षुर्गयां गत्वा न पिण्डदः। दण्डं न्यस्य विष्णुपदे पितृभिः सह मोदते" इति। एतद्वचनबलादेव च संन्यासिनोऽपि गयायां पिण्डदानाधिकारः 'न चान्येषां करोति सः' इति प्रागुक्तसामान्यवचनस्य गयेतरपरत्वेन निर्णेयत्वात्। व्रणाद्यवस्थायामपि गयाश्राद्धं न त्याज्यमित्यप्युक्तं वायुपुराण एव— "तथा दैवप्रमादेन प्रवहत्सु व्रणेषु च। पूतः कर्म्माधिकारी च श्राद्धकृद् ब्रह्मलोकभाक्" इति। इत्थञ्च गयां प्रविश्यादौ फल्गुतीर्थे स्नान-तर्पण-श्राद्धानि सम्पाद्य प्रेतशिलायां ब्रह्मकुण्डस्नानोत्तरं श्राद्धं षोडश गयाकल्पेन त्रयोदश वा पिण्डान्दत्त्वा प्रेतपर्वते तिलमिश्रितसक्तुनिक्षेपं कुर्यात्ततः पञ्चतीर्थमध्य उत्तरमानसे स्नात्वा

१. ये सान्तास्तेऽदन्ता अपीत्यभिप्रायेणैव प्रयोगः सम्भवति।

सपिण्डकं श्राद्धं सूर्यार्चनञ्च कृत्वा दक्षिणमानस उदीच्यामुदीचीतीर्थे स्नायात्, ततः कनखलतीर्थे निमज्य दक्षिणमानसे तीर्थत्रये स्नान-श्राद्ध-सूर्यार्चनानि कुर्यात्ततः फल्गुतीर्थे स्नान-तर्पण-सपिण्डक-श्राद्धानि ततो गदाधरदर्शनपूजने, तदनु धर्म्मारण्ये धर्म्मेश्वरं बोधितरुञ्च प्रणम्य मतङ्गवाप्यां स्नान-तर्पण-श्राद्धानि कृत्वा मतङ्गेश्वरञ्च प्रणम्य यूप-कूपयोर्म्मध्ये श्राद्धं कुर्यात्। ततश्च ब्रह्मशिरसि स्नात्वा सपिण्डकश्राद्ध-यूपप्रदक्षिण-ब्रह्मप्रणामान् विधाय गोप्रचार आम्रतरुं सिक्त्वा यमकुक्कुर-काकेभ्यो बलिं दत्त्वा पुनः स्नानं कुर्यात्। ततः फल्गुतीर्थे स्नानादि कृत्वा गयाशिरसि पित्रादिभ्यो बन्धुभ्योऽबन्धुभ्यश्च पिण्डान्दत्त्वा विष्णुपदस्य दर्शनं स्पर्शनं पूजनन्तत्र सपिण्डकं श्राद्धञ्च विधाय रुद्रपद-ब्रह्मपद-दक्षिणाग्निपद-गार्हपत्यपदाऽऽहवनीयपद-सत्यपदा-वसथ्यपद-शक्रपदा-गस्त्यपद-क्रौञ्चपद-मातङ्गपद-कार्त्तिकेयपद-गणेशपद-कश्यपपदेषु श्राद्धं कुर्यात्। ततो गजकर्णिकायां तर्पणं, कनकेश-केदार-वामन-नरसिंहरथमार्गाणां पूजनं, गदालोले स्नान-सपिण्डकश्राद्धे, अक्षयवटे श्राद्धं, ब्रह्मकल्पितविप्राणां पूजनं, पुरोधसे षोडशदानञ्च कृत्वा गायत्र्यग्रे प्रातःसन्ध्यां सपिण्डकश्राद्धञ्च सम्पाद्य समुद्रतीर्थे स्नात्वा सावित्र्यग्रे मध्याह्नसन्ध्यां पिण्डदानञ्च कुर्यात्ततः प्राचीसरस्वत्यां स्नात्वा सायाह्नसन्ध्यावन्दनं, विशालायां लेलिहाने भरताश्रमाऽऽख्यरामतीर्थे पदाङ्किते मुण्डपृष्ठस्थगदाधरसविध आकाशगङ्गायां गिरिकर्णमुखे च स्नात्वा पिण्डदानं, वैतरण्यां स्नान-पिण्डदानश्राद्धगोदानानि, घृतकुल्या-मधुकुल्या-देविका-शिलासङ्गम-मधुस्रवासु स्नान-सपिण्डकश्राद्ध-पिण्डदानानि, दशाश्वमेधिके हंसतीर्थेऽमरकण्टके कोटितीर्थे रुक्मिणीकुण्डे च पिण्डदानं, मार्कण्डेयेश्वर-कोटीश्वरयोर्दर्शनं नमनञ्च, दिव्यपुष्करिण्यां पिण्डदानं, पञ्चजवने पाण्डवशिलायां श्राद्धं, मुख्यतीर्थे स्नान-तर्पण-पिण्डदानानि, गयाकूपे पिण्डदानं, भस्मकूटे भस्मस्नानं, सङ्गमतीर्थे स्नानं, धेनुकारण्ये पिण्डदानं, कामधेनुपदे स्नात्वा तद्दर्शनञ्च कुर्यादित्येकः कल्पः। कल्पान्तराणि तु ग्रन्थान्तरेभ्योऽवगन्तव्यानीत्यास्तां तावत्।

प्रकृतमनुसरामः—शालग्रामसन्निधावपि श्राद्धप्राशस्त्यमाह प्रयोगपारिजातधृते पाद्मे—"शालग्राममयी मुद्रा संस्थिता यत्र कुत्रचित्। वार-

गत्या यथाधिक्यं समन्ताद्योजनत्रयम् ॥ यत्किञ्चित्पैतृकं कुर्यात्सपिण्डं वा तदन्तिके। विष्णुलोकं स गच्छेत्तु लभते शाश्वतं पदम्" इति। वाराहे—"म्लेच्छदेशे शुचौ वापि चक्राङ्को यत्र तिष्ठति। योजनानां तथा त्रीणि मम क्षेत्रं वसुन्धरे ॥ चक्राङ्कस्य तु सान्निध्ये यत्कर्म्म क्रियते नरैः। स्नानं दानं तपः श्राद्धं सर्वमक्षयतां व्रजेत्" इति। स्कान्दे—"सह्यस्य चोद्भवो यत्र यत्र गोदावरी नदी। पृथिव्यामपि कृत्स्नायां स देशोऽत्यन्तपावनः" इति। तीर्थश्राद्धविषये विशेषमाह भविष्यपुराणे-"देवाश्च पितरो यस्माद्गङ्गायां तु सदा स्थिताः। आवाहनं विसृष्टिश्च तत्र तेषां न विद्यते" इति। स्मृत्यन्तरेऽपि-"ब्राह्मणान्न परीक्षेत तीर्थे कालं न चिन्तयेत्। प्राप्ततीर्थो यदा विद्वाँस्तदा श्राद्धं समाचरेत् ॥ आवाहनं न तीर्थे स्यादर्घदानं न वा भवेत्। आहूताः पितरस्तीर्थे कृतार्थाः सन्ति वै द्विजा" इति। "न कालनियमस्तत्र गङ्गां प्राप्य सरिद्वराम्" इति। हारीतोऽपि—"गङ्गातीर्थे तु सम्प्राप्ते इन्दोः कोटी रवेर्दश" इति। देवीपुराणे-"तीर्थेषु ब्राह्मणान्नैव परीक्षेत कदाचन। अन्नार्थिनमनुप्राप्तं भोज्यं तं मनुरब्रवीत् ॥ सक्तुभिः पिण्डदानञ्च संयावैः पायसेन वा। कर्त्तव्यमृषिभिर्दिष्टं पिण्याकेन गुडेन वा ॥ देयन्तु तिलपिण्याकं शक्तिमद्भिर्नरैः सदा। श्राद्धन्तु तत्र कर्त्तव्यमर्घावाहनवर्जितम् ॥ श्व-ध्वाङ्क्ष-गृध्र-काकानां नैव दृष्टि-हतञ्च यत्। श्राद्धं तत्तैर्थिकं ज्ञेयं पितॄणां तृप्तिकारकम् ॥ अकालेऽप्यथ वा काले तीर्थे श्राद्धं तथा नरैः। प्राप्तैरेव सदा कार्यं कर्त्तव्यं पितृतर्पणम् ॥ पिण्डदानं ततः शस्तं पितॄणाञ्चातिवल्लभम्। विलम्बो नैव कर्त्तव्यो न च विघ्नं समाचरेत् ॥ आमान्नेनैव कर्त्तव्यमर्घावाहन-वर्जितम्" इति। संयावो गोदुग्ध-घृत-गोधूमपिष्टसाधितोऽपूपविशेषः। पिण्याकस्तिलकल्कः। तिलपिण्याकस्त्वत्र तिल एव पुनर्ग्रहणात्। अकाले-विहितामावास्यादिकालातिरिक्ते, न तु निषिद्धकाले, निषेधविधि-विरोधादिति पितृभक्तिश्राद्धविवेकादयः। अकालेऽपि तीर्थाधिकरणकश्राद्धविधायकप्रकृतदेवीपुराणवचनस्य विशेषविधित्वेन बाधकत्वान्निषिद्धकालेऽपि तीर्थश्राद्धं कर्त्तव्यमेव 'सामान्ये बाधकाभावा'दिति श्राद्धविवेकोक्तयुक्तेस्तथैवानुभवाच्चेत्येवञ्च "न कालनियमस्तत्र गङ्गां प्राप्य सरिद्वराम्" इत्यादिवचनानामप्यत्रैव तात्पर्यमिति तु मे प्रतिभाति। एवं तीर्थादौ

श्राद्ध-प्राशस्त्ये सत्यप्यद्यत्वे प्राचुर्येण गृहे श्राद्धाऽऽचरण-प्रचारस्तु-"तीर्थादष्टगुणं पुण्यं स्वगृहे ददतः प्रिये" इति प्रभासखण्डवचनबलात्प्राक् प्रशंसितशालग्रामशिला-सान्निध्याच्चेति साम्प्रदायिकाः ॥ पित्र्यं कर्म-मात्रं भूगतवामजानुना कर्त्तव्यम्—"भूमौ कृत्वा तथा जानुं सव्यं पितृपरायणः" इति श्राद्धपारिजातधृतवचनात् । "दक्षिणम्पातयेज्जानुं देवान्परिचरन् सदा । पातयेदितरं जानुं पितॄन् परिचरन् सदा" इति खण्डिकाधृतकात्यायनवचनाच्च । सव्यं = वामम् । पादप्रक्षालनञ्च सर्वत्र पितृश्राद्धे दक्षिणामुखेनैव कार्यं तथा च देवलः "प्रथमं प्राङ्मुखः स्थित्वा पादौ प्रक्षालयेच्छनैः । उदङ्मुखो वा दैवत्ये, पैतृके दक्षिणामुखः" इति । घृताद्यभावे तत्प्रतिनिध्य आह मत्स्यसूक्तम्-"घृतं न लभ्यते यत्र शुष्कं क्षीरञ्च होमयेत् । क्षीरस्य च दधि ज्ञेयं मधुनश्च गुड़ो भवेत्" इति । "मधु यत्र न विद्येत तत्र जीर्णगुडो भवेत्" इत्यायुर्वेदश्च । प्रतिनिधिक-ल्पेऽपि मधुवातादिमन्त्रा अविकृता एव पठनीयास्तथा च यज्ञपार्श्ववच-नम्-"तैलं प्रतिनिधिं कुर्याद्यज्ञार्थे याज्ञिको यदि । प्रकृत्यैव तदा होता ब्रूयाद्घृतवतीमिति" इति। "शब्देऽविप्रतिपत्ति"-रिति कातीयश्रौतसूत्रञ्च । शब्दे मन्त्रात्मके शब्दे । अविप्रतिपत्तिः = अविकल्पः ।

## अथ तिलकधारणनिर्णयः ।

बृहत्पराशरः—"ऊर्ध्वञ्च तिलकं कुर्यान्न कुर्याद्वै त्रिपुण्डकम् । निरा-शाः पितरो यान्ति दृष्ट्वा चैव त्रिपुण्ड्रकम्" इति । बृहन्नारदीयम्—"यज्ञो दानं तपो होमः स्वाध्यायः पितृकर्म च । वृथा भवति विप्रेन्द्र ऊर्ध्वपुण्ड्रं विना कृतम्" इति । वृद्धपराशरः—"ऊर्ध्वञ्च तिलकं कुर्याद् दैवे पित्र्ये च कर्मणि" इति । सङ्ग्रहोक्तिः—"ऊर्ध्वपुण्ड्रं द्विजातीनामग्निहोत्रसमो विधिः । श्राद्धकाले तु सम्प्राप्ते कर्त्ता भोक्ता च तत्त्यजेत् ॥ वामहस्ते च दर्भांस्तु गृहे रङ्गावलिं तथा । ललाटे तिलकं दृष्ट्वा निराशाः पितरो गताः" इति । विश्वप्रकाशः—"ऊर्ध्वपुण्ड्रं त्रिपुण्ड्रं वा चन्द्राकारमथापि वा । श्राद्धकर्त्ता न कुर्वीत यावत्पिण्डान्न निर्वपेत्" इति । बृहन्नारदीये-"ऊर्ध्वपुण्ड्रञ्च तुलसीं श्राद्धे नेच्छन्ति केचन" इति । हेमाद्रौ देवलः—"ललाटे पुण्ड्रकं दृष्ट्वा स्कन्धे माल्यं तथैव च । निराशाः पितरो यान्ति

दृष्ट्वा च वृषलीपतिम्" इति । व्यासोऽपि-"वर्जयेत्तिलकं भाले श्राद्धकाले च सर्वदा । तिर्यगप्यूर्ध्वपुण्ड्रं वा धारयेत्तु प्रयत्नतः" इतीत्येवं श्राद्धाधिकरणकत्रिपुण्ड्रधारणाधारणविप्रतिपत्तौ पृथ्वीचन्द्रः—'ऊर्ध्वपुण्ड्रविधिः श्राद्धे निमन्त्रितविप्रविषयो निषेधश्च कर्त्तृविषय'—इति ।

वस्तुतस्तु—गन्धेन[1] त्रिपुण्ड्रधारणविषयक एवायं प्रागुक्तवचनोक्तः सर्वो निषेधः कर्त्तृपरः । "प्राक् पिण्डदानाद्गन्धाद्यैर्नालङ्कुर्यात्स्वविग्रहम्" इत्याश्वलायनोक्तेः । व्यवस्था त्वाचाराद्बोध्याऽत एव श्राद्धकाले कर्त्तारो गाङ्गमृदोर्ध्वपुण्ड्रं कुर्वत इति सकलमैथिलादिशिष्टाचारः ॥

## अथ प्रेतपदोपादाननिर्णयः ।

षोडशश्राद्धानि प्रेतपदमुच्चार्य, तदूर्ध्वं वार्षिक-पार्वणादि स्वस्वजात्यनुकूलशर्मादिपदमुच्चार्य कार्याणि "सपिण्डीकरणं यावत्प्रेतः प्रेत इति स्मृतः । सपिण्डीकरणादूर्ध्वं प्रेतः शर्मादिभाग्भवेत्" इति स्मृतेः । विष्णुधर्मोत्तरे-"कृते सपिण्डीकरणे नरः संवत्सरात्परम् । प्रेतदेहं परित्यज्य भोगदेहम्प्रपद्यते" इति । हेमाद्रौ च "प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्त्तिता" इति । अत्र वर्षपदं सपिण्डीकरणाधिकरणमुख्यकालपरम् । सपिण्डीकरणोत्तरञ्चास्य प्रेतोद्देश्यिका पृथक्क्रिया निवर्तत इत्याह श्राद्धतत्त्वे शातातपः "अर्वाक् संव्वत्सराद्वृद्धौ पूर्णे संव्वत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न तेषान्तु पृथक्क्रियाः" इति । अत्र सर्वत्र सपिण्डीकरणपदमुद्भिदादिवत्कर्मनामधेयं कर्म च दक्षिणादानेन समाप्यत इति दक्षिणादानवाक्यपर्यन्तं प्रेतपदप्रयोग इत्येष मैथिलाचार-सिद्धः पन्थाः ॥ प्रेतदेहविमोकस्तु संव्वत्सरोत्तरमेव, प्रागुक्तस्मृतिबलात् । श्राद्धे पितॄन् वसुरुद्रादिरूपतया ध्यातव्यानाह मदनपारिजातधृतस्मृत्यर्थसारे-"वसुरुद्रादित्यरूपाञ्छ्राद्धार्थं तर्पयेत्पितॄन् । नाम-गोत्रे समुच्चार्य तिलैस्तीर्थेषु संयतः" इति । वस्वादिध्यानप्रकारस्तु-"प्रसन्नवदनाः सौम्यवरदाः शक्तिपाणयः" इत्यादिस्वरूपं आदित्यपुराणादवसेयः । कृत्रिमपुत्रेण 'मत्पुत्रत्वकर-इति, भ्रात्रादिभिश्च तत्तत्सम्बन्धबोधकशब्दमुच्चार्य क्रिया कार्या । यदि तु भ्रात्रादिरेव कृत्रिमः पुत्रः स्यात्तदा तेनापि 'मत्पुत्रत्वकर'-इत्ये-

---

१. श्रीखण्डेन ।

वोच्चार्य कर्म्म कार्यं तथैव सर्वनिबन्ध-सिद्धान्ताच्छिष्टाऽऽचाराच्च ॥ सङ्कल्पं कृत्वैव श्राद्धादिकर्त्तव्यतामाह भविष्यपुराणे-"सङ्कल्पेन-विना राजन् यत्किञ्चित्कुरुते नरः। फलञ्चाल्पाल्पकं तस्य धर्मस्यार्द्धक्षयो भवेत्" इति। हारीतोऽपि-"मनसा सङ्कल्पयति वाचाभिलपति कर्मणा चोपपादयति" इति। ब्रह्मपुराणेऽप्यगस्त्यपूजायामुक्तम्-"आश्वास्य च शुभं कार्यमुद्दिश्य च मनोगतम्" इति। मनोगतं शुभं फलमाश्वास्य मनसा संकल्प्य, उद्दिश्य वाचाऽभिलप्य कार्यं कर्मणा उपपाद्यमित्यर्थः। तत्करणप्रकारमाह भविष्ये-"शुक्तिशङ्खाश्महस्तैश्च कांस्यरूप्यादिभिस्तथा। संकल्पो नैव कर्त्तव्यो मृण्मयेन कदाचन ॥ गृहीत्वौदुम्बरं पात्रं वारिपूर्णं गुणान्वितम्। दर्भत्रयं साग्रमूलं फलपुष्पतिलान्वितम् ॥ जलाशयारामकूपे संकल्पे पूर्वदिङ्मुखः। साधारणे चोत्तरास्य ऐशान्यां निक्षिपेत्पयः" इति। इह केवलहस्तनिषेधः शङ्खादिसाहचर्यादेकहस्तपरः पात्रान्तरासद्भावपरो वाऽवगन्तव्यः। अत एव "यद्वा वार्येव धारये"-दित्युपवाससंकल्पप्रकरणे वराहपुराणम्।

## अथ संकल्पनिर्णयः

श्राद्धकर्मणि मासाद्युल्लेखावश्यकत्वमुक्तं ब्रह्माण्ड-भविष्यपुराणयोः-"मास-पक्ष-तिथीनाञ्च निमित्तानाञ्च सर्वशः। उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेत्" इति। अत्र निमित्तानामिति न मासादि-विशेषणमपि तु कर्मणो यानि निमित्तानि नवोदकापरपक्षनवान्नादीनि तेषामेव, 'च' द्वयश्रुतेः। एवं नामगोत्राद्युच्चारणमप्यावश्यकं यत्र यत्र तदाह पृथ्वीचन्द्रोदये शङ्खः "आवाहनार्घ्यसङ्कल्पे पिण्डदानान्नदानयोः। पिण्डाभ्यञ्जनकाले तु तथैवाञ्जनकर्म्मणि ॥ अक्षय्यासनयोः पाद्ये गोत्रं नाम प्रकाशयेत्" इति। कालिकायां संग्रहोऽपि-"आसनाऽऽवाहने पाद्ये अन्नदाने तथैव च। अक्षय्ये पिण्डदाने च षट्सु नामानि कीर्त्तयेत्" इति। परिशिष्टमपि-"दक्षिणापिण्डदाने च गन्धधूपाक्षये तथा। सङ्कल्पे चासने दीपे अञ्जनाभ्यञ्जने तथा ॥ अन्नार्घ्यदानाद्यन्तेषु गोत्रं नाम च कीर्त्तयेत्" इति। संग्रहवचने 'नाम' पदं गोत्रस्याप्युपलक्षणं वचनान्तरैकवाक्यतानुरोधात्। मोक्षधर्म्मे-"सम्बन्धं प्रथमं ब्रूयाद्गोत्रं नाम तथैव च। पश्चाद्रूप विजानी-

यात्क्रम एष सनातनः" इति । सम्बन्धं सम्बन्धबोधकं पितर्म्मातर्म्म-त्पुत्रत्वकरेत्यादिसम्बोधनशब्दम् । आचारस्तु प्रथमतो गोत्रोच्चारण-स्यैवेति न विस्मर्त्तव्यम् ॥ यथोचितविभक्त्यन्तमेव वाक्यं प्रयोज्यमित्युक्तं हेमाद्रौ नारायणेन "विभक्तिभिस्तु यत्किञ्चिद्दीयते पितृदैवते । तत्सर्वं सफलं ज्ञेयं विपरीतं निरर्थकम्" इति । तत्क्रमश्च "अक्षय्याऽऽसनयोः षष्ठी द्वितीयाऽऽवाहने तथा । अन्नदाने चतुर्थी स्याच्छेषाः सम्बुद्धयः स्मृताः" इति नारदीये । हेमाद्रौ भृगुश्च "अर्घ्यावनेजनं पिण्डमन्नं प्रत्य-वनेजनम् । सम्बुद्धिं तत्र कुर्वीत शेषे षष्ठी विधीयते" इति । अत्र पूर्वार्द्धे यदिति शेषः । अर्घ्यावनेजनमित्यत्र समाहारद्वन्द्वः । तत्रैव वृहत्प्रचेताः— "गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्म्मणि । गोत्रस्तु तर्पणे प्रोक्त एवं दाता न मुह्यति ॥ सर्वत्रैव पितः प्रोक्तः पिता तर्प्पणकर्म्मणि । पितुरक्ष-य्यकाले तु पित्रे सङ्कल्पने तथा" इति । स्वरान्तं सम्बुद्ध्यन्तम् । अत्र गोत्रं गोत्रः गोत्रस्य पितः 'पिते' त्यादिपदोत्तरमितिशब्दोऽध्याहार्यः । श्राद्धादौ पुरोहितस्त्रिविधो ग्राह्यः पूर्वजैः सेवितः, स्वयंकृतः, प्रीत्या स्वयमङ्गीकारी चेति तदाह विवादकल्पतरु–रत्नाकरयोर्नारदः "ऋत्विक् च त्रिविधो दृष्टः पूर्वैर्जुष्टः स्वयंकृतः । यदृच्छया च यः कुर्यादार्त्विज्यं प्रीतिपूर्वकम्" इति । यदृच्छयेति या चासाविच्छा यदृच्छा तया स्वेच्छयेत्यर्थः आर्त्वि-ज्य–मृत्विक्कर्म अत्रर्त्विक्पदं पुरोहितस्याप्युपलक्षणमित्यार्त्विज्यं पौरो-हित्यमपि ।

## अथ सिद्धाऽसिद्धान्ननिर्णयः ।

आद्यश्राद्धाद्येकोद्दिष्टान्तं कर्मजातं द्विजैरनापदि सिद्धान्नेनैव कार्यं तथा च हारीतः "एकोद्दिष्टन्तु कर्त्तव्यं पाकेनैव सदा स्वयम् । अभावे पाकपा-त्राणां तदहः समुपोषणम्" इति । एकोद्दिष्टपदमेकस्योद्दिष्टत्वात्षोडशश्राद्धा-नामप्युपलक्षकम् । एतच्चानुपनीतेऽपि सममाचारान्मासिकादावपूपादिदा-नञ्च । जाबालः—"आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा । आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि" इति । आपदि आत्मनो देशकालादीना-ञ्चोपप्लवावस्थायाम् तेन स्वासामर्थ्ये देशकालोपप्लवे वा पाकेन श्राद्ध-सम्पादनाक्षमत्वे इत्यर्थः । अनग्नौ पाकयोग्याग्निरहित इत्यर्थो न तु

श्रौत-स्मार्त्ताग्निरहित इति, तथैव सकलशिष्टाचारात्। अत्र वचने बहु-वचनान्तद्विजशब्दोक्त्या ब्राह्मण-क्षत्रिय-वैश्यैरनापदि सिद्धान्नेनैव श्राद्धं कार्यमिति निर्गलति ततश्चाद्यत्वे क्षत्रिय-वैश्यकर्त्तृकश्राद्धेष्वामान्नविधि-व्यवहारे मूलं मृग्यं, पूज्यब्राह्मणाभोज्यत्वेन वा सिद्धान्नं वर्जितमित्युत्प-श्यामः। कौर्म्मे "अनग्निरध्वगो वापि तथैव व्यसनान्वितः। आमश्राद्धं द्विजः कुर्याद्वृषलस्तु सदैव हि" इति। द्विजो ब्राह्मणादिस्त्रैवर्णिकः। वृषलः शूद्रः। ब्राह्मेऽपि—"स्त्रीभिश्चावरवर्णैश्च श्राद्धं विप्रानुशासनात्। मन्त्रव-द्विधिपूर्वन्तु वह्निपाकविवर्जितम्॥ इति। अवरवर्णैः शूद्रैः। विप्रानुशा-सनान्मन्त्रवदित्यस्य 'विप्रकर्त्तृकमन्त्रपाठादेव मन्त्रवन्नान्यथेत्यर्थस्तथा चोक्तं श्राद्धम्प्रक्रम्य वाराहे—"एष एव विधिः प्रोक्तः शूद्राणां मन्त्रव-र्जितः। अमन्त्रस्य तु शूद्रस्य विप्रो मन्त्रेण गृह्यते" इति। विष्णुरपि "एवं सपिण्डीकरणं मन्त्रवर्ज्यं शूद्राणां द्वादशेऽहनि" इति। द्वादशेऽहनी (ही) त्यस्योपलक्षणत्वादशौचान्ततृतीयेऽह्नीत्यर्थः। स्मृतिदर्पणे गालवस्त्वत्रा-मान्नविषये कश्चिदपवादमाह—"मृताहञ्च सपिण्डञ्च गयाश्राद्धं महालयम्। आपन्नोऽपि न कुर्वीत श्राद्धमामेन कर्हिचित्" इति। आमलक्षणमाह वसिष्ठो वृद्धप्रचेताश्च = "शस्यं क्षेत्रगतं प्राहुः सतुषं धान्यमुच्यते। आमं वितुषमित्युक्तं स्विन्नमन्नमुदाहृतम्" इति। आमश्राद्धपक्षे पिण्डादिक-मप्यामान्नेनैव देयं तथा च जाबालः—"आमश्राद्धं यदा कुर्याद्विधिज्ञः श्रद्धयाऽन्वितः। तेनाग्नौकरणं कुर्यात्पिण्डाँस्तेनैव निर्वपेत्" इति। एव-मत्र मांसादिव्यञ्जनान्यप्यामान्येवेति श्राद्धपल्लवः। मरीचिः—"अन-ग्निकः प्रवासी च यस्य भार्या रजस्वला। आमश्राद्धं प्रकुर्वीत न तत्कुर्या-न्मृताहनि" इति। भुजबलभीमेऽपि "अपत्नीकः प्रवासी च यस्य भार्या रजस्वला। आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि" इति। लौगाक्षि-रपि-"पुष्पवत्स्वपि दारेषु विदेशस्थोऽप्यनग्निकः। अन्नेनैवाब्दिकं कुर्या-द्धेम्ना वाऽऽमेन वा क्वचित्" इति। अत्र मरीचिवचनैकवाक्यत्वाय 'आमेन वा क्वचि'-दित्यस्य 'दर्शे सूर्यग्रहे क्षयाहे चामेने'-त्यर्थः कार्यः "दर्शे रविग्रहे पित्रोः प्रत्याब्दिकमुपस्थितम्। अन्नेनासम्भवे हेम्ना कुर्या-

---

१. 'उसिना' इति मैथिली।

दानेन वा सुतः" इति गोभिलोक्तेश्च। अन्नेन=भक्तेन। इहाप्यसम्भव इत्युक्त्या सम्भवे सति तेनैवेत्यायाति अत एव "श्राद्धविघ्ने द्विजातीनामामश्राद्धं प्रकीर्त्तितम्। अमावास्यादिनियतं माससँवत्सरादृते" इति निगदन् हारीतो द्विजानाममावास्यादिपार्वणश्राद्धेष्वेव विदधन्मासिकश्राद्ध-साँवत्सरिकश्राद्धयोरामान्नं प्रतिषेधति। मासेति-मासिकसाँवत्सरिकरूपैकोद्दिष्टं विनेत्यर्थः। श्राद्धविघ्नेऽमावास्यादिकाम्यपार्वणश्राद्धादौ चामान्नमेवेत्यनुपदोक्तहारीतवचनादेव निर्गलति। शूद्रकर्त्तृकं तु श्राद्धमात्रमामान्नेनैव "शूद्रेण तु सदैव हि" "वृषलस्तु सदैव हि" इत्यादिप्रागुक्तजाबालकौर्म्मादिस्मृत्यनुरोधात्। आमश्राद्धे निरग्निनाऽन्नं न चालनीयं, तदाह योगिनीतन्त्रे-"निरग्नेरामश्राद्धे तु अन्नं न चालयेत्क्वचित्। वृद्धौ तु चालयेदन्नं संक्रमे ग्रहणेषु च" इति। वृद्धौ=वृद्धि श्राद्धे, संक्रमे=संक्रान्तिनिमित्तके श्राद्धे, ग्रहणेषु=ग्रहणनिमित्तकश्राद्धेषु। अथान्यच्च "नाप्रोक्षितं स्पृशेत्किञ्चिच्छ्राद्धे दैवे च कर्म्मणि" इति स्मृतेः श्राद्धारम्भे श्राद्धीयद्रव्यसेककरणमावश्यकम्। स च सेकः शिष्टाचारात्, "शङ्खचक्रधरं विष्णुं द्विभुज पीतवाससम्। प्रारम्भे कर्म्मणां विप्र पुण्डरीकं स्मरेद्धरिम्" इति स्मृतेश्च "ओम् अपवित्रः पवित्रो वे'-त्यादिवाक्योच्चारणपूर्वकपुण्डरीकाक्षस्मरणेन कार्यः। स्पृशेत् दद्यात्। दानपर्यायप्रकरणे 'स्पर्शनं प्रतिपादनमित्यमरोक्तेः।

## अथैकोद्दिष्टादिनिर्णयः।

अथ यस्यां तिथावेकोद्दिष्टं तस्यामेव चेत्किञ्चिन्नित्यश्राद्धमप्यापतेत्तदा किं कार्यमिति चेदत्र केचित्-एवं सति नैमित्तिकमेव कार्यं न नित्यम्, "नैमित्तिकं यदा श्राद्धं पैतृकं कुरुते नरः। तदा नित्यं न कुर्वीत तीर्थश्राद्धं विना क्वचित्" इति विश्वामित्रवचनादिति। अपरे पुनः नैमित्तिकं कृत्वा नित्यं कार्यम्, "नित्यनैमित्तिके प्राप्ते नित्यं न परिलङ्घयेत्। आदौ नैमित्तिकं कुर्यात्पश्चान्नित्यं समाचरेत्" इति विश्वामित्रेण, "एकोद्दिष्टे निवृत्ते तु तथा विप्रविसर्जने। नित्यं कर्म्म ततः कुर्यात्तर्पणं देवतार्चनम्" इति याज्ञवल्क्येन, "जपं होमं तथा दानं तर्पणं देवतार्चनम्। च्याहञ्च समासाद्य न कुर्यात्पूर्वमेव हि॥ च्याहञ्च समासाद्य न कुर्यात्प्राक् च

तर्पणम्। पितृघाती स विज्ञेयो वदत्ये "पितामहः" इति वृद्धयाज्ञवल्क्येन चोक्तेरिति ब्रुवते तदेतत्सर्वं शिष्टाचारविरुद्धत्वादुपेक्ष्यमेव। अस्ति हि शिष्टाचारः सन्ध्यावन्दन-तर्पण-देवतार्चनादिनित्यकर्मसम्पादनपूर्वक एवैकोद्दिष्टानुष्ठानरूपः। अन्ये च 'साम-यजुःशाखिनां पूर्वं नित्यं कर्म्म बह्वृचानाञ्च पश्चादिति व्यवस्थापयन्ति। बहूनां वचनानामानुगुण्यान्समैषा व्यवस्था युक्तेव प्रतिभाति। यत्र त्वेकत्रैव दिने क्षयाहनिमित्तकं श्राद्धमाशौचावरुद्धञ्च श्राद्धान्तरमेककर्त्तृकमापतति तत्र क्षयाहनिमित्तकं श्राद्धं सम्पाद्यैवाशौचावरुद्धं तत्कार्यम्। बहूनां सन्निपाते तु—'एकोद्दिष्टे तु सम्प्राप्ते नवे पर्युषिते तथा। पितुः प्रथमतः कुर्यादन्यस्यासन्नियोगतः" इत्यादिस्मृत्याऽऽदौ पितुः श्राद्धं तत उपस्थितिक्रमेणेति च्छन्न-गुरुग्रन्थद्वैतपरिशिष्ट-निर्णयामृतादौ प्रपञ्चितम्। अशौचाभ्यन्तरे प्रेतश्राद्ध-प्रतिसाँव्वत्सरिकश्राद्धयोः पाते तदशौचान्तद्वितीयदिने प्रशस्ततिथौ कर्त्तव्यं, तदशौचान्तद्वितीयदिने मलमासोपस्थितौ तु मलमासोत्तरभाविन्यां कृष्णैकादश्याम्। अत्र समयप्रकाशकृन्मैथिलोऽमृतनाथोपाध्यायश्च—"प्रतिसंव्वत्सरं श्राद्धमाशौचोत्पतितञ्च यत्। मलमासेऽपि कर्त्तव्यमिति भागुरिरब्रवीत्" इति स्मृतिमनुरुन्धानौ साँव्वत्सरिकेऽशौचद्वारा प्रतिरुद्धेऽशौचान्ते मलमासेऽपि तत्कर्त्तव्यमित्याहतुरितरे च—"सपिण्डीकरणादूर्ध्वं यत्किञ्चिच्छ्राद्धिकं भवेत्। इष्टं वाऽप्यथ वा पूर्त्तं तन्न कुर्यान्मलिम्लुचे" इति स्मृतिमुपजीव्य तन्नानुमोदयन्त इतीत्थं विप्रतिपत्तावाचार एव शरणम्। एकाहमृतयोर्म्मातापित्रोर्विषये चाशौचान्तद्वितीयदिने पितुः शय्यादानाद्याद्यश्राद्धान्तं कर्म्म समाप्य मातुरपि शय्यादानादि तत्क्रियत इति केशवमिश्रादुक्त एव मार्गो व्यवहारानुकूलः, पितृ-सपिण्डनस्य मातृ-सपिण्डन-प्रयोजकतया तद्विसर्जनस्यैव प्रागुचितत्वात्। केचिच्च पितुर्वृषोत्सर्गान्तं कर्म्म समाप्य मातुरपि तथा सम्पाद्य पितुराद्यश्राद्धं ततो मातुस्तदित्यूचुस्तदानन्तर्यव्यवच्छेदमूलकत्वादनास्थेयमेव। शूद्रस्य मासिकाशौचाभ्यन्तरे प्रथममासिकश्राद्धप्राप्तौ तदनन्तरकृष्णैकादश्यामेव तत्कार्यं नाशौचान्तद्वितीयदिने, तस्यामपि बाधोपस्थितौ द्वितीयमासिकमपि सहैव तदुत्तरकृष्णैकादश्यां कार्यं, द्वितीयमासिकतिथौ प्रथममासिक-प्रतिषेधाप्रथमाकरणे द्वितीयानधिकाराच्चेत्यास्तां विस्तरः।

अथ क्षयाहे पार्वणमेकोद्दिष्टं वा कार्यमिति बहवः संशेरते पक्षद्वये प्रमाणोपलम्भात्तथा हि तावत्पार्वणे "प्रदानं यत्र यत्रैषां सपिण्डीकरणात्परम् । तत्र पार्वणवच्छ्राद्धं ज्ञेयमभ्युदयादृते ॥ अर्वाक् संवत्सराद्वृद्धौ पूर्णे संवत्सरेऽपि वा । ये सपिण्डीकृताः प्रेता न तेषां तु पृथक् क्रिया" इति शातातपः । एषाम् = पितॄणाम् । पृथक् क्रिया = एकोद्दिष्टम् । "पितुः पितृगणस्थस्य कुर्यात्पार्वणवत्सुतः । सर्वदा दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि" इति जातूकर्ण्यश्च । पितृगणस्थस्य = कृतसपिण्डीकरणस्य । दर्शवत् = अमावास्यावत्, अमावास्यायां पार्वणस्यैवातिदेशविधानादित्यग्रे वक्ष्यते । एकोद्दिष्टे च "एकोद्दिष्टं परित्यज्य पार्वणं यः समाचरेत् । सदैव पितृहा स स्यान्मातृहा भ्रातृनाशकः ॥ एकोद्दिष्टं परित्यज्य पार्वणं कुरुते नरः । अकृतं तद्विजानीयाद्भवेच्च पितृघातकः ॥ मृताहे पार्वणं कुर्वन्नधोऽधो याति मानवः । सम्पृक्तेष्वाकुलीभावः[1] प्रेतेषु तु ततो भवेत् ॥ इति व्यासः । "सपिण्डीकरणादूर्ध्वं प्रतिसंवत्सरं सुतैः । मातापित्रोः पृथक्कार्यमेकोद्दिष्टं मृतेऽहनि" इति यमश्च । मृतेऽहनीत्यत्र मृतपदं मृताधिकरणकालोपलक्षणमेवं प्रागुक्तजातूकर्ण्यवचने क्षयेऽहनीत्यत्र क्षयपदमपि । एवं संशये— "प्रत्यब्दं पार्वणेनैव विधिना क्षेत्रजौरसौ । कुर्यातामितरे कुर्युरेकोद्दिष्टं सुता दश ॥ औरसः क्षेत्रजः पुत्रो विधिना पार्वणेन तु । प्रत्यब्दमितरे कुर्युरेकोद्दिष्टं सुता दश" इति जातूकर्ण्येन विभज्योक्तेरौरसक्षेत्रजकर्तृकं पार्वणं, तदितरपुत्रकर्तृकमेकोद्दिष्टमिति केचित्तच्च "एकोद्दिष्टन्तु कर्त्तव्यमौरसेन मृतेऽहनि । सपिण्डीकरणादूर्ध्वं मातापित्रोर्न पार्वणम्" इति पैठीनसिस्मृतिविरोधादुपेक्ष्यमेव । प्रोक्तजातूकर्ण्यवचनस्थस्य 'प्रत्यब्द'-मित्यस्य तु क्षयाहातिरिक्ताक्षयतृतीयादिविषयत्वम् । केचित्त्वेवं सति मृततिथौ पार्वणैकोद्दिष्टयोरुभयोरपि प्राप्तौ दर्श-प्रेत ( पितृ ) पक्षमृतयोरेव पार्वणमितरत्र मृतयोस्त्वेकोद्दिष्टमेव, "अमायां वा क्षयो[2] यस्य प्रेतपक्षेऽथ वा पुनः । सपिण्डीकरणादूर्ध्वं तस्योक्तः पार्वणो[3] विधिः" इति शङ्खस्मृत्यामावास्या-पितृपक्षाधिकरणकमृतमात्रमुद्दिश्य पार्वणातिदेशादित्यूचुः ।

---

१. सपिण्डनक्रियाद्वारा पितृलोकमासाद्य पितृगणैः सहैक्यमापन्नेषु ।

२. 'अमावास्याक्षयो यस्य इति पाठान्तरम् । ३. पार्वणोक्त इत्यर्थः ।

विज्ञानेश्वरस्त्वनिश्चितमूलकेनानेन वचनेन क्षयाहमात्रपार्वणविषयाणाम् "आपाद्य च सपिण्डत्वमौरसो विधिवत्सुतः। कुर्वीत दर्शवच्छ्राद्धं मातापित्रोः क्षयेऽहनि" "सपिण्डीकरणं कृत्वा कुर्यात्पार्वणवत्सदा। प्रतिसंव्वत्सरं विद्वाँश्छागलेयोदितो विधिः" रित्यादीनां जमदग्नि-शातातपादिवचनानां निश्चितमूलानां क्षयाहमात्रपार्वणबोधकानाममावास्या-प्रेतपक्षमृताहमात्रपरत्वेनातिसंकोचस्यायुक्तत्वात्सामान्यवचनानर्थक्याच्चायुक्तमिदम्, सामान्यविशेषयोर्द्वयोरपीह मृताहमात्रपरत्वेनानारभ्याधीतस्य विकृतिमात्रविषयस्य 'सप्तदश सामिधेनीरनुब्रूया' दिति सप्तदशवाक्यस्य सामिधेनीरूपद्वारसम्बन्धबोधकतया कृतार्थत्वान्मित्रविन्दादिप्रकरणपठितेन मित्रविन्दाद्यधिकारापूर्वसम्बन्धबोधकतया चरितार्थेन सप्तदशवाक्येन यथोपसंहारस्तथात्रासम्भवादिति वर्णयति। अपरे तु द्वादशसु पुत्रेष्वौरस-क्षेत्रजौ विशेषस्तत्रापि साग्निकत्वं तत्रापि च दर्शा[1]परपक्षमरणमित्येवम्परम्परया विशेषोपसंहारपर्यवसानाद्दर्शापरपक्षमृतस्यापि साग्निकावेवौरसक्षेत्रजावपि पुत्रौ पार्वणोक्तविधिवच्छ्राद्धं कुर्यातां निरग्निकौ तु तावपि शुद्धमेकोद्दिष्टमेवेति। युक्तञ्चैतत् "इन्दु[1]क्षये प्रेत[2]पक्षे विपत्तिश्चेद् द्विजन्मनः। साग्निकः पार्वणं कुर्यादेकोद्दिष्टं निरग्निकः" इति श्राद्धकल्पलताधृतस्मृतेः। वस्तुतस्तु कलौ प्राचुर्येणौरसभिन्नपुत्रस्यानादरणीयत्वात्स एव साग्निश्चेद्दर्श-प्रेतपक्ष-मृतस्य पितुः पार्वणं कुर्यादन्यत्र मृतस्य त्वेकोद्दिष्टमेवेत्येव समीचीनः पन्थाः, "वैतानाग्निर्गृहे येषां मातापित्रोः क्षयेऽहनि। न तेषामधिकारः स्यादेकोद्दिष्टे कदाचन॥ सपिण्डीकरणादूर्ध्वमग्नियुक्तस्य पार्वणम्। अनग्नेस्तु क्रिया नान्या एकोद्दिष्टमृते क्वचित्" "...........सपिण्डीकरणात्परम्। पार्वणेन विधानेन देयमग्निमता सदा" इत्यादिवृद्धयाज्ञवल्क्य-मत्स्यपुराणादि-वचनस्वरसात्। अत्रेदं बोध्यम्—साग्निकस्य मृतस्य निरग्निः कर्त्ता सपिण्डनादूर्ध्वमेकोद्दिष्टं कुर्यान्निरग्निकस्य मृतस्य साग्निकः कर्ता तु सपिण्डनादूर्ध्वमपि पार्वणमेवेति। एतेन-"बह्वग्नयस्तु ये विप्रा येचैकाग्नय एव वा। तेषां सपिण्डनादूर्ध्वमेकोद्दिष्टं न पार्वणम्" इति स्मृत्यन्तरविरोध इत्यपास्तम्। अत एव—"साग्निकौ तु पितापुत्रावमायां स्यात्पिता मृतः। पार्वणो हि विधिस्तस्य प्रतिसँव्वत्सरं भवेत्" इत्यादि मरिच्यादि

१. अमावास्यायाम्। २ आश्विनकृष्णपक्षे।

वचनं सङ्गच्छते। प्रतिसँव्वत्सरमित्यत्र 'क्षयाहे' इति शेषः। इदन्तु तत्त्वम्—'अमायां वा क्षयो यस्य' इत्यादिप्रागुक्तशङ्खादिस्मृत्या प्रेत (पितृ) पक्षामावास्यामृतस्य प्रोक्तसिद्धान्तसिद्धोऽपि पार्वणविधिरेव नातिदिश्यते, तथा सति तस्येत्येकवचनस्वरसभङ्गापत्तेः, "ततः प्रभृतिसंक्रान्तावुपरागादिपर्वसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृतेऽहनि" "सपिण्डीकरणादूर्ध्वं यत्र यत्र प्रदीयते। तत्र तत्र त्रयं कुर्याद्वर्जयित्वा मृताहनि" इत्यादिभिः सहैकवाक्यतानुरोधाच्च। किन्तु एकोद्दिष्टे प्रतिषिद्धस्य "नावाहनं नाग्नौकरणं नात्र विश्वेदेवाः" इत्यादेः पुनर्विधानं क्रियत इति। अथात्र कश्चिद्विशेषो दर्श्यते—पार्वणश्राद्धं सर्वेषामितरश्राद्धानां प्रकृतिभूतं, युगादि-मन्वादि-संक्रान्ति-मघा-भरणी-रविवार-प्रेतषोडशक-नव-नित्य-तीर्थोपनयन-विवाह-साँव्वत्सरिका (क्षयाहा) ऽऽम-हेमादीनि च विकृतिभूतानि तस्मादेषु विशेषानतिदेशे "प्रकृतिवद्विकृतिः कर्त्तव्या" इति न्यायात्पार्वणधर्म्मातिदेश एव, विशेषातिदेशे तु स[2] एवात एव "वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च। श्राद्धं संक्रान्तिवत्कुर्यात्पिण्डनिर्वपणं विना" "अयनद्वितये श्राद्धं विषुवद्द्वि[3] (द्वि) तये तथा। संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते" "युगादिषु च कुर्वीत पिण्डनिर्वपणादृते" "युगादौ पितृनक्षत्रे तथा मन्वन्तरादिषु। अर्घपिण्डं न कुर्वीत वैष्णवं श्राद्धमाचरेत्" "मघायुगादौ भरण्यां संक्रान्तौ रविवासरे। पिण्डदानं न कुर्वीत यदीच्छेत्सुतजीवितम्" "मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति। कनीयाँस्तु त्रयोदश्यां क्षयादभ्युदयादृते" इत्यादि-पुलस्त्य-मत्स्यपुराणादिवचनादिभिस्तत्तच्छ्राद्धेषु पिण्डनिर्वपणादिः, प्रेतश्राद्धान्युद्दिश्य "विकिरं, नैव, दातव्यं न कुर्यादाशिषं जपम्। षडञ्जलींश्च कुर्वीत एकोद्दिष्टेषु सर्वदा॥ आशिषो द्विगुणा दर्भा जयाशीः स्वस्तिवाचनम्। पितृशब्दः ससम्बन्धः शर्म्मशब्दस्तथैव च॥ प्रदक्षिणा विसर्गश्च सीमान्तानुव्रजस्तथा। अष्टादश पदार्थांश्च प्रेतश्राद्धे विवर्जयेत्" इति

---

१. इदमुपलक्षणम् 'एकत्र निर्णीतः शास्त्रार्थोऽन्यत्राप्युपतिष्ठते' इति न्यायस्यापि। २. विशेषातिदेश एव। ३. तान्तोऽदन्तश्चायं शब्द इति द्विदकारत्वमेकदकारत्वञ्चोपपद्येते

सुमन्त्वादिभिर्विकिरादि:, नवश्राद्धमुद्दिश्य "अन्नं न विकिरेद्भूमौ गृह्णीयान्नाशिषोऽत्र तु। पात्रालम्भो न चाद्यस्यमासनादिप्रयोगतः॥ नामगोत्रेण सम्बन्धरहितं प्रेतशब्दवत्। नवश्राद्धं गृहे कार्यं भार्या यत्राग्नयोऽपि वै॥ "अनूदकमधूपञ्च गन्धमाल्यादिवर्जितम्। नवश्राद्धममन्त्रन्तु पिण्डोदकविवर्जितम्" इत्यादिभी रेणु-सत्यव्रतादिवचनैः पिण्डोदकदानादिश्च प्रतिषिध्यमानः सङ्कुचत्ते। दशादिति दशाहादित्यर्थः। अभ्युदयादित्याभ्युदयिकादित्यर्थः। 'अन्यत्रादितरस्मै' इत्युभयत्र 'ऋते' शब्दयोगे पञ्चमी। अनूदकमिति-अविद्यमानमुदकं पिण्डोदके (उदकपदस्य पिण्डोदकोभयपरत्वात्) यस्मिन्निति विग्रहे-छान्दसत्वाद्दीर्घः। एवमितरेष्वपि विकृतिश्राद्धेषु श्राद्धरत्न-श्राद्धचिन्तामणि-श्राद्धसूत्रादितोऽवसेयानि। मौञ्जीबन्धादौ कार्ष्णाजिनिराह—"मौञ्जीबन्धाद्विवाहाच्च वर्षार्द्धं वर्षमेव च। पिण्डान् सपिण्डा नो दद्युः सपिण्डीकरणादृते" इति। इह सपिण्डीकरणं षोडशश्राद्धोपलक्षकम्। सङ्ग्रहकारश्च—"विवाहोपनयादूर्ध्वं-वर्षं वर्षार्द्धमेव वा। न कुर्यात्पिण्डनिर्वापं न दद्यात्कारणादि वै" इति। एष च प्रतिषेधो-महालय-गया-मातापितृक्षयाहव्यतिरिक्तपरः।—"महालये गयाश्राद्धे मातापित्रोर्मृतेऽहनि। कृतोद्वाहोऽपि कुर्वीत पिण्डनिर्वपणं सुतः" इति तेनैवोक्तेः। इहोद्वाहपदमुपनयनस्याप्युपलक्षणं, वचनस्यास्य प्रागुक्तवचनद्वयप्रतिषिद्धपिण्डनिर्वपणप्रतिप्रसवकर्तृत्वादित्यास्तां तावत्। गुरुपातकमीशाननाथकृतलग्नज्ञाने शातातपेनोक्तम्—"मातापित्रोर्मृतौ चैव स्वगुरोश्च मृतौ तथा। गुरुपातकमुद्दिष्टमृषिभिर्वेदपारगैः॥ मातुः षाण्मासिकं प्रोक्तं पितुरेकादशं तथा। गुरोर्द्वादशमासांश्च यज्ञकर्म्म विवर्जयेत्" इति। एकादशमेकादशमासिकम्। द्वादशमासानित्यत्र द्वादशमासमिति पाठे द्वादशमासिकमित्येवार्थः। यज्ञकर्म्मेत्यत्र तत्रेत्यादिः। यज्ञकर्म्म = वैदिकं कर्म्म। स्त्रियां मृतायां मासत्रयं यावद्यज्ञकर्म्मत्यागो व्यवहारादपि। गुरुपदं पत्युरपि बोधकम्। श्रौतं-कर्म्म स्वयमेव, स्मार्त्तन्त्वन्यद्वाराऽपि कार्यमाह पराशरः—"श्रौतं कर्म्म स्वयं कुर्यादन्योऽपि स्मार्त्तमाचरेत्। अशक्तौ

१. 'तथा पुन'-रिति पाठान्तरम्।

श्रौतमप्यन्यः कुर्यादाचारमन्ततः" इति । एतच्च काम्येऽपि प्रतिनिधिविधायकमन्यथा श्रौतस्मार्त्तभेदेनोपादानस्य वैयर्थ्यात् । अन्ततः = उपक्रमोत्तरम् । तथा च स्मृत्यन्तरम्—"काम्ये प्रतिनिधिर्नास्ति नित्यनैमित्तिके हि सः । काम्येषूपक्रमादूर्ध्वं केचिदिच्छन्ति सत्तमाः" इत्युपक्रमादूर्ध्वमित्याह । हिरण्यकेशिसूत्रे तु—"न स्वामित्वस्य भार्यायाः पुत्रस्य देशस्य कालस्याग्नेर्देवतायाः कर्म्मणः शब्दस्य च प्रतिनिधिर्विधीयते" इत्यनेन स्वामि-भार्यादिविषये प्रातिनिध्यापवाद उक्तः । "स्वयं कर्तुमशक्तश्चेत्कारयेत पुरोधसा" इति चातुर्वर्ण्यसाधारणपरकवायवीयवचनबलाद्राजस्थानादिदेशस्थमहाराजादेर्गयाश्राद्धाद्यर्थं पुरोहितप्रेषणव्यवहारो नात्यन्तमसङ्गतः । मदनरत्ने—"अश्रुप्रपातो रोषश्च कलहस्य कृतिस्तथा । उपवासाद् व्रताद्वापि सद्यो भ्रंशयति स्त्रियम् ॥ दानव्रतानि नियमा ज्ञानं ध्यानं हुतं जपः । यत्नेनापि कृतं सर्वं क्रोधितस्य वृथा भवेत्" इत्यनेन श्राद्धोपवासादौ क्रोधाश्रुपातकलहादयः प्रतिषिद्धाः । रोचनाञ्जनगन्धतैलादिप्रतिषेधश्च-"अञ्जनं रोचनञ्चैव गन्धान् सुमनसस्तथा । व्रते चैवोपवासे च नित्यमेव विवर्जयेत् ॥ शिरसोऽभ्यञ्जनं सौम्ये नैवमेतत्प्रशस्यते । न पादयोर्न गात्रस्य स्नेहेनेति स्थितिः स्मृता" इति हरिवंशोक्तो बोध्यः । मदनरत्नोक्तवचने स्त्रियमित्युपलक्षणं पुंसोऽपि । वैदिकमन्त्रप्रयोगे प्रणवोच्चारणमावश्यकमाह याज्ञवल्क्यः-"यन्न्यूनञ्चातिरिक्तञ्च यच्छिद्रं यदयज्ञियम् । यदमेध्यमशुद्धञ्च यातयामञ्च यद्भवेत् । तदोङ्कारप्रयुक्तेन (प्रयोगेण) सर्वञ्चाविकलं भवेत्" इति । स चोङ्कारप्रयोगो मन्त्रादावेवेति तु "तस्मादोमित्युदाहृत्य यज्ञदानतपःक्रियाः । प्रवर्त्तन्ते विधानोक्ताः सततं ब्रह्मवादिनाम्" इत्यादिवचनानुसारात्प्रणवस्य सकलवेदादिवाङ्मयादिभूतत्वाच्च । अत-एवोक्तं 'त्वरत्यनोंकृतो मन्त्र'-इति । एतत्प्राशस्त्यविस्तरेणालमधिकं दिदृक्षुभिर्गोपथब्राह्मण-काठक-बृहदारण्यक-छान्दोग्याथर्वशिरःप्रभृतीनि ग्रन्थरत्नान्यवलोकनीयानि । एष चादौ प्रणवोच्चारणविधिः प्रश्नोत्तरादिवाक्येष्वपि, तथा च ब्रह्मपुराणे—"अग्नौ करिष्य इति तान् प्रणतः प्रार्थयेद् द्विजान् । ॐ कुरुष्वेति तैरुक्तो दक्षिणाग्निं समाह्वयेत्" इति । अत एव 'ॐ सिद्धम् ?' इति कर्त्रा पृष्टः पाचकः 'ॐ सिद्धम्' इत्युत्तरयतीति दिक् ।

## अथैकोद्दिष्टवेलादिनिर्णयः ।

तत्र मध्याह्नव्यापिन्यपराह्णव्यापिन्यस्तमयव्यापिनी वा तिथिर्ग्राह्येति विप्रतिपत्तौ पञ्चधाविभक्तदिनतृतीयभागे–मध्याह्न इति यावदिति माधवो मिश्राश्च[1] । कुतपाद्रौहिणं यावदारम्भणीयमिति निष्कर्षः । कुतपरौहिणौ च—"रुद्रः श्वेतश्च मैत्रश्च ततो गोरभटस्तथा । सावित्रो विजयश्चैव गान्धर्वः कुतपस्तथा ॥ रौहिणोऽथ विरञ्चिश्च सोमो निर्ऋतिरेव च । माहेन्द्रो वरुणश्चैव भटः पञ्चदशः स्मृतः ॥ अह्नो मुहूर्त्ता विख्याता दश पञ्च च सर्वदा । तत्राष्टमो मुहूर्त्तो यः स कालः कुतपः स्मृतः ॥ अष्टमे भास्करो यस्मान्मन्दीभवति सर्वदा । तस्मादनन्तफलदस्तत्रारम्भो विधीयते ॥ ऊर्ध्वं मुहूर्तात्कुतपाद्यन्मुहूर्तचतुष्टयम् । मुहूर्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते ॥ इति मत्स्यपुराणोक्त दिवसीयपञ्चदशमुहूर्त्ताभ्यन्तराष्टम–नवममुहूर्त्तरूपौ । कुतपे नारदः—"सन्त्यज्य सप्तमं भागमष्टमं क्रमते यदा । स कालः कुतपो ज्ञेयो मन्दीभूतस्य संज्ञया" इति । क्रमत इति प्रकरणाद्रविरिति शेषः । आपस्तम्बोऽपि—"सप्तमात्परतो यस्तु नवमात्पूर्वतः स्थितः । उभयोरपि मध्यस्थः स कालः कुतपः स्मृतः" इति । भविष्येऽपि—"प्रविश्य भानुः स्वां छायां शङ्कुवद्यत्र तिष्ठति । स कालः कुतपो नाम मन्दीभूतस्य संज्ञया" इति । एकोद्दिष्टस्य मध्याह्नव्यापित्वे प्रमाणानि यथा—"आमश्राद्धन्तु-पूर्वाह्न एकोद्दिष्टन्तु मध्यमे । पार्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्" इति शातातप–हारीतौ । आमश्राद्धं मातृकम् । मध्यमे–मध्याह्ने । "प्रारभ्य कुतपे श्राद्धं कुर्यादारौहिणं बुधः । विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्" इत्येकोद्दिष्टम्प्रक्रम्य गौतमः । "एकमुद्दिश्य यच्छ्राद्धं देवहीनं विधीयते । एकोद्दिष्टन्तु तत्प्रोक्तं मध्याह्ने तत्प्रकीर्त्तितम्" इति व्यासः । "कुतप–प्रथमे भाग एकोद्दिष्टमुपक्रमेत् । आवर्तन–समीपे वा तत्रैव नि-यतात्मवान्" इति च । देवहीनं=विश्वदेव–कर्म्म–रहितम् । आवर्त्तनं= पश्चिमदिगवस्थितायाः सूर्यस्य छायायाः पूर्वदिग्गमनारम्भसमयः । "आवर्त्तनात्तु पूर्वाह्णो ह्यपराह्णस्ततः परः" इति स्मृतेरिति शब्दकल्पद्रुमः । 'आवर्त्तनं कुतपात्रशिष्टदण्ड' इति तु कालमाधवीये । "एकोद्दिष्टमुप-

---

1. वाचस्पतिमिश्राः ।

क्रमेत कुतपे" इति दीपिका। "मध्याह्नव्यापिनी या स्यात्सैकोद्दिष्टे तिथि-र्भवेत्" इति गौतमीयं शिवराघवसँव्वादात्मकञ्च वचनम्। "दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्" इति शातातपः। "दिवसस्याष्टमे भागे मन्दीभवति भास्करः। स कालः कुतपो नाम पितॄणां दत्तमक्षयम्" इति वायुपुराणम्। "पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" इति ब्रह्मपुराणम्। एकोद्दिष्टम्प्रक्रम्य स्मृत्यन्तरम्—"मध्याह्नव्यापिनी या तु तिथिः पूर्वा परापि वा। तत्र कर्म्माणि कुर्वीत ह्रासवृद्धी न कारणम्" इति। मध्याह्नश्च प्रागुक्तेषु पञ्चदशसु मुहूर्त्तेषु यथाक्रमं गान्धर्व-कुतप-रौहिणाख्य-सप्तमाष्टमनवममुहूर्त्तस्वरूपस्तत्र कुतप-रौहिणयोः प्रतिपदोक्तवचनप्राप्तेः, सति सम्भवे तत्रैवाऽऽरम्भणीयम्। दिनद्वये मृततिथेः कुतपव्यापित्वे, पूर्वदिने रौहिणं व्याप्य वोत्तरदिने कुतपव्यापित्वे पूर्वदिन एवैकोद्दिष्टम्—'मध्याह्नव्यापिनी या तु' इति प्रागुक्तां सामान्यां स्मृतिमपोद्य—"दर्शञ्च पूर्णमासञ्च तथा साँव्वत्सरं दिनम्। पूर्वविद्धमकुर्वाणो नरकम्प्रतिपद्य(द्य)ते" इति ब्रह्मवैवर्त्त-कूर्म्म-नारदपुराण-शिवरहस्योक्ते-र्जागरूकत्वात्तिथिमूलत्वास्तमयव्यापित्वरूपगुणद्वयसत्त्वाद्रौहिणोल्लङ्घनस्य गौतमेन प्रतिषिद्धत्वात्कपालाधिकरणन्यायात्, 'अधिकारसिद्धौ समयक्षेपस्यायोग्यत्व'-मिति वाचस्पतिमिश्रोल्लेखाच्च। अस्तमयव्यापित्वञ्च—"पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते" इति वसिष्ठेनोक्तम्,-यदुभयदिनव्यापितिथेः पूर्वदिन एव सम्भवति। दिनद्वये कुतप-रौहिणयोर्मृततिथ्यलाभे मध्याह्नान्तर्गते कुतपपूर्वभागे गान्धर्वमुहूर्त्ते प्रारम्भणीयम्, प्रागुक्तवचनैर्म्मध्याह्नव्यापिताया आदरात्। "ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः। कुतपादथ वाप्यर्वागासनं कुतपे भवेत्" इति शिववाक्याच्च। अत्र 'ग्रह' पदेन ग्रहणनिमित्तम्, 'आदि' पदेन संक्रान्त्यादिनिमित्तं श्राद्धं गृह्यतेऽतो न वक्ष्यमाणस्य ग्रहण-संक्रान्त्यादिनिमित्तकश्राद्धस्य कुतपारम्भणीयताप्रसङ्गः। यदापि मृततिथिर्दिनद्वये मध्याह्नमस्पृष्ट्वा द्वितीयदिने कञ्चित्कालं व्याप्नोति-तदापि पूर्वदिन एव पार्वणोक्तगौणकालेऽपि कार्यम्—"न द्व्यहव्यापिनी चेत्स्यान्मृताहस्य तु या तिथिः। पूर्वस्यां निर्वपेत्पिण्डमित्याङ्गिरसभाषितम्" इति सुमन्तुवचनात्, "न द्व्यहव्यापिनी

चेत्स्यान्मृताहे तु यदा तिथिः। पूर्वविद्धैव कर्त्तव्या त्रिमुहूर्त्ता भवेद्यदि" इति मनुवचनाच्च। पूर्वोक्तानामेकोद्दिष्टस्य मध्याह्नव्यवस्थापकवचनानां फलातिशयद्योतनद्वारा प्राशस्त्यपरत्वेनैव व्यवस्थापितत्वाच्च। अन्यथा पूर्वोत्तरदिनयोर्म्मध्याह्ने मृततिथ्यलाभे तद्वर्षे वार्षिकलोपापत्तेर्वज्रलेपायितत्वात्। न चेष्टापत्तिः, "पण्डिता ज्ञानिनो मूर्खाः स्त्रियो वा ब्रह्मचारिणः। मृताहं समतिक्रम्य चाण्डालेष्वभिजायते" "मृतेऽहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात्। मातुश्चैव वरारोहे वत्सरान्ते मृतेऽहनि॥ नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः" "भोजको यस्तु वै श्राद्धं न करोति खगाधिप। मातापितृभ्यां सततं वर्षे वर्षे मृतेऽहनि। स याति नरकं घोरं तामिस्रं नाम नामतः" इत्यादि मरीचि-भविष्यपुराणादिवचनैराब्दिकश्राद्धस्य तद्दिने त्यागे निन्दा-प्रायश्चित्तश्रवणेनावश्यकर्त्तव्यत्वात्। समतिक्रम्य = श्राद्धाकरणेनोल्लङ्घ्य। 'मृतेऽहनी'-त्यत्र 'मृत' पदं तत्सम्बन्धिनि लाक्षणिकमहःपदञ्च तिथौ। मातापितृभ्यामिति 'क्रियार्थोपपदस्य चे'-ति कर्म्मणि चतुर्थी, मातापितरौ तर्पयितुमित्यर्थः। अपि च "एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते" इति कण्वोक्तदिशैकोद्दिष्टपदस्यैक उद्दिष्टो यस्मिन्निति व्युत्पत्त्या यौगिकत्वेनाद्यश्राद्धमासिकश्राद्धादीनामपि बोधकतया 'एकाहे द्वादशाथ वा' 'द्वादशाहः प्रशस्यते' इत्यादिस्मृत्या द्वादशाह एव सर्वेषां मासिकाद्येकोद्दिष्टानां मध्याह्ने नियमने एकस्मिन्मध्याह्ने सकलानुष्ठानासम्भवेन विधेरननुष्ठानलक्षणाप्रामाण्यापत्तिस्तस्माद्यथोक्तमेवाऽऽदर्त्तव्यमयमेव च रत्नाकर-श्राद्धकल्प-श्राद्धचिन्तामणि-श्राद्धप्रदीपादिस्वरसोऽपि। प्राक प्रदर्शितरीत्या यौगिकत्वेनाद्यश्राद्ध-मासिकश्राद्ध—

१. एतच्च श्राद्धं सन्न्यासिनाममावास्यामृतस्य प्रेतपक्षमृतस्य च पार्वणोक्तविधिना कार्यम्-"एकोद्दिष्टं यतेर्नास्ति त्रिदण्डग्रहणादिह। सपिण्डीकरणाभावात्पार्वणं तस्य सर्वदा" इति प्रचेतःस्मृतेः। "अमावास्याक्षयो यस्य प्रेतपक्षेऽथ वा पुनः। पार्वणं तत्र कर्त्तव्यं नैकोद्दिष्टं कदाचन" इति यमस्मृतेश्च। तद्भिन्नानां तु सर्वेषां सर्वदैकोद्दिष्टविधिर्नैव। शास्त्रात्तत्र पार्वणैकोद्दिष्टयोर्व्रीहि-यववद्विकल्पप्राप्तेरपि शिष्टाचारविरोधेनानादरात्। विकल्पे "येनास्य पितरो याता येन याताः पितामहाः। तेन यायात्सतां मार्गं तेन गच्छन्न दुष्यति" इति स्मृत्या वंशपरम्परागतव्यवहारस्यैवोपोद्बलकत्वप्रदर्शनात्। प्रदर्शितञ्चैतत्सर्वं प्रसङ्गान्मूलेऽपि मया विविच्य।

वार्षिकश्राद्धरूपं सर्वमेव कर्मैकोद्दिष्टपदभागिति तत्र सर्वत्रायमेवारम्भ-क्रमः,—"सपिण्डीकरणादर्वाक् कुर्याच्छ्राद्धानि षोडश । एकोद्दिष्टविधानेन कुर्याच्छ्राद्धानि तानि तु" इति पैठीनस्युक्त्याऽऽद्यश्राद्धादिष्वेकोद्दिष्टत्व-स्यातिदेशाच्च । सपिण्डीकरणञ्च यद्यपि-"एकमुद्दिश्य यच्छ्राद्धमेकोद्दिष्टं तदुच्यते । त्रीनुद्दिश्य तु यत्तद्धि पार्वणं मुनयो विदुः" इति कण्वोक्तदिशा प्रेतांश एकोद्दिष्टस्वरूपं पित्रंशे च पार्वणस्वरूपमिति नरसिंहाकारं तथापि प्रेतोपाधिना पितृश्राद्धकरणादेकोद्दिष्टप्रधानमेवेति तदप्याद्यश्राद्धादिव-द्द्रौहिणाभ्यन्तर एव सति सम्भव आरम्भणीयम् । 'एकोद्दिष्टं क्रिया अपो'ति वचनेन तत्रैकोद्दिष्टप्राधान्यप्रत्यायनादिति श्राद्धचिन्तामणौ मिश्राः । केचित्तु 'पित्रर्थे चापराह्णिकी' 'अपराह्णे तु पैतृकम्' 'ययास्तं सविता याति' इत्यादि देवल—ब्रह्मपुराण—गृह्यपरिशिष्टाद्युत्सर्गवचनैः सपिण्डीकरणकालोऽपराह्णः । 'विरुद्धधर्म्मसमवाये भूयसां स्यात्सधर्म्म-कत्वम्' इति जैमिनिसूत्रमनुसृत्य "यद्यप्यदन्तकः पूषा[1] पैष्टमत्ति सदा चरुम् । अग्नीन्द्रेश्वरसामान्यात्तण्डुलोऽत्र विधीयते" इति च्छन्दोगपरि-शिष्टाद्युक्तो यथा बहूनामग्न्यादीनामनुरोधात्पूष्णोऽपि तण्डुल एव चरुः, पैष्टस्य च बाधस्तथेहाऽपि बहुपित्रादिपार्वणानुरोधादेकोद्दिष्टकालस्य बाधः। एकोद्दिष्टादौ च—"द्वितीयादिकयुग्मानां पूज्यता नियमादिषु । एकोद्दिष्टा-दिवृद्ध्यादौ ह्रासवृद्ध्यादि[2]देशना" इति व्यासादिवचनाद्व्यवस्था । नियमा-दिषु = व्रतोपवासादिदेवकर्म्मसु । एकोद्दिष्टादिवृद्ध्यादौ = एकोद्दिष्टादि-श्राद्धनिमित्तीभूतस्य तिथिविशेषस्य वृद्ध्यादौ । वृद्ध्यादावित्यादिपदेन क्षय-स्तम्भनयोर्ग्रहणं, ततश्चैकोद्दिष्टादिश्राद्धकालस्य सन्देहे ह्रासवृद्ध्यादि-देशना = ह्रासवृद्ध्यादिविधायकं, नियामकमिति यावत् । अत्र ह्रास—वृद्ध्यादिपदं लक्षणया कृष्ण-शुक्ल-पक्षयोर्बोधकं, ततश्च तिथि-द्वैधे आपराह्णिकेतरपितृकर्म्मणि शुक्ल-कृष्णपक्षयोरवेरुदयास्तमयनाभ्यां निर्ण-यस्तथा च विष्णुधर्म्मोत्तरीये—"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः । कृष्णपक्षे तिथिर्ग्राह्या यस्यामस्तमितो रविः" इतीति ब्रुवते । अत्र तारतम्यं सुधीभिरूह्यम् । अधिकन्तूपेक्षितमनावश्यकत्वात् ।

---

१. पूषा = सूर्यदेवः । २. ह्रासवृद्ध्यादीति पृथक् ( कर्तृ ) पदम् ।

## अथ षोडशश्राद्धनिर्णयः ।

अथ षोडश श्राद्धानि तानि च विशेषश्रुतेः "एकोद्दिष्टविधानेन कुर्य्याच्छ्राद्धानि तानि तु" इति प्रागुक्तपैठीनसिवचनाच्चैकोद्दिष्टविधिनैव साग्निना निरग्निना च कार्याणि । षोडशश्राद्धविषये कात्यायनः-"द्वादश प्रतिमास्यानि आद्यं षण्मासिके तथा । सपिण्डीकरणञ्चैव प्रेतश्राद्धानि षोडश" इति आद्यमेकादशाहश्राद्धम्, "मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् । प्रतिसंवँत्सरञ्चैवमाद्यमेकादशेऽहनि" इति याज्ञवल्क्योक्तेः । इह याज्ञवल्क्यवचने 'एकादशाह'—पदं तत्तद्वर्णशुद्धिदिनोपलक्षकम्, 'अशौचव्यपगमे' इति विष्णुस्मृतेः । "शुचिना कर्म्म कर्त्तव्य"-मिति—स्मृतेश्च अत एव विहितकाललाभे सद्यः शौचे तदहरेवाद्यश्राद्धम् । शुद्धेरग्रिमदिन आद्यश्राद्धबोधकानि वाक्यानि तु दिवसव्यापकाशौचपराणीति न कश्चिद्विरोधः । प्रोक्तकात्यायनवचने 'षण्मासिके' इति द्विवचनेनोनवार्षिकस्यापि ग्रहणम् । परिशिष्टे—"श्राद्धमग्निमतः कार्यं दाहादेकादशेऽहनि । ध्रुवाणि तु प्रकुर्वीत मृताहनि तु सर्वदा" इति । अग्निमतः=श्रौताग्नियुक्तस्य । ध्रुवाणि=आवश्यकानि=साव्वँत्सरिकमासिकादीनि । ब्रह्मपुराणम्—"नृणान्तु त्य(मु)क्तदेहानां श्राद्धाः षोडश सर्वदा । चतुर्थे पञ्चमे चैव नवमैकादशे तथा ॥ ततो द्वादशभिर्म्मासैः श्राद्धा द्वादश संख्यया । कर्त्तव्याः शुचिभिस्तेषां तत्र विप्राँस्तु तर्पयेत्" इति श्राद्धाः = श्राद्धानि । जातूकर्ण्यः—"द्वादश प्रतिमास्यानि आद्यं षण्मासिकं तथा । त्रैपक्षिकाब्दिके चेति श्राद्धान्येतानि षोडश" इति । आद्यमाद्यश्राद्धम् । षण्मासिकमूनषण्मासिकम् । आब्दिकमूनवार्षिकम् । इत्थमेव व्यासोऽपि किञ्चिद्व्यतिक्रम्याह—"द्वादशाहे त्रिपक्षे च षण्मासे मासिकाब्दिके । श्राद्धानि षोडशैतानि संस्मृतानि मनीषिभिः" इति । त्रिपक्षे = तृतीयपक्षे । भविष्यपुराणम्—"अस्थिसञ्चयनं श्राद्धं त्रिपक्षे मासिकानि तु । रिक्त-

---

(१) अत्र 'षण्मास'-शब्दात् 'अवयसि ठंश्च' इति सूत्रेण ठन् । 'षाण्मासिक' इति त्वपपाठः, वयोऽर्थाभावेन 'षण्मासाण्ण्यच्च' इत्यस्याप्राप्तेः । 'कालाट्ठञ' इति तु न, विशेषविहितेन ठना बाधितत्वात् । एवं सत्यपि 'ऊनषाण्मासिक'-मिति प्रचुरप्रयोगः, समानकालीनं, प्राक्कालीनमित्यादिवत्प्रामादिक एवेति प्रत्येमि ।

योश्च तथा तिथ्योः प्रेतश्राद्धानि षोडश" इति। इह रिक्तयोस्तिथ्योरित्य-नेनोनषण्मासिकोनवार्षिकयोर्ग्रहणम्। इत्थमेषां वचनानां मिथो विप्रति-पत्तौ सत्यामपि निरपेक्षत्वेन प्रेतत्वविमुक्तिरूपफलजनकतया तत्तद्देशा-चारादितो मृतविशेषापेक्षया च व्यवस्थेति न कस्यचिदपि वचनस्या-सङ्गतिः शङ्क्या। अत एव 'नृणां तु त्यक्तदेहाना'-मित्युक्तब्रह्मपुराणवच-नस्य निषिद्धसपिण्डीकरणकमृतविषयकत्वेन द्वैतनिर्णयादौ व्यवस्थापनम्।

निषिद्धसपिण्डीकरणकत्वञ्च—

"अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डनम्।
पत्युः पुत्रस्य चाभावे पुनरस्यास्तु योषितः॥
सपिण्डीकरणं नास्ति नारदो मुनिरब्रवीत्"
"पुत्राभावे पतिः कुर्यात्तदभावे (पत्यभावे) च नेष्यते"

इति गोभिलादिस्मृत्युक्तस्वरूपम्। अत एव च—"साग्निकस्तु यदा कर्त्ता प्रेतश्चानग्निमान् भवेत्। द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः"। "अनग्निस्तु यदा वीर भवेत्कुर्यात्तदा गृही। प्रेतश्चेदग्निमाँस्तु स्यात्त्रिपक्षे वै सपिण्डनम्"-"प्रेतश्चेदाहिताग्निः स्यात्कर्त्तानग्निर्यदा भवेत्। सपिण्डीकरणं तस्य कुर्यात्पक्षे तृतीयके" इत्यादिभिर्लघुहारीत—सुमन्तु-प्रभृति-नानावचनैः साग्नि-निरग्नि-भेदेन विप्रतिपाद्यमानोऽपि सपिण्डी-करणकालः "अनाहिताग्नेः प्रेतस्य पूर्णेऽब्दे भरतर्षभ। द्वादशेऽहनि षण्मासे त्रिपक्षे वा त्रिमासि वा॥ एकादशेऽथ वा मासि मङ्गलस्याप्युप-स्थितौ" इति भविष्यपुराणवचनेन विकल्प्य व्यवस्थापितः।

"अथ सपिण्डीकरणं वस्तुतस्त्वाहिताग्न्यनाहिताग्निसामान्येन प्रव-र्त्तमानम्। त्रिपक्षे वा तृतीये वा मासि षष्ठे चैकादशे द्वादशे वा द्वादशाहे च" इत्याश्वलायनादिवचनमनुसृत्यैव व्यवस्थापनीयं, तेन मैथिलाः— "आद्यमेकादशेऽहनि" "आद्यं श्राद्धमशुद्धोऽपि कुर्यादेकादशेऽहनि" इत्या-दियाज्ञवल्क्यादिवचनबलात्प्रतिवर्णाशौचान्तद्वितीयदिन आद्य श्राद्धम्, 'एकादशाह' पदस्य तत्तद्वर्णाशौचान्तद्वितीयदिनोपलक्षकतायाः प्रागुक्तत्वात्।

"द्वादशाहेऽथ सर्वाणि संक्षेपेण समापयेत्" "आनन्त्यात्कुलध-र्म्माणां पुंसाञ्चैवायुषः क्षयात्। अस्थितेश्च शरीरस्य द्वादशाहः प्रश-स्यते" "द्वादशाहेऽथ वा पुनः" इत्यादिवचनबलाच्च प्रतिवर्णाशौचान्त-

तृतीयदिने मासिकादिसपिण्डीकरणान्तानि कर्म्माणि कुर्वन्ति, 'द्वादशाह'-पदस्य ह्यत्र प्रतिवर्णाशौचान्ततृतीयदिनोपलक्षकत्वम् । "उदितेऽनुदिते चैव होमभेदो यथा भवेत् । तथा कुलक्रमायातमाचारञ्च चरेद्बुधः" इति भविष्यपुराणवचनेनोदितानुदितहोमवत्कर्मविकल्पे कुलक्रमागताचारस्य व्यवस्थापकत्वेन निर्णीतत्वात् । तथा ह्यैतरेयब्राह्मणे(२,१)ऽनुदितहोमम् "उद्यन्नु खलु वा आदित्यः०" इत्यादिना निषिध्य "तस्मादुदिते होतव्यम्" इत्युदितहोमो विधीयते, तैत्तिरीयब्राह्मणे ( २,१,१,१२ ) पुनः "यदनुदिते सूर्ये प्रातर्जुहुयादुभयमेवाग्नेयं स्या,-दुदिते सूर्ये प्रातर्जुहोति" इति, "यदुदिते सूर्ये प्रातर्जुहुयाद्यथाऽतिथये प्रद्रुताय[1] शून्यायावसथायाहार्यं हरन्ति तादृगेव तत्" इति च वाक्याभ्यामुदितानुदितहोमयोः स्तुति-निन्दे श्रूयेते—तत्र शाखादिभेदात्स्वस्वाचारभेदाच्च[2] व्यवस्था भवतीति । द्वादशाह एव मासिकादि-सपिण्डीकरणान्तं कर्म्म कार्यमिति पक्षे "सर्वेषामेव वर्णानामाशौचान्ते सपिण्डनम्" इति कात्यायनवचनम्, "प्रेतः सपिण्डनादूर्ध्वं पितृलोकेऽनुगच्छति । कुर्यात्तस्य तु पाथेयं द्वितीयेऽह्नि सपिण्डनात्" इति वचनञ्चानुकूलम् । इहोभयत्र 'अशौचान्त'-इति, 'द्वितीयेऽह्नि' इति चाशौचव्यपगमानन्तरद्वितीयदिनलक्षकं, तेनाशौचान्ततृतीयदिन इत्यर्थः । केचित्तु "ततः सम्वँत्सरे पूर्णे सपिण्डीकरणं, त्रिपक्षे वा यदा चार्याग् वृद्धिरापद्यते" "अथ सपिण्डीकरणं, सम्वँत्सरान्ते द्वादशाहे वा" इति कात्यायनाश्वलायनाभ्यां त्रिपक्षे वृद्धि प्राप्तौ संवत्सरान्ते द्वादशाहे ( अशौचान्ततृतीयदिने ) वेति चत्वारः पक्षाः सपिण्डीकरणस्य दर्शितास्तत्र "साग्निकस्तु यदा कर्त्ता प्रेतो वाऽप्यग्निमान् भवेत् । द्वादशाहे तदा कार्यं सपिण्डीकरणं पितुः" इति वचनाद्द्वादशाहे पितुः सपिण्डीकरणं साग्निना कार्यं, सपिण्डीकरणं विना पिण्डपितृयज्ञासिद्धेः । निरग्निकस्तु त्रिपक्षे वृद्धिप्राप्तौ सम्वँत्सरे वा कुर्यादिति । 'द्वादशाहः प्रशस्यत'-इत्यापत्कालिकं, तत्र षोडश श्राद्धानि कृत्वैव सपिण्डीकरणं कार्यं, तद्व्यतिरिक्तकालिकत्वे तु सपिण्डीकरणं कृत्वा स्वकाल एव तानीति मुख्यः पक्षः । 'श्राद्धानि षोडशादत्त्वा नैव कुर्यात्स-

---

१. प्रस्थिताय । २. स्वपदेन कर्त्ता गृह्यते । ३. अत्र 'नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्' इत्यनेन नञो वा वृद्धिः ।

पिण्डताम्। श्राद्धानि षोडशापाद्य विदधीत सपिण्डताम्' इति स्मृतेरेवो-भयत्र मानत्वात्। अत्र च "सपिण्डीकरणादर्वाक्कुर्वञ्छ्राद्धानि षोडश। एकोद्दिष्टविधानेन कुर्यात्सर्वाणि तानि तु॥ सपिण्डीकरणादूर्ध्वं यदा कुर्या-त्तदा पुनः। प्रत्यब्दं यो यथा कुर्यात्तथा कुर्यात्स तान्यपि" इति स्मृत्युक्तो विशेषः। प्रत्यब्दं = वार्षिकम्। यो यथेति–पार्वणमेकोद्दिष्टं वेत्यर्थ इत्याच-क्षते। एतेषाञ्च षोडशानां श्राद्धानां यथाकालमवश्यकर्त्तव्यत्वमाह लघुहा-रीतः—"प्रेतसंस्कारकर्म्माणि यानि श्राद्धानि षोडश। यथाकालं तु कार्या-णि नान्यथा मुच्यते ततः" इति। यथाकालमिति–विहितं कालमनतिक्र-म्येत्यर्थः, पदार्थानतिवृत्तौ ह्यव्ययीभावः। द्वैतनिर्णयधृतस्मृत्यन्तरञ्च— "सपिण्डीकरणान्तानि प्रेतश्राद्धानि षोडश। यथाकालं विधेयानि नान्यथा मुच्यते हि सः" इति। सरोजकलिकायाम्—"यस्यैतानि न दीयन्ते प्रेत-श्राद्धानि षोडश। प्रेतत्वं हि स्थिरं तस्य दत्तैः श्राद्धशतैरपि" इति। "न करोति च यः श्राद्धं पित्रादीनां विशेषतः। पातित्यं जायते तस्य सर्वकर्म्म-विगर्हितम्" इति च। अत्र वचनद्वये 'यथाकाल'–मित्यस्य शेषः। वायु-पुराणम्—"श्राद्धानि षोडशादत्त्वा[1] नैव कुर्यात्सपिण्डताम्। प्रोषिताव-सिते पुत्रः कालादपि चिरादपि" इति। इदन्तु बोध्यम्—"पूर्णे सम्वँत्सरे श्राद्धं षोडशं[2] परिकीर्त्तितम्। तेनैव च सपिण्डत्वं तेनैवाब्दिकमिष्यते" इति हेमाद्रिधृतस्मृतिबलात्सम्वँत्सरे पूर्णे यदि सपिण्डीकरणं क्रियते तदा तेनैव प्रथमाब्दिकत्वसिद्धिरिति न तत्[3] पृथक्कर्त्तव्यं, द्वितीयाद्याब्दिक-न्त्वत्र पक्षेऽपि मृताहे कर्त्तव्यमेव। सम्वँत्सरपूर्त्तौ सपिण्डीकरणमभिधाय "अत ऊर्ध्वं सम्वँत्सरे सम्वँत्सरे प्रेतायान्नं दद्याद्यस्मिन्नहनि प्रेतः स्यात्" इति गोभिलसूत्रात्। "पण्डिता ज्ञानिनो मूर्खाः स्त्रियो वा ब्रह्मचारिणः। मृताहं समतिक्रम्य चाण्डालेष्वभिजायते" इत्यादि प्रागुक्तमरीच्यादि-वचनाच्च। मृताहं समतिक्रम्येत्यस्य मृताहे श्राद्धमकृत्वेत्यर्थस्तेनैव हि तदु-

---

१. अत्र ग्रामपि च 'षोडश' पदं सपिण्डीकरणप्रापकमेवान्यथा सप्तदशत्वा-पत्तेः, 'सपिण्डीकरणान्तानि' 'पूर्णे सम्वंत्सरे श्राद्धं षोडशम्' इत्यादिवचनान्तरविरो-धाच्च। २. प्रेतसपिण्डनम्, षोडशानां पूरणमित्यर्थे हि डडन्तमिदम्पदम्। ३. प्रथमाब्दिकम्।

ल्लङ्घनम् । यदि तु "मुख्यं श्राद्धं मासि मासि अपर्याप्तावृतुम्प्रति । द्वादशाहेन वा कुर्यादेकाहे द्वादशापि वा" "आनन्त्यात्कुलधर्म्माणां पुंसाञ्चैवायुषः क्षयात् । अस्थितेश्च शरीरस्य द्वादशाहः प्रशस्यते" "द्वादशाहेऽथ सर्वाणि संक्षेपेण समापयेत्" इत्यादिभिर्हारीत-व्याघ्रपाद्-कात्यायनादिवचनैस्तत्तज्जात्युक्ताशौचान्ततृतीयदिन एव मासिकादि सपिण्डीकरणान्तं कर्म्मजातं सम्पाद्यते तदा प्रथमाब्दिकमपि वर्षपूर्त्तौ कर्त्तव्यमेव, तथैव मैथिलादि-सकल-शिष्टाचारात् । गोभिलोक्तस्य 'अतऊर्ध्व'-मित्यस्य 'सपिण्डीकरणादूर्ध्व'-मित्यर्थकत्वेन तद्विषयत्वाच्चेति । अत एव प्रतिमासंक्षयतिथौ मासिकानि द्वादश, दिनैकोने षष्ठे मास्यूनषण्मासिकं दिनैकोने द्वादशे मास्यूनवार्षिकं वर्षपूर्त्तौ क्षयतिथौ च सपिण्डीकरणमिति मुख्यं पक्षमाश्रयन्ति गौडादयः, द्वादशाह (अशौचान्ततृतीयदिन) एव सर्वाणि संक्षिप्येति द्वितीयं पक्षं मैथिलाः । एतानि च श्राद्धानि क्रमेणैव कार्याणि नान्यथा, तथा च देवलः-"व्युत्क्रमात्प्रेतश्राद्धानि यो नरो धर्म्ममोहितः । ददाति, नरकं याति पितृभिः सह शाश्वतम्" इति । जाबालोऽपि-"यथाक्रमेण पुत्रेण कार्या प्रेतक्रिया सदा । पतिताऽपतिता वापि एकोद्दिष्टविधानतः" इति । "यथाक्रमेण" अत्र तृतीयासप्तम्योर्बहुलमित्यस्माबाभावः । पतिता = अशौचान्तरादि विघ्नेनासम्पादिता । अपतिता = तदन्या । अमीषां यथाक्रममावश्यकानां षोडशानां श्राद्धानां मध्ये यस्य कस्यचिद् भ्रान्त्या वेतरथा वाऽकरणे अङ्गापूर्वासिद्धौ प्रधानभूतानां तदितरेषां श्राद्धानां प्रधानापूर्वस्याप्यसिद्धेस्तदकृतमात्रं श्राद्धं कर्त्तुमावश्यकम्, तद्विधिवाक्यानुरोधात् । "अवघातनिष्पन्नैरेव तण्डुलैरवान्तरापूर्वद्वारा दर्शपूर्णमासौ परमा (प्रधाना) पूर्वं जनयतो नान्यथा" इति "व्रीहीनवहन्ति" इत्यङ्गवाक्य-कल्पितवत् । न त्वेकस्य कस्य चिदकरणे कृतानामप्यन्येषां पुनरावृत्तिरङ्गानुरोधेन प्रधानाऽऽवृत्तेरयोग्यत्वात् । तदुक्तं छन्दोगपरिशिष्टे "समाप्ते यदि जानीयान्मयैतदयथाकृतम् । तावदेव पुनः कुर्यान्नावृत्तिः सर्वकर्मणः ॥" इति । नावृत्तिः = न पुनः सम्पादनम् । सर्वकर्मणः = साङ्गस्य प्रधानकर्मणः । यदि त्वङ्गकर्मणोऽप्यंशत एवासम्पादनं प्रमादात्तदा तस्यापि पुनरकरणमेव, तदप्युक्तं तत्रैव-"प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः । तदङ्गस्याक्रियायान्तु नावृत्तिर्न च तत्क्रिया ॥"

इति। तदङ्गस्य तदङ्गांशमात्रस्येत्यर्थः, 'तावदेव पुनः कुर्यात्' इति प्रागुक्तवचनानुरोधात्। ततश्च तादृशकिञ्चिदंशवैगुण्य-परिहाराय-"अज्ञानाद् यदि वा मोहात्प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः" इति याज्ञवल्क्यवचनाद्विष्णुस्मृतिरेव प्रायश्चित्तम्। आचारोऽपि, कर्मान्ते—"प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत्। स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः" इति वाक्यपाठेन मैथिलानां तथैव॥

## अथ प्रतिबन्धकाशौचनिर्णयः

जनन-मरण-व्रण-रजोयोगाद्यशौचपातादिना मुख्यकालातिपाते—"देये पितॄणां श्राद्धे वै (तु) अशौचं जायते यदि। तदशौचे व्यतीते तु तेषां श्राद्धं विधीयते॥ शुचीभूतेन दातव्यं या तिथिः प्रतिपद्यते। सा तिथिस्तस्य कर्त्तव्या न त्वन्या वै कदाचन" इति ऋष्यशृङ्गवचनात्तत्तदशौचव्यपगमोत्तरं श्राद्धं कार्यम्। देये-अशौचादिविघ्ने सत्यप्यवश्यं दातव्ये। शुचीभूतेनेत्यनेन "यदैव द्वितीयाशौचादि-विघ्नरहितः सन् शुचिः स्यात्तदैव कार्यं, न तु 'कृष्णपक्षे विशेषतः' इति लघुहारीतवचन-प्रशंसित-कृष्णपक्षैकादश्यादिप्रतीक्षापेक्षयेति सूचितम्। दातव्यमित्यत्र बाहुलकादधिकरणेऽर्हार्थकस्तव्यस्तेन दातुमर्हे मध्याह्नादिकाले व्याप्येति शेषः। या तिथिः शुचीभूतेन = अशौचविनिर्मुक्तेन कर्त्रा प्रतिपद्यते = प्राप्यते सा तिथिस्तस्य = श्राद्धस्य कर्त्तव्या, अन्या = कृष्णपक्षैकादश्यादिस्तु कदाचन=कदापि नेति वचनार्थः। एवञ्च कर्त्तुः शुचीभावाव्यवहितोत्तर-प्राप्तमध्याह्नादिविहितकाल एव तच्छ्राद्धं कर्त्तव्यमिति पर्यवसन्नम्। तथा च देवलः—"एकोद्दिष्टे तु सम्प्राप्ते यदि विघ्नः प्रजायते। मासेऽन्यस्मिंस्तिथौ तस्मिंस्तदा दद्यात्प्रयत्नतः" इति। अत्र 'प्रयत्नत' इत्युक्त्या तत्कालोल्लङ्घनस्य प्रतिषेधः। 'तदा' इत्यनेन च मध्याह्नादिकालः सूचितः। मुख्यकालातिक्रमे दोषमाह बौधायनः-"यो यस्य विहितः कालः कर्म्मणस्तदुपक्रमे। तिथिर्याभिमता सा तु कार्या, नोपक्रमोज्झिता" इति। लौका (गा) क्षिरपि—"गणिताज्ज्ञायते कालो यत्र तिष्ठन्ति देवताः। वरमेकाऽऽहुतिः काले नाकाले लक्षकोटयः" इति। जनन-मरणयोरशौ-

चान्तद्वितीयदिने व्रणे तु 'तद्दिने निर्व्रणीभावे' इति वचनाद् व्रणाव्यपगमे व्रणाधिकरणादिनेऽपि श्राद्धं कार्यम्। "सव्रणः सूतकी सूथी मत्तोन्मत्तरजस्वलाः। मृतबन्धुरबन्धुश्च वर्ज्या अष्टौ स्वकालतः" इति वचनस्याप्यत्रैव तात्पर्यम्। व्रणपदमत्रोपलक्षणं रुधिरस्रावादेरपि—"नाभेरूर्ध्वमधो वापि यदि स्याद्रुधिरस्रवः। तद्दिने वैदिकं कर्म्म कृत्वा तु नरकं व्रजेत्" इति रुधिरस्रावे तद्दिनाधिकरणकवैदिककर्म्मप्रतिषेधस्मरणात्। अत एव सद्यःशौचादावधिकारिणा श्राद्धं सम्पाद्यैव क्षौरकर्म्म क्रियतेऽन्यथारुधिरस्रावसम्भवात्। केचित्तु नाभेरधो व्रणसत्त्वेऽपि श्राद्धकरणे न दोषः "पित्र्यं[1] कर्म्म न कुर्वीत नाभेरूर्ध्वं व्रणो यदि। दैवं[2] तत्रापि कर्त्तव्यं यदि स्यादव्रणः करः" इति वचनादिति वदन्ति। पुराणसमुच्चये तु "कृत्वा तु रुधिरस्रावं न विद्वाञ्छ्राद्धमाचरेत्। एकं द्वे त्रीणि वा किन्तु दिनानि परिवर्जयेत्॥ यथा रजस्वला नारी ह्यशुचिस्त्रिदिनं भवेत्। रक्तस्रावे तथा नृणामशुचित्वं प्रजायते" इत्यनेन विशेष उक्त एतञ्चैतन्मते रक्तस्रावे दिनत्रयमशौचं यद्यप्यायाति तथापि व्यवस्था प्रागुक्तवचनाभ्यामेव कार्या तथैव शिष्टाचारादित्याम्रेडितम्। रजस्वलादिविषये तु प्रपञ्चितम्प्रागेव। वाचस्पतिमिश्राः— 'देये पितृणां श्राद्धे वै' इत्यृष्यश्रृङ्गवचनं क्षयाहनिरूप्यश्राद्धमात्रपरमित्याहुर्व्यवहारस्तु न तथा। यत्तु—"श्राद्धविघ्ने समुत्पन्ने मृताहा (मृताहेऽ) विदिते तथा। एकादश्यां प्रकुर्वीत कृष्णपक्षेविशेषतः" इति लघुहारीतवचनम्, "श्राद्धविघ्ने समुत्पन्ने त्वन्तरामृतसूतके। एकादश्यां प्रकुर्वीत कृष्णपक्षे विशेषतः" इति राजमार्त्तण्डवचनञ्च तदशौचव्यतिरिक्तमृताहश्राद्धप्रतिबन्धकीभूत-देशविप्लव-प्रमाद--मार्गगमन—राजाज्ञादिविषयकं मृताहाज्ञानमात्रविषयकं वा, बहुवाक्यानुरोधेनैतद्वाक्यसङ्कोचस्याऽऽवश्यकत्वात्। अत्र 'कृष्णपक्षे विशेषतः' इत्युक्त्या कृष्णपक्षैकादश्यसम्भवे शुक्लपक्षैकादश्यामपि श्राद्धं कार्यमित्यायाति। प्रचेतसा त्वत्र—"अपरिज्ञाते मृतेऽहनि अमावास्यायां श्रवणदिवसे वा" इत्युक्तम्। अत्र 'मृताहनिमित्तकं श्राद्धं कार्यम्' इति शेषः। अमावास्यायामिति मरणमाससम्बन्धिन्यामित्यर्थः। "प्रवासदिवसे देयं तन्मासेन्दुक्षयेपि वा" इति स्मृतेः। श्रवणदिवसश्च यस्मिन् देशान्तरमरणं श्रूयते

---

१. पितृसम्बन्धि। 'वाय्वृतुपित्रुषसो यत्' इति यदत्र। २. देवसम्बन्धि।

सः। षट्त्रिंशन्मतेनापि—"मासिके चाब्दिके त्वह्नि सम्प्राप्ते मृतसूतके। वदन्ति शुद्धौ तत्कार्यं दर्शे चापि विचक्षणाः॥ इति। स्मृत्यन्तरेणापि—"श्राद्धविघ्ने समुत्पन्ने मृतस्याविदिते दिने। अमावास्यां प्रकुर्वीत वदन्त्येके मनीषिणः॥" इति। अमावास्याम् = अमावास्यायाम्। यद्वा कर्मैवेदम्। अत्र 'वदन्त्येके' इत्युक्त्या, प्रोक्तषट्त्रिंशन्मतवचने 'दर्शेचापि' इत्यपि-शब्दोक्त्या च प्रागुक्तलघुहारीतादिवाक्योक्तैकादशीपरिग्रहस्ततश्च मृताहा-परिज्ञाने कृष्णपक्षैकादश्यां तदसम्भवे शुक्लपक्षैकादश्याममावास्यायां श्रवणदिवसे वा श्राद्धं कार्यमिति निर्गलितमिति केचिदूचुः। वस्तुतस्तु—"अन्तरामृतसूतके" इति प्रागुक्ते राजमार्त्तण्डवचने 'सम्प्राप्ते मृतसूतके' इति षट्त्रिंशन्मुनिवचने चाशौचसम्पातमुपलक्ष्यैवैकादश्यमावास्ययोरुल्ले-खादशौचेऽव्यतिरिक्तविषयताकल्पनमेषामसङ्गतमेवेत्येवञ्च प्रागुक्तवचनेषु यत्र यत्र 'श्राद्धविघ्न' पदं 'विघ्न' पदं वा तत्र सर्वत्र तदशौचसम्पात-देश-विप्लव-प्रमाद-मार्गगमन-राजाज्ञादीनां सर्वेषामेव मृताहश्राद्धप्रतिबन्ध-कानां बोधकमित्यवश्यं मन्तव्यं सङ्कोचे बीजाभावात्। एते चैकादश्यमा-वास्ये विघ्ननिमित्ताव्यवहिते एव ग्राह्ये 'शुचीभूतेन' इति प्रागुक्तर्ष्यशृङ्ग-वचनात्। तथा च श्राद्धविघ्ने षोडश श्राद्धानि विघ्ननिवृत्त्यव्यवहितोत्तर-वर्त्तिन्यां यस्यां कस्याञ्चित्तिथौ कार्याणि, मृताहापरिज्ञाने तु मृतश्रवणतिथौ, श्रवणतिथेरज्ञाने श्रवणमासस्यैकादश्यामव्यवहितायाममावास्यायां वा, श्रवण-मासस्याप्यज्ञाने गयायां कार्याणि, "पतितस्यापि कर्त्तव्यं गयायां पिण्डपातनम्" इत्युक्तेः। वार्षिकमेकोद्दिष्टन्तु विघ्ननिवृत्त्यव्यवहितोत्तर-वर्त्तिन्यां यस्यां कस्यां चित्तिथावेकादश्यां वा तत्रापि सति सम्भवे कृष्ण-पक्षैकादश्यां "कृष्णपक्षे विशेषतः" इति प्रागुक्तराजमार्त्तण्डधृतवचनात्। मृतस्य मासाज्ञाने दिनमात्रज्ञाने भविष्यपुराणम् "दिनमेव तु जानाति मासं नैव तु यो नरः। मार्गशीर्षे तथा भाद्रे माघे वा तद्दिनं भवेत्" इति। एषु मासविशेषो मृतनिश्चितदिनसन्निहित एव ग्राह्यः। मृताह-मासयोर-ज्ञाने तु "दिनमासौ न विज्ञातौ मरणस्य यदा पुनः। प्रस्थानदिनमासौ तु ग्राह्यौ पूर्वोक्तया दिशा" इति बृहस्पतिस्मृतेर्व्यवस्था। पूर्वोक्तयेति "न ज्ञायते मृताहश्चेत्प्रोषिते संस्थिते सति। मासश्चेत्प्रतिविज्ञातस्तद्दर्शे स्यान्मृ-तेऽहनि" इत्यनेन बृहस्पतिना स्वयमेवोक्तेन दिनमासान्यतराज्ञानदशायां

यथा निर्णयः कृतस्तथेत्यर्थः । प्रोषिते = प्रवासं गते । संस्थिते—मृते । ततश्च मरणमासदिनयोर्ज्ञाने तत्र, मासमात्रज्ञाने तन्मासामावास्यायां, मरणतिथिमात्रज्ञाने तच्छ्रवणसन्निहितस्य प्रोक्तमार्गशीर्षादेस्तत्तिथौ, मरणतिथेरप्यज्ञाने यस्यां तिथौ मरणवार्त्ता श्रूयते तस्यामेव, तत्तिथेरपि विस्मरणे तन्मासीयैकादश्यामव्यवहितायाममावास्यायां वा कार्यमेकोद्दिष्टं, श्रवणमासस्यापि विस्मरणे त्वेकोद्दिष्टं नैव कार्यं प्रमाणाभावात् । प्रागुक्तबृहस्पतिवचने 'मृताहनि' इत्यस्य मृताहाधिकरणकं कर्त्तव्यमेकोद्दिष्टमित्यर्थः शेषपूरणेन । यत्तु—मरणमासस्यापि विस्मरणे निष्प्रमाणत्वहेतुकं वाचस्पतिमिश्रोक्तमेकोद्दिष्टाकर्त्तव्यत्वं, "मृतस्याहो न जानाति मासं वापि कथञ्चन । तेन कार्यममावास्यां श्राद्धं माघेऽथ मार्गके" इति प्रभासखण्डवचनस्थ 'कथञ्चन' पदस्वरसविरुद्धत्वादयुक्तं ब्रूते यत्तीयो रघुनन्दनस्तदतितुच्छम्, 'मृतस्याहो न जानाती'ति प्रभासखण्डोक्तवचनस्य "गतस्य न भवेद्वार्त्ता यस्य द्वादशवार्षिकी । प्रेतावधारणं तस्य कर्त्तव्यं सुतबान्धवैः ।। यन्मासि यदहर्यातस्तन्मासि तदहः क्रिया । दिनाज्ञाने कुहूस्तस्य आषाढस्याथ वा कुहूः ।। इति यमोक्तविषयपरत्वेन साम्वत्सरिकैकोद्दिष्टपरत्वायोगात् । स्वयमपि तत्प्रकरण एव तदुद्धरणात्तद्वचनस्य देशान्तराऽऽदृतत्वेऽपि मैथिलैरनादरणाच्च 'कथञ्चने'त्यस्य मरणसम्बन्धिदिनमासयोरज्ञान एवान्वयेन केनापि रूपेण मृतस्य दिनं मासं वा न जानातीत्येवमेव वचनस्यार्थश्चेत्यास्तां विस्तरः ।

## अथ सपिण्डीकरणनिर्णयः

भविष्यपुराणे—"गन्धोदकतिलैर्युक्तं कुर्यात्पात्रचतुष्टयम् । अर्घ्यार्थं पितृपात्रेषु प्रेतपात्रं प्रसेचयेत् ।। ये समाना इति द्वाभ्यामेतज्ज्ञेयं सपिण्डनम् । नित्येन तुल्यं शेषं स्यादेकोद्दिष्टं स्त्रिया अपि" इति । ये समाना इतीति 'ये समानाः समनसः पितरो यमराज्ये' इति, 'ये समानाः समनसो जीवाजीवेषु' इति च मन्त्राभ्यामित्यर्थः । नित्येन = आवश्यकेन पार्वणांशे पार्वणेनैकोद्दिष्टांश एकोद्दिष्टेनेति यावत् । सपिण्डीकरणस्य नरसिंहाकारवत्तदुभयात्मकत्वात् । 'एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि' इति याज्ञवल्क्यवचनैकवाक्यताऽनुरोधादेकोद्दिष्टपदञ्च सपिण्डीकरणैकोद्दिष्टोभ-

यपरम्, एकोद्दिष्टधर्मभाक्त्वात्सपिण्डीकरणस्य । तेन क्रिया एकोद्दिष्टं सपिण्डीकरणञ्चेत्युभयात्मकमेव श्राद्धं कर्त्तव्यं न तु तदितरत्पार्वणादीति निर्गलितम् । कर्त्तृत्वनियमपरमिदमिति बहवः । शातातपः" निरूप्य चतुरः पिण्डान् पिण्डदः प्रतिनामतः । ये समाना इति द्वाभ्यामाद्यन्तु विभजेत्त्रिधा ॥ एष एव विधिः पूर्वमर्घ्यपात्रचतुष्टये" इति । इत्थमेव याज्ञवल्क्योऽपि । ये समाना इति मन्त्रद्वयपाठश्चार्घ्यदानकाले पञ्चकृत्वः, पिण्डच्छेदनतन्मेलनकाले च पञ्चकृत्व इति दशावृत्तिः । तत्र क्रममरणे पितृ-पितामहादिक्रमेणैव पिण्डमेलनं कर्त्तव्यम्—"पापिष्ठमपि शुद्धेन शुद्धं पापकृतापि वा । पितामहेन पितरं संस्कुर्यादिति निश्चयः ॥" इति च्छन्दोगपरिशिष्टात् । व्युत्क्रममरणे तु प्राह मनुः—"पिता यस्य निवृत्तः स्याज्जीवेच्चापि पितामहः । पितुः स नाम संकीर्त्य कीर्त्तयेत्प्रपितामहम् ॥" इति । अतस्तादृशस्थले पितृपिण्डं प्रपितामहवृद्धप्रपितामहपिण्डाभ्यां मेलयेत् । तथा च ब्रह्मपुराणम्—"मृते पितरि यस्याथ विद्यते च पितामहः । तेन देयास्त्रयः पिण्डाः प्रपितामहपूर्वकाः ॥ तेभ्यश्च पैतृकः पिण्डो नियोक्तव्यस्तु पूर्ववत् ।" इति । एतेन पितामहादिषु यो यो जीवति तं तं परित्यज्य सपिण्डीकरणं कार्यमित्याथाति । एष एव मातरि मृतायां पितामह्याश्च जीवनेऽपि क्रमो ज्ञेयस्तदप्युक्तं तत्रैव—"मातर्यथ मृतायाञ्च विद्यते च पितामही । प्रपितामहीपूर्वस्तु कार्यस्तत्राप्ययं विधिः ॥" इति । स्त्रियाः सपिण्डनं पत्यौ मृते तेनैव सह कार्यं तद्द्वारकञ्च श्वशुरप्रश्वशुरा ( कर्तृ पितामह प्रपितामहा ) भ्यां, पत्यौ जीवति तु श्वश्रा ( कर्त्तृ-पितामह्या ) दिभिरेव—"स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः । एकत्वं सा गता यस्माच्चरुमन्त्राहुति-

---

१. मृतः । एतद्वचनम्, "ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत् । पिता यस्य तु वृत्तः स्याज्जीवेच्चापि पितामहः" एतद्वचनञ्च पितृशब्दप्रयोगनियमार्थं, स चेत्थम्—'ध्रियमाणे = जीवति पितरि पितुः पितामहप्रपितामह-वृद्धप्रपितामहेभ्यः, पितामहे जीवति तत्पित्रादिभ्य इति । अत एव मनुवचने 'पितुः स नाम संकीर्त्य कीर्त्तयेत्प्रपितामहम्, इत्यत्राऽऽद्यन्तनिर्देशः कृतोऽस्ति । तेन पितामहस्य प्रपितामहस्य वाऽऽदित्वं वृद्धप्रपितामहस्य तत्पितुर्वान्तत्वमिति न ।

त्रतैः ॥ तस्मिन् सति सुताः कुर्युः पितामह्या सहैव तु । तस्याञ्चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः ॥" "मातुः सपिण्डीकरणं पितामह्या सहोदितम् । यथोक्तेनैव कल्पेन पुत्रिकाया न चेत्सुतः ॥" "पितामह्यादिभिः सार्द्धं मातरन्तु सपिण्डयेत् । पितरि ध्रियमाणे तु तेनैवोपरते सति ॥" इत्यादि हारीत—कात्यायन-लौगाक्षिप्रभृतिवचनेभ्यः । भर्त्रा=पत्या श्वशुरेण प्रश्वशुरेण च । पितामह्या = पितामही-प्रपितामही—वृद्धप्रपितामहीभिः । अत एव द्वितीयवचने 'पितामह्यादिभिरिति बहुवचनम् । [ पितरि ध्रियमाणे=जीवति सति पितामह्यादिभिः सार्द्धं मातरं सपिण्डयेत्, पितर्युपरते=मृतेसति, तेन=पित्रा सहैव ] इति द्वितीयवचनार्थः । पितामह्यादिभिः सह मातुः सपिण्डीकरणे च मन्त्रस्थलिङ्गविरोधात्सामगेन पठनीयो "ये चात्र त्वानुयाँश्च त्वमनु तस्मै" इति मन्त्रो नैव पाठ्य इति केचित् । वस्तुतस्तु लिङ्गार्थासमवेतत्वेऽपि प्रकृत्यर्थसमवेतत्वात् 'ये समानाः' इति मन्त्रद्वयस्येव 'ये चात्रत्वे'—ति मन्त्रस्यापि पाठ उचितः "अर्घ्यार्थं पितृ-पात्रेषु प्रेतपात्रं प्रसेचयेत् । ये समाना इति द्वाभ्यां शेषं पूर्ववदाचरेत् ॥ एतत्सपिण्डीकरणमेकोद्दिष्टं स्त्रिया अपि' इति याज्ञवल्क्येन पार्वणैकोद्दिष्टविकृतिभूतपुरुषसपिण्डनेऽतिदेशात्तद्विकृतिभूतस्त्रीसपिण्डनेऽपि तथातिदेशस्य सिद्धत्वात्ततश्च "मातामहानामप्येवं श्राद्धं कुर्याद्विचक्षणः । मन्त्रोहेन यथान्यायं शेषाणां मन्त्रवर्जितम् ॥ इति वचनं प्रकृत्यहयोग्यमन्त्रवर्जनपरं न तु लिङ्गोहयोग्यमन्त्रवर्जनपरमित्यवधेयम् । पुत्रिकापुत्रेण तु मातुः सपिण्डनं मातामहे जीवति मातामह्यादिभिः सह कार्यम्—"पितुः पितामहे यद्वत्पूर्णे सम्वँत्सरे सुतैः । मातुर्मातामहे तद्वदेषा कार्या सपिण्डता" इत्युशनोवचनात् । अस्यार्थः—यथौरसादिभिः सुतैः पितुर्मातुश्च पितामहादिषु त्रिषु सपिण्डता क्रियते यथा पुत्रिका—पुत्रेण मातामहादिषु त्रिषु मातुरिति । "आदिशेत्प्रथमे पिण्डे मातरं पुत्रिकासुतः। द्वितीये पितरं तस्यास्तृतीये च पितामहम्" इति यज्ञपार्श्ववचनात् । अत्र 'तस्या'—इत्यस्य पितामहेऽप्यन्वयो देहलीदीपकन्यायात्तेन प्रागुक्तोशनोवचनेन सहैकवाक्यत्वमेव न विरोधः । पतिते प्रव्रजिते वा पितरि मृते मातुः सपिण्डीकरणं पितामह्यादिभिरेव, न पितामहादिभिः, "स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं स्त्रियाः । एकत्वं सा गता यस्माच्चरुमन्त्राऽऽहुति-

क्तेः ॥ तस्मिन् सति सुताः कुर्युः पितामह्या सहैव तु" इति गार्ग्यवचनोक्तस्य 'तस्मिन् सती' त्यस्य श्राद्धानर्हभर्तुरुपलक्षणत्वादत एव लघुहारीतः "तस्याश्चैव तु जीवन्त्यां तस्याः श्वश्र्वेति निश्चयः" इत्यनेन श्वश्रूजीवने प्रश्वश्र्वा सह सपिण्डीकरणकर्त्तव्यतां ब्रूते न तु श्वशुरेणेति केचित्। बृहस्पतिः—"स्वेन भर्त्रा सह श्राद्धं माता भुंक्ते स्वधामयम्। मातामही च तेनैव तथैव प्रपितामही ॥ भर्तृ-गोत्रेण दातव्यं स्त्रीणां पिण्डोदकं सुतैः" इति। न चेदं—संस्थितायान्तु भार्यायां सपिण्डीकरणान्तिके। पैतृकं भजते गोत्रमूर्ध्वन्तु पितृ-पैतृकम्' इति शातातप—वचन-विरुद्धमिति वाच्यम्, अष्टविध—विवाहेषु ब्राह्म-दैवतार्ष-प्राजापत्य-विधि-विवाहिताया भर्तृगोत्रेण, गान्धर्वासुर-राक्षस-पैशाच-विधि-विवाहितायाः पितृगोत्रेण सपिण्डनं कार्यं तदनन्तर-कृत्यञ्चास्या अपि भर्त्तृ-गोत्रेणैवेति-विषय-व्यवस्थानात्। अत एव ब्राह्मादि-चतुष्टयान्यतम-विधि-विवाहिताया-अपि चतुर्थ्यभ्यन्तर-मरणे पितृ-गोत्रेणैव पत्या क्रियमाणं श्राद्धं सङ्गच्छते—"चतुर्थी-होममात्रेण त्वङ्मांस रुधिरास्थिभिः। भर्त्रा संयुज्यते नारी तद्गोत्रा तेन सा भवेत्" इति-बृहस्पति-वचनात्। सांवत्सरिकादीनि त्वस्या अपि पत्या स्वगोत्रेणैव कर्त्तव्यानि। इदमत्र बोध्यम्-पत्यादिभिः सह स्त्रियाः सपिण्डनं तदीय-श्वशुर (कर्त्तृ-पितामह)-प्रश्वशुर (कर्त्तृ-प्रपितामह) योः पिण्डौ कुशैराच्छाद्य करणीयम्—"सा गता हि मृतैकत्वं कुशैरन्तरयन् पितॄन्। श्वशुरस्याग्रतो यस्माच्छिरःप्रच्छादनक्रिया॥ पुत्रैर्दर्भेण सा कार्या मातुरभ्युदयार्थिभिः" इति गार्ग्य-वचनादिति। एतच्च कुशप्रच्छादनं मैथिलाऽऽचार-विरुद्धमपि मम युक्तम्प्रतिभाति। अत्र वचने सेत्यस्य विशेषणत्वेऽप्यन्तरयन्निति पुंस्त्वनिर्देश आर्षवचनस्य च्छान्दसत्वेन लिङ्ग-व्यत्ययात्। तथा च वैयाकरणाः—"सुप्तिङुपग्रहलिङ्गनराणां कालहलच्-स्वरकर्त्तृयङाञ्च। व्यत्ययमिच्छति शास्त्रकृदेषां सोऽपि च सिध्यति बाहुलकेन" इति। उपग्रहः = परस्मैपदात्मनेपदे। नरः=प्रथमादिपुरुषः। काल =कालार्थकः प्रत्ययः। स्वर-उदात्तादिः। कर्त्तृपदं कारकमात्रबोधकं लाक्षणिकत्वात्ततश्च तद्वाचि-कृत्तद्धितव्यत्ययः फलति। यङिति यङो यशब्दादारभ्य 'लिङ्याशिष्यङ्' इति ङकारेण प्रत्याहारस्तद्व्यत्ययो व्यति-

क्स्याव्स्थानम् । शास्त्रकृत = पाणिनिः, सोऽपि = व्यत्ययोऽपि । शिष्टं स्पष्टम् । पुरुषस्य सपिण्डनं, पुत्राभावेऽन्येनाप्यधिकारिणा कर्त्तव्यं, स्त्रियास्त्वौरस–सपत्नीपुत्रयोरभावे पत्या, पत्युरभावे च तन्नास्त्येव । "पुत्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्रादयोऽपि मे" "सपिण्डीकरणं तासां पुत्राभावे न विद्यते" "एकस्यैव तु कर्त्तव्यमपुत्रायाश्च योषितः" "अपुत्रायां मृतायां तु पतिः कुर्यात्सपिण्डताम् । श्वश्र्वादिभिः सहैवास्याः सपिण्डीकरणं स्त्रियाः" "अपुत्रायां मृतायान्तु पतिः कुर्यात्सपिण्डनम् । पत्युः पुत्रस्य चाभावे पुनरस्यास्तु योषितः ॥ सपिण्डीकरणं नास्ति नारदो मुनिरब्रवीत्" "पुत्राभावे पतिः कुर्यात्पत्यभावे च नेष्यते" "पत्या चैकेन कर्त्तव्यं सपिण्डीकरणं स्त्रियाः । सा मृताऽपि हि तेनैक्यं गता मन्त्राहुतिव्रतैः" इति लघुहारीत-मार्कण्डेय पुराण–च्छन्दोगपरिशिष्ट–पैठीनसि–गोभिल–यमादिवचनेभ्यः । पुत्रेणैवेत्यत्र पुत्रपदं "बह्वीनामेकपत्नीनामेका चेत्पुत्रिणी भवेत् । सर्वास्तेनैव पुत्रेण प्राह पुत्रवतीर्म्मनुः" इति मनुवचनातिदिष्टपुत्रत्वस्य सपत्नीपुत्रस्यापि ग्राहकमजहत्स्वार्थलक्षणायोगात् । एवञ्च 'पुत्राभावे' 'अपुत्रायाः' 'अपुत्रायाम्' इत्यादिपर्युदासाप्राप्त्या सपत्नीपुत्रस्याप्यधिकारो निर्बाधः । एतेन 'पुत्रेणैवे'–ति हारीतवचनस्थैवकारानुरोधेनौरसपुत्राभावे सपत्नीपुत्रसत्त्वेऽपि स्त्रियाः सपिण्डनाभावं ब्रुवन्तो मैथिलाभिमतञ्च तत्सद्भावमधिक्षिपन्तः के चन प्रेक्षावन्तोऽपि विक्षिप्ता एव । प्रोक्तमनु–सम्मतस्य सपत्नीपुत्रत्वातिदेशस्यान्यथा निरवकाशत्वात् । यदपि प्रोक्तवचनस्थपुत्राभावादिपदार्थस्वरसादसमर्थस्यापि ( बालकादेः ) पुत्रस्य सद्भावदशायां स्त्रिया अन्यकर्त्तृकमपि सपिण्डनं भवत्येवेत्येवं त एव व्याचख्युस्तदपि स्थवीयः, प्रागुक्तलघुहारीतवचनस्थ–'पुत्रेणैवे'-त्येवकारस्वरसस्य साक्षाद्विरोधात् । एवञ्च तत्तद्वचनस्थस्य 'पुत्राभावे' 'अपुत्रायाः' 'अपुत्रायाम्' इत्यादेः श्राद्धकर्त्तृत्वयोग्यपुत्राभावपरत्वमित्यगत्या मन्तव्यम् । यत्तु—"स्वेन भर्त्रा सहैवास्याः सपिण्डीकरणं भवेत्" "तेनैवोपरते सति" इत्यादिष्वेवकारैकवचनयोरनुरोधात्पत्यावुपरते सति तेनैवैकेन सह स्त्रियाः सपिण्डनं न तु श्वशुर–प्रश्वशुराभ्यामपीति के चिदूचिरे तदचारु, कल्पतरु-मदनरत्न-माधवादिभिस्तत्रत्यपतिपदस्यपत्यादित्रिकपरत्वेन व्याख्या-

तत्वादेवकारस्य श्वश्र्वादिव्यवच्छेदकतया गतार्थत्वाच्च। अत एव—"सा गता हि मृतैकत्वं कुशैरन्तरयन् पितॄन्। श्वशुरस्याग्रतो यस्मांच्छिरःप्रच्छादनक्रिया॥ पुत्रैर्धर्मेण सा कार्या मातुरभ्युदयार्थिभिः" इति प्रागुक्तं गार्ग्यवचनं सावकाशम्। एवं स्थितौ—"अपुत्रा ये मृताः केचित्पुरुषा वा स्त्रियोऽपि वा। तेषां सपिण्डनाभावादेकोद्दिष्टं, न पार्वणम्" इत्यापस्तम्बवचनम्, "अपुत्रस्य परेतस्य नैव कुर्यात्सपिण्डताम्" इति वचनान्तरञ्च मैथिलाऽऽचार-हेयत्वादनादरणीयमेव। अत एव रेणुकायाम्—"भ्राता वा भ्रातृ-पुत्रो वा सपिण्डः शिष्य एव वा। सपिण्डीकरणं कुर्यात्पुत्रहीने मृते सति" इति, स्मृत्यर्थसारे—"केचित्सर्वत्र सपिण्डनमाहुः" इति चोक्तं सङ्गच्छते। यत्तु "पितुः पितामहे यद्वत्पूर्णे सँव्वत्सरे सुतैः। मातुर्मातामहे तद्वदेषा कार्या सपिण्डता" इत्युशनसोक्तं तदासुरादिविवाहोत्पन्नपुत्र-पुत्रिकापुत्रादिविषयकम्। अन्वारोहणे तु स्वपित्रा सहैव सर्वोऽपि पुत्रो मातुः सपिण्डीकरणं कुर्यादिति समाचारः। एतच्च सपिण्डीकरणं शूद्राणामपि मन्त्रवर्जं कार्यम्, "एवं सपिण्डीकरणं मन्त्रवर्ज्यं शूद्राणां द्वादशेऽहनि" इति विष्णुस्मृतेः। द्वादशेऽहनीत्यस्याशौचान्ततृतीयेऽहनीत्यर्थः। अत्र सर्वत्र 'सपिण्डीकरण-पदमुद्भिदा यजेतेत्यादावुद्भिदादिपदवत्कर्म्मनामधेयं, कर्म्म च दक्षिणादानेन समाप्यत-इति दक्षिणादानवाक्य-पर्यन्तं प्रेत-पद-प्रयोगः। "सपिण्डीकरणं यावत्प्रेतः प्रेत इति स्मृतः। सपिण्डीकरणादूर्ध्वं प्रेतः शर्म्मादिभाग्भवेत्" "प्रेतलोके तु वसतिर्नृणां वर्षं प्रकीर्तिता" "सपिण्डीकरणान्तानि प्रेतश्राद्धानि" इत्यादीनां प्रागुक्तवचनानामपीहैव तात्पर्यादिति मैथिलाऽऽचारसिद्धः पन्थाः॥ पित्रोर्मरणोत्तरं सँव्वत्सरपूर्त्ति यावद्दैव-पितृ-कर्मसु कर्त्तुर्नाधिकारः—"प्रमीतौ पितरौ यस्य देहस्तस्याशुचिर्भवेत्। नापि दैवं न पित्र्यं स्याद्यावत्पूर्णो न वत्सरः" इति स्मरणादितीह बोध्यम्॥

---

१. जीवितावस्थायामिति शेषः। २. परा-पूर्वकादिणः क्ते रूपमिदम्।
३. 'सर्वे वा स्युर्दशाहिनः' इति तात्पर्येण तु वचने द्वादशाहपदम्।
४. मातापितरौ।

## अथ पार्वणवेलादिनिर्णयः

तत्र यद्यपि तावत्पर्वणोरमावास्यापूर्णिमयो[1]र्भवमित्येवं योगमर्यादया, 'दर्शश्राद्धन्तु यत्प्रोक्तं पार्वणं तत्प्रकीर्त्तितम्' इति शातातपवचनबलेन च पार्वणं शक्यते वक्तुं तथाप्यजहल्लक्षणया[2] पितृ-पितामहादिपुरुषषट्कमुद्दिश्य क्रियमाणं श्राद्धमात्रं गृह्यते, 'त्रीनुद्दिश्य तु यच्छ्राद्धं पार्वणं मुनयो विदुः' इति प्रागुक्तकल्पवस्मरणात्। एवञ्च प्रतिपदाद्यमावास्या-पूर्णिमान्ते यस्मिन् कस्मिन्नपि तिथौ ग्रहणादौ संक्रान्त्यादौ तीर्थादौ वर्षे वर्षे नवोदकापरपक्ष-नवान्नादिनिमित्तके वा पित्रादिपुरुषषट्कमुद्दिश्य क्रियमाणं कर्म्म पार्वणमिति निष्पन्नम्। ननु 'त्रीनुद्दिश्य तु यच्छ्राद्धं पार्वणम्' इत्युक्त-कल्पवचने पित्रादीनां त्रिकमेव पार्वणे नियमितमिति कथं षट्कमुच्यत इति चेन्न, "पितरो यत्र पूज्यन्ते तत्र मातामहा अपि" इति धौम्यवचनात्, बहुवचनेन च प्रमातामह-वृद्धप्रमातामहयोरपि संग्रहात्। "मातुः पितर-मारभ्य त्रयो मातामहादयः। तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः" इति मरीचिना कण्ठत एवोक्तेश्च, एतस्य कालाः पश्चान्निरूपयिष्यन्ते, ताव-द्वेला निरूप्यते तत्र विष्णुधर्मोत्तरीये—"व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" इति स्मृतेः श्राद्धेऽ-स्तगामितिथिलाभे तस्यैवादरः। घटिका = मुहूर्त्तः। दण्डमात्रमित्यन्ये। अथात्र विशेषमाह—मत्स्यपुराणम्—"ऊर्ध्वं मुहूर्त्तात्कुतपाद्यन्मुहूर्तचतुष्टयम्। मुहूर्त्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते" इति। एतेन पञ्चदशसु रुद्रश्वेतादि-ष्वह्नोमुहूर्तेषु मुहूर्त्तदशकं श्राद्धार्हं, प्रथममुहूर्त्तद्वयं सायाह्नश्चेति मुहूर्त्तपञ्चकं श्राद्धानर्हमित्यायातम्। मनुः—"रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा। सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" इति। अचिरोदिते =

---

१. केचित्तु "पौर्णमासीषु सर्वासु निषिद्धं पिण्डपातनम्। वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा" इति गार्ग्यवचनमाद्रियमाणाः पौर्णमासीषु भाद्रीयातिरिक्तासु पार्वणं नानुमन्यन्ते। २. वस्तुतस्तु "चतुर्दश्यष्टमी षष्ठी अमावास्याथ पूर्णिमा। पर्वा-ण्येतानि राजेन्द्र रविसंक्रान्तिरेव च" इति विष्णुपुराणवचनादमावास्यापूर्णिमातिरि-क्तानामपि पर्वत्वमिति पार्वणपदस्यामावास्या-पूर्णिमातिरिक्तेषु विहितकालेषु सर्वत्र नोचिता लक्षणेति सुधीभिर्विचार्यम्।

अचिरमुहूर्त्तद्वये। अत्र च 'रात्रौ श्राद्धं ने'-ति नञ् न प्रसज्यप्रतिषेधीयो-वाक्यभेदाद्यापत्तेः, किन्तु 'नानुयाजेषु'[1] इत्यादिवत्पर्युदासस्ततश्च रात्र्या-दिव्यतिरिक्ते श्राद्धविधिर्वाक्यार्थः। विष्णुः—"सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः। तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्" इति। श्रूयते च शतपथे—"पूर्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणां तस्मादपराह्णे ददति" इति। अत्र पितॄणामिति बहुवचनश्रुत्या बहुपितृकश्राद्धग्रहणात्पार्वणा एवापराह्णादरस्ततश्चास्य कुतप आरम्भ-कालोऽपराह्णश्च कर्म्मकालो मुख्यः। "ग्रहादिव्यतिरिक्तस्य प्रक्रमे कुतपः स्मृतः" इति शिववाक्यात्। "ऊर्ध्वं मुहूर्त्तात्कुतपाद्यन्मुहूर्त्तचतुष्ट-यम्। मुहूर्त्तपञ्चकं ह्येतत्स्वधाभवनमिष्यते" इति प्राक्तमत्स्य-वायुपुराणाभ्याञ्च। शिववाक्ये ग्रहादीत्यस्य ग्रहणादीत्यर्थः। अप-राह्णासम्भवे तु मध्याह्नादिरपि। ब्रह्मपुराणम्—"पूर्वाह्णे मातृकं श्राद्ध-मपराह्णे तु पैतृकम्। एकोद्दिष्टं तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्" इति। मातृकम्=अन्वष्टकाश्राद्धं तत्पूर्वाह्णे-सङ्गवरूपे, प्रातःपदस्य पृथगुपादा-नात्, 'ग्रहादिव्यतिरिक्तस्ये'-त्युक्तशिववाक्ये मातृश्राद्धस्याप्यादिपदग्राह्य-त्वात्। सङ्गवश्च—"प्रातःकाला मुहूर्त्तांस्त्रीन् सङ्गवस्तावदेव तु" इति यमवचनोक्त इह तु तृतीयमुहूर्त्तो ग्राह्यः प्रातर्मुहूर्त्तद्वयस्य श्राद्धानर्हत्वात्। पैतृकं=पितॄणां श्राद्धं तदपराह्णे। एकोद्दिष्टम्=आद्यश्राद्धादि तन्मध्याह्ने-कुतप-रौहिणसमये। वृद्धिनिमित्तकम्=आभ्युदयिकं तत्प्रातः-प्रातःकालिके तृतीयमुहूर्त्त इत्यर्थः, 'सूर्ये चैवाचिरोदिते' इति प्रतिषेधात्, 'प्रातः काले तु न श्राद्धं प्रकुर्वीत द्विजोत्तमः' इति शिव-राघव-संवादाच्च। 'पूर्वाह्णे दैविकं श्राद्धं कार्यमभ्युदयार्थिना" इति शातातपवचने पूर्वाह्णपदञ्च प्रातःकालिक-तृतीयमुहूर्त्तपरमेवेत्यविरोधः। अयञ्चापराह्णादिविधिः प्रशंसापरो न तु नियमपरः। अपराह्णे पितॄणां तु तत्र दानं विशिष्यते' इति शातातपवच-

---

१. 'यजतिषु येयजामहं करोति नानुयाजेषु' इति श्रुतिवाक्ये एकवाक्यतानुरोधात्, प्राप्तबाधादिदोषत्रयभयाच्चासमस्तोऽपि नञ् 'अनुयाजभिन्नेषु यजतिषु येयजामहं करोति' इत्येवंरीत्या पर्युदासार्थको यथा दृश्यते तथेति भावः। अयमेव 'तत्रैकवाक्यता पर्युदासन्यायेने'-त्यादिना परिभाषेन्दुशेखरादावुक्तः पर्युदासन्यायः। यजतिषु = यागेषु।

नेन, "यथा चैवापरः पक्षः पूर्वपक्षाद्विशिष्यते । तथा श्राद्धस्य पूर्वाह्णादपराह्णो विशिष्यते" इति मनुवचनेन, "अपरपक्षस्यापराह्णः श्रेयान्" इत्यापस्तम्बवचनेन, "अपराह्णः स्वयम्भुवा" इति "यस्यां सन्ध्यागतः सोमो मृडालमिव दृश्यते । अपराह्णे तु या तस्यां पिण्डानां करणं ध्रुवम्" इति च हारीतवचनेन चापराह्णप्राशस्त्यस्यैव कण्ठतउक्तेः, स्वस्वग्रन्थे सिद्धवल्लिखितवतां प्रतिहस्तकवर्द्धमानादीनां तथैव सिद्धान्ताच्चेत्येवञ्च सति सम्भवेऽपराह्ण एवादर्त्तव्योऽन्यथा गौणकालेऽपि पार्वणं कार्यमिति सिद्धम् । सायङ्कालस्तु 'राक्षसी नाम सा वेला गर्हिता सर्वकर्म्मसु' इत्यादिस्मृतिविरोधादनादरणीय एव । यस्तु "दिनान्ते पञ्चनाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः" इति स्मृत्या सायाह्नस्य विधिः स "सायाह्नस्त्रिमुहूर्त्तः स्याच्छ्राद्धं तत्र न कारयेत् । राक्षसी नाम सा वेला गर्हिता सर्वकर्म्मसु" इति प्रागुक्तयमवचनेन, "रात्रौ श्राद्धं न कुर्वीत राक्षसी कीर्त्तिता हि सा । सन्ध्ययोरुभयोश्चैव सूर्ये चैवाचिरोदिते" इति प्रागुक्तमनुवचनेन, "रात्रौ श्राद्धं न कुर्वीत राहोरन्यत्र दर्शनात् । सूर्योदयमुहूर्त्ते च सन्ध्ययोरुभयोस्तथा" इति शातातपवचनेन, "उपसन्ध्यं न कुर्वीत पितृ-पूजां कथञ्चन । स काल आसुरः प्रोक्तः श्राद्धं तत्र विवर्जयेत्" इति देवलवचनेन च सह विरुद्धतया न मुख्यकालपरः किन्तु केनापि कारणविशेषेणापराह्णरूपमुख्यकाले श्राद्धासम्पत्तौ गौणकालाभ्यनुज्ञापकः । अन्यथैतद्विधिवैयर्थ्यात् । अत एवोक्तं व्यासेन—"स्वकालातिक्रमे कुर्याद्रात्रेः पूर्वं यथाविधि" इति । व्याघ्रपादेन च–"विधिज्ञः श्रद्धयोपेतः सम्यक्पात्रनियोजकः । रात्रेरन्यत्र कुर्वाणः श्रेयः प्राप्नोत्यनुत्तमम्" इति । नन्वेवं सायाह्नेऽपि किञ्चिद्विघ्नोपस्थितौ का गतिर्न च तदानीमगत्या रात्रावपि कर्त्तव्यम् , 'रात्रौ श्राद्धं न कुर्वीत' इत्यादिमन्वादिवचनैर्मुख्यकालवत् 'रात्रेः पूर्वं यथाविधि' 'रात्रेरन्यत्र कुर्वाणः' 'उपसन्ध्यं न कुर्वीत' इत्यादिव्यास-व्याघ्रपाद-देवलादिवचनैर्गौणकालत्वेनापि रात्रेः प्रतिषेधादिति चेन्न, एकोद्दिष्टप्रकरणोक्तेन "पण्डिता ज्ञानिनो मूर्खाः स्त्रियो वा ब्रह्मचारिणः । मृताहं समतिक्रम्य चाण्डालेष्वभिजायते" इति मरीचिवचनेन, "भोजको यस्तु वै श्राद्धं न करोति खगाधिप । मातापितृभ्यां सततं वर्षे वर्षे मृताहनि ॥ स याति नरकं घोरं तामिस्रं नाम नामतः" इति स्मृत्यन्तरेण, "मृताहनि पितुर्यस्तु न कुर्याच्छ्राद्धमादरात् । मातुश्चैव वरा-

रोहे वत्सरान्ते मृताहनि ॥ नाहं तस्य महादेवि पूजां गृह्णामि नो हरिः" इति भविष्यपुराणवचनेन चाब्दिकश्राद्धस्य तद्दिने त्यागे निन्दादिश्रुत्यावश्यकर्त्तव्यत्वेन दिवा विघ्नोपस्थितावगत्या रात्रावपि कर्त्तव्यतालाभेन 'एकत्र[1] निर्णीत' इति न्यायात्पार्वणेऽपि तथाऽऽदरणौचित्यात् । 'दिनान्ते पञ्च नाड्यस्तु' इति वचनेन गौणकालरूपायां सन्ध्यायामारब्धस्यागत्या रात्रौ समापनीयत्वमित्येव बोधनाच्च । यत्र काले समाप्तिस्तत्राऽऽरम्भोऽपि, मृताहाधिकरणकश्राद्धविधानावश्यकत्वबोधकप्रागुक्तनानामुनिवचनानुरोधात् । व्यवहारस्तु सति सम्भवे रात्रिश्राद्धानाचरणस्यैव सर्वत्र मिथिलायाम् । यत्तु—"चतुर्थे प्रहरे प्राप्ते यः श्राद्धं कुरुते नरः । आसुरं तु भवेच्छ्राद्धं दाता च नरकं व्रजेत्" इत्यनेन यमोऽपराह्णान्तिमभागं प्रतिषेधति तत्सन्ध्यातात्पर्येणेति न तद्विरोध आपाद्यः । यच्च "शुक्लपक्षे तु पूर्वाह्णे श्राद्धं कुर्याद्विचक्षणः । कृष्णपक्षेऽपराह्णे तु रौहिणं[2] तु न लङ्घयेत्" इति मार्कण्डेयपुराणवचनं तस्य शुक्लवत्प्रसादकत्वाच्छुक्लं=देवसम्बन्धिकर्म्म तस्य पक्षः—शुक्लपक्षः, पितृमरणादिजन्यशोकजनकतया कृष्णवत्कालुष्याऽऽधायकत्वात्कृष्णं पितृ-सम्बन्धिकर्म तस्य पक्षः कृष्णपक्ष इत्यर्थ इति नानेनापि तद्विरोध इत्यपराह्णपार्वणं निष्प्रत्यूहमिति केचित् । वाचस्पतिमिश्रास्तु निर्बीजलक्षणाया अनौचित्यादत्र शुक्ल-कृष्णशब्दौ न लाक्षणिकौ तेनापराह्णादरः कृष्णपक्ष एव न शुक्लपक्ष इत्याहुः । तदयं निर्गलितोऽर्थः—पूर्वेद्युरेव परेद्युरेव वाऽपराह्णव्याप्तौ निर्विवादमेव तत्र पार्वणं, यत्र तूभयदिनेऽपराह्णव्यापिता तत्र—"अपराह्णद्वयव्यापिन्यतीतस्य तु या तिथिः । क्षये पूर्वा च कर्त्तव्या वृद्धौ कार्या तथोत्तरा" इति बौधायनवचनाद्व्यवस्था । अतीतो मृतस्तस्य तिथिर्न मरणाधिकरणरूपा किन्तु पार्वणाधिकरणरूपाऽपराह्णव्यापितायाः पार्वण एवोपलब्धेः । वृद्धिक्षयौ चोत्तरतिथिगतावेव न ग्राह्यतिथिगतावपराह्णद्वयव्यापित्वोक्तेः । दिनद्वयेऽपराह्णव्यापनञ्च द्वेधा-एकदेशेन कात्स्न्र्येन च, एकदेशेनापि द्वेधा-साम्य-वैषम्याभ्यां, तत्र वैष-

---

१. 'एकत्र निर्णीतः शास्त्रार्थोऽन्यत्राप्युपतिष्ठते' इति न्यायस्वरूपं प्रागुक्तमेव ।

२. 'रौहिणन्तु न लङ्घयेत्' इति चतुर्थचरणेन प्राक् प्रदर्शितैकोद्दिष्टवेला निरूप्यत इति विवेकः ।

म्येणैकदेशव्यापने "अल्पापराह्ने त्याज्या सा ग्राह्या स्याद्याधिका भवेत्" इति शिवराघवसंवादात्, "अपराह्णद्वयव्यापिन्यमावास्या यदा भवेत्। तत्राल्पत्वमहत्त्वाभ्यां निर्णयः पितृकर्म्मणि" इति स्मृतेश्च निर्णयनीयम्। अत एव दिनद्वयव्याप्तावपि यदि पूर्वदिनेऽपराह्णमारभ्य सायं व्याप्नोति तदा-"यस्यामस्तं रविर्याति पितरस्तामुपासते। सा पितृभ्यो यतो दत्तो ह्यपराह्णः स्वयम्भुवा" इति मनुवचनात्, "पित्र्येऽस्तमयवेलायां स्पृष्टा पूर्णा निगद्यते" इति वसिष्ठवचनात्, "सायाह्नव्यापिनी या तु पार्वणे सा उदाहृता" इति गोभिलवचनात्, "अह्नोऽस्तमयवेलायां कलामात्रापि या तिथिः" इति व्यासवचनाच्च पूर्वदिन एव पार्वणं कार्यम्। साम्येनोभयत्रैकदेशव्याप्तौ तु-"खर्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम्। खर्वदर्पौ परौ कार्यौ हिंसा स्यात्पूर्वकालिकी" इति वचनाद्व्यवस्थातव्यम्। एतमेवार्थमाह शिवराघवसंवादेऽपि-"क्षये पूर्वा परा वृद्धौ साम्येऽपि च परा स्मृता" इत्यनेन। खर्वादिवाक्ये हिंसापदेन क्षयो गृह्यते, क्षि हिंसायामिति धातोरेव क्षयशब्दव्युत्पत्तेस्तदियमत्र सूक्ष्मेक्षिका-यदा पूर्वदिनेऽपराह्णस्य द्वितीयां घटीमारभ्य परदिनेऽपराह्णस्य पञ्चघटीपर्यन्तं ग्राह्यतिथिसत्ता तदा पूर्वदिनापराह्णस्य प्रथमघटीं, परदिनापराह्णस्य चान्तिमघटीमपहायावशिष्टघटीपञ्चके ग्राह्यतिथेः सत्त्वात्साम्येनैकदेशव्यापिता तिथिवृद्धिश्च घटिकाचतुष्टयेन। यदा पूर्वदिनापराह्णस्यान्तिमघटीमादाय परदिनापराह्णस्य प्रथमघटीपर्यन्तं ग्राह्यतिथिसत्ता तदापि साम्येनैकदेशव्यापिता तिथिक्षयस्तु घटिका-चतुष्टयेन। यदा तु पूर्वदिनापराह्णस्यान्तिमघटीत्रये परदिनापराह्णस्य च प्रथमघटीत्रये ग्राह्यतिथिसत्ता तदा तिथेर्वृद्धिक्षययोरभावात्केवलसाम्येनैकदेशव्यापितेत्येवं व्यापनत्रये क्षये पूर्वा, वृद्धौ साम्ये च परा तिथिः पार्वणार्हेत्येव पूर्वोक्तं खर्वादिवाक्यमुपोद्वलतीति। एष च सिद्धान्तः सर्वतिथि-साधारणोऽवगन्तव्यः। त्रिविधापीयं व्याप्तिः कर्म्मकालिक्येव सर्वस्मृति-निबन्धाद्यादृतेति बहवः। मतद्वैधे च शिष्टाचार एवानुरोद्धव्य इत्याम्रेडितम्॥*॥ पार्वणकालानाह याज्ञवल्क्यः—"अमावास्याष्टका वृद्धिः कृष्णपक्षोऽयनद्वयम्। द्रव्यं ब्राह्मणसम्पत्तिर्विषु[1]-

१. अयं शब्दस्तान्तोऽदन्तश्च 'अनुपदं वक्ष्यमाणात् 'नित्यं विषुवतोर्द्वयोः' इति

वत्सूर्यसङ्क्रमः ॥ व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्ययोः। श्राद्धं-प्रतिरुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः" इति। अमावास्या = अदृष्टचन्द्रा तिथिः। अष्टकाः = 'हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः' इत्याश्वलायनोक्ताश्चतस्रः। अष्टकापदमन्वष्टकाया अप्युपलक्षणम्। वृद्धिः= पुत्रोत्पत्त्यादिरूपा। कृष्णपक्षः=सर्वोऽपरपक्षो नाश्विनापरपक्ष एव "शाकेनाप्यपरपक्षं नातिक्रामेन्मासि मासि वोऽशनम्" इति श्रुतेः, "मासि मासि कार्यमपरपक्षस्यापराह्णः श्रेयान्" इत्यापस्तम्बात्, "ऊर्ध्वं चतुर्थ्या यदहः सम्पद्यते ऋते चतुर्दशीम्" इति कात्यायनाच्च। 'शाकेनापी'-ति श्रुतेरयमर्थः- [ अन्नाद्यभावे शाकेनापि अपरपक्षं कृष्णपक्षं न अतिक्रामेत् = उल्लङ्घयेत् श्राद्धाकरणेनेति शेषः, यतः प्रजापतिः पितॄनाह स्म-'वः=युष्माकं (युष्मभ्यं) मासि मासि = प्रतिमासमशनं = भोजनं दत्त'मित्यतः प्रतिमासापरपक्षेषु श्राद्धमवश्यं-कर्त्तव्यम् ] इति। अमावास्यापदमपीह प्रतिमासीयामावास्यापरमेव-"न निर्वपति यः श्राद्धं प्रमीतपितृको द्विजः। इन्दुक्षये मासि मासि, प्रायश्चित्तीयते तु सः" इति मिताक्षराधृतस्मृतेः। निर्वपति = दत्ते, कुरुते[1] वा। इन्दुक्षये = अमावास्यायाम्। अमावास्याश्राद्धन्तु पृथगेव, प्रकृतयाज्ञवल्क्यवचने कृष्णपक्षात्पृथगमावास्याया निर्देशात्। "अपरपक्षस्यामावास्या गुणा" इति शूलपाणिलिखनन्त्वनादेयमेव कृष्णपक्षीयं तिथ्यन्तरमपेक्ष्यामावास्याया उत्कर्षकं वा। श्रूयते च-"अपरपक्षे यदहः सम्पद्यतेऽमावास्यायां-विशेषेण" इति। अयनद्वयं = दक्षिणोत्तरायणे। द्रव्यं = विहितमांसान्नव्यञ्जनादि। ब्राह्मणसम्पत्तिः = "अग्र्याः सर्वेषु वेदेषु श्रोत्रियो ब्रह्मविद्युवा। वेदार्थविज्ज्येष्ठसामा त्रिमधुस्त्रिसुपर्णिकः॥ स्वस्रीयऋत्विग्जामातृ-याज्य-श्वशुर-मातुलाः। त्रिणाचिकेतदौहित्र-शिष्य-सम्बन्धि-बान्धवाः॥ कर्म्मनिष्ठास्तपोनिष्ठाः पञ्चाग्निब्रह्मचारिणः। पितृमातृपराश्चैव ब्राह्मणाः श्राद्धसम्पदः" इति तेनै[2]वोक्ता निमन्त्रणीय-ब्राह्मण-योग्यता। तत्र सर्वेष्वृगादिवेदेषु तल्लीनतया कृताप्रस्खलिताध्ययना अग्र्याः, वेदाध्ययन-सम्पन्नः श्रोत्रियः, वेदज्ञो ब्रह्मवित्, मध्यमव-

---

ब्रह्मपुराणवचनात्, 'विषुवे शतसाहस्रम्' इति स्कन्दपुराणवचनाच्च। १. वस्तुतस्तु निर्वपणान्यथानुपपत्त्या श्राद्धपदमत्र पिण्डपरम्। २. याज्ञवल्क्येनैव,

यस्को युवा, सर्वेषां विशेषणमिदम्, मन्त्रब्राह्मणात्मकवेदार्थज्ञानवान् वेदार्थवित्, ज्येष्ठसामेति सामविशेषस्तदध्ययनाङ्गं व्रतमपि तत्तदाचरणेन यस्तदधीते स ज्येष्ठसामा, त्रिमधुर्ऋग्वेदैकदेशस्तद्व्रतञ्च तदाचरणेन तदध्ययनकर्त्तापि, त्रिसुपर्णमृग्यजुषोरेकदेशस्तद्व्रतञ्च तदाचरणेन तदध्ययनकर्त्ता त्रिसुपर्णिकः, भागिनेयः स्वस्त्रीयः, यज्ञकारयिता ऋत्विक्, जामाता प्रसिद्धः, त्रिणाचिकेतं यजुर्वेदैकदेशस्तद्व्रतञ्च तदाचरणेन तदध्ययनवांस्त्रिणाचिकेतः प्राग्व्याख्यातस्वरूपः, बान्धवान्ताः प्रसिद्धाः, विहितकर्म्मानुष्ठानतत्पराः कर्म्मनिष्ठाः, तपश्चरणशीलास्तपोनिष्ठाः, सभ्याऽऽवसथ्यदक्षिणाग्निगार्हपत्याऽऽहवनीयेत्यग्निपञ्चकवान्-पञ्चाग्निविद्याध्यायी च पञ्चाग्निः, उपकुर्वाणरूपो नैष्ठिकरूपश्च ब्रह्मचारी, पितृमातृपरास्तत्पूजानिरताः, चकाराज्ज्ञाननिष्ठादयः, ब्राह्मणा इति तत्तद्गुणविशिष्टक्षत्रियादिव्यावृत्तये, श्राद्धसम्पदः = श्राद्धेष्वक्षय्यफलसम्पादका इत्यर्थ इति मिताक्षरा। विषुवद्द्व (द्व) यं = मेष-तुलराश्योः सूर्यसंक्रमः। सूर्यसंक्रमः = एकस्माद्राशेः सूर्यस्य राश्यन्तरगमनम्। संक्रान्तित्वाविशेषेऽपि विषुवद्वयस्य पृथगुपादानं फलातिशयबोधनार्थम्। संक्रान्त्यादिनिमित्तके श्राद्धे यद्यपि-"ततः प्रभृति संक्रान्तावुपरागादिपर्वसु। त्रिपिण्डमाचरेच्छ्राद्धमेकोद्दिष्टं मृताहनि॥ अयनद्वितये श्राद्धं विषुवद्वितये तथा। संक्रान्तिषु च सर्वासु पिण्डनिर्वपणादृते" इति मत्स्यपुराणवाक्ययोः पिण्डनिर्वपणविषये मिथो विरोधस्तथापि षोडशि-ग्रहणाग्रहणवद्विकल्पो बोध्यस्तथा हि-षोडशी = यज्ञिय[1]-हविर्भक्षण-पात्रविशेषो यस्मिन् यज्ञावसानेऽवशिष्टं हविरादाय ब्रह्मादिक्रमेण सर्व एवर्त्त्विगादयः "ब्रह्मन्नुपह्वय, अध्वर्य उपह्वय, अग्नीदुपह्वय, यजमानोपह्वय" इत्याद्यभिधाय परस्परं भुञ्जते,-तत्पात्र-ग्रहणमतिरात्रनामनि सत्रे कर्त्तव्यं न वेति संशये श्रूयते-"अतिरात्रे षोडशिनं गृह्णाति नातिरात्रे षोडशिनं गृह्णाति" इति। अत्र गृह्णातीति विधिग्रहणे निषेधस्य, न गृह्णातीति निषेधग्रहणे विधेश्च वैयर्थ्यप्रसङ्गो, न च "यजतिषु येयजामहं करोति नानुयाजेषु" इत्यत्रानुयाज-

---

१. 'यज्ञर्त्विग्भ्यां घखञाविति घोऽत्र।

भिन्नेषु यजतिषु[1] येयजामहं[2]करोतीतिवत्पर्युदासो, न वा "न तौ[3] पशौ[4] करोति, न[5] सोमेऽध्वरे" इतिवदर्थवादो, नापि च निषेधो विधिनिषेधयोरिहातिरात्रमात्रविषयत्वेन 'यजतिषु' 'न तौ'वित्यादिवद्विषयभेदस्यासत्त्वादिति शास्त्रप्रामाण्याद्व्रीहियव[6]वद्विकल्प इति। व्यतीपातः="श्रवणाश्विधनिष्ठार्द्रा नागदैवतमस्तके। यद्यमा रविवारेण व्यतीपातः स उच्यते" इति वृद्धमनूक्तः, "सिंहस्थौ गुरुभौमौ चेन्मेषगे च रवौ सिता। द्वादशी हस्त-संयुक्ता व्यतीपातो महानिह" इति ज्योतिषोक्तो वा योगविशेषः। गजच्छाया="सैंहिकेयो यदा सूर्यं ग्रसते पर्वसन्धिषु। गजच्छाया तु सा प्रोक्ता श्राद्धं तत्र प्रकल्पयेत्" इति वायुपुराणाद्युक्ता। सैंहिकेयो राहुः। गजच्छायानिमित्तकञ्च श्राद्धं स्पर्शकाल एव कार्यमाह वृद्धवसिष्ठः—"त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा" इति। तत्रापि "दिवैव योगः शस्तोऽयम्" इत्यादिस्मृतेर्दिवसयोग एव शस्त इत्युक्तं मया मलमासनिर्णये। अयमेव गजच्छायायोगो-मघात्रयोदश्योः कुञ्जरच्छाया-पर्यायः— "भवेन्मघायां संस्थे च शशिन्यर्के करे स्थिते" इति स्मृतेः। एतच्छ्राद्धं निषिद्धसायाह्नादावपि कार्यमित्यमैथिलानां प्रमादः, प्रतिप्रसवानुपलम्भाद्बाधसापेक्षविधानापत्तेश्च। सिद्धान्तेनाप्येतन्मैथिला आचरन्ति। वस्तुतस्तु मधुघृतपायसेनैव कार्यं, सर्वेषामविरुद्धाचारात्। "सोऽस्माकञ्च कुले जायाद्यो नो दद्यात्त्रयोदशीम्। पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च" इति स्मृतेश्च। अत्र पितॄणांमुक्तिरुक्ता ब्रह्मपुराणे—"आश्वयुज्यां तु कृष्णायां त्रयोदश्यां मघासु च। प्रावृडृतौ यमः प्रेतान् पितॄँश्चापि यमालयात्॥ विसर्जयति मानुष्ये कृत्वा शून्यं स्वकं पुरम्। क्षुधार्त्ताः कीर्त्तयन्तश्च दुष्कृतन्तु स्वयं कृतम्॥ पायसं पुत्रपौत्रेभ्यः काङ्क्षन्तो मधुसंयुतम्। तस्मात्तत्र विधानेन तर्पयेत्पायसेन च॥ मध्वाज्यतिलमिश्रेण तथा शीतेन चाम्भसा। ग्रासमात्रं परगृहाद्यत्कं यः प्राप्नुयान्नरः॥ भिक्षामात्रेण यः प्राणान्

---

१. अत्र धातुनिर्देशे श्तिप्प्रत्ययः। यागेष्वित्यर्थः।

२. 'ये यजामहे' इति पञ्चाक्षरो मन्त्रः। ३. प्रयाजानुयाजौ। ४. पशुसंज्ञके यागे। ५. 'अश्वं न त्वा वारवन्तम्' इत्यादाविवात्र नञुपमार्थक इति स्पष्टं निरुक्ते।

६. 'व्रीहिभिर्यवैर्वा जुहोति' इति चोदनाद्व्रीहियवयोर्यथा विकल्पस्तथेतिभावः।

सन्धारयति वा स्वयम्। यो वा संवर्द्धयेद्देहंप्रत्यहञ्चात्मविक्रयात् ॥ श्राद्धं तेनापि कर्त्तव्यं तैस्तैर्द्रव्यैः सुसञ्चितैः । नास्मात्परतरः कालः श्राद्धेष्वन्यत्र विद्यते ॥ यत्र साक्षाद्धि पितरो गृह्णन्त्यमृतमक्षयम्" इति । ज्येष्ठपुत्रवताऽत्र पिण्डा न देयाः 'मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति' इति निषेधश्रवणात् । ज्येष्ठपदमत्र सर्वज्येष्ठपरम्। अत्र भोजननिषेधोऽन्यत्रोक्तः । ग्रहणं प्रसिद्धम् । श्राद्धम्प्रतीति-यदा कर्तुरिच्छा स्यात्तदा पीत्यर्थः । चकारायुगादि-युगान्त-मन्वादि-संग्रहः । ब्रह्मपुराणम्-"युगाद्येषु युगान्तेषु श्राद्धमक्षयमुच्यते" इति । वायुपुराणम्-"एतेषामभ्युपगमान्मनुर्मन्वन्तरेश्वरः । मन्वन्तरादौ श्राद्धानि प्रावर्त्तयत सर्वतः ॥ मन्वन्तरादयस्त्वेते दत्तस्याक्षयकारकाः" इति । युगादयस्तु-वैशाखशुक्लतृतीया, कार्त्तिक-शुक्लनवमी, प्रोष्ठपद्यूर्ध्वं कृष्णात्रयोदशी माघी चेति । युगान्ताः= वृष-सिंह-वृश्चिक-कुम्भ-संक्रान्तयः । मन्वन्तरा ( मन्वा ) दयश्च-महानवमी, देवोत्थानद्वादशी, चैत्रशुक्लतृतीया, भाद्रशुक्लतृतीया, फाल्गुनामावास्या, पौषशुक्लैकादश्याषाढशुक्लदशमी, माघशुक्लसप्तमी, श्रावणकृष्णाष्टम्याषाढी कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी चेति चतुर्दश । सूर्यसंक्रान्ति-विषुवद्वय-व्यतीपात-जन्मर्क्षाभ्युदयानुपक्रम्याह विष्णुपुराणम्- "एतांस्तु श्राद्धकालान् वै काम्यानाह प्रजापतिः । श्राद्धमेतेषु यद्दत्तं तदानन्त्याय कल्पते" इति । अत्रापि विषुवद्वयस्य पृथगुक्तिः पूर्ववत्फलातिशयद्योतनाय । व्याख्यातमन्यत् । ब्रह्मपुराणम्-"नित्यं द्वयोरयनयोर्नित्यं विषुवतोर्द्वयोः । चन्द्रार्कयोर्ग्रहणयोर्व्यतीपातेषु पर्वसु ॥ अहोरात्रोषितः स्नानं दानं श्राद्धं जपादिकम् । यः करोति प्रसन्नात्मा तस्य स्यादक्षयञ्च तत्" इति। स्कान्दे-"अयने कोटिगुणितं लक्षं विष्णुपदीषु च। षडशीतिसहस्रं तु षडशीत्यामुदाहृतम् ॥ शतमिन्दुक्षये पुण्यं सहस्रं तु दिनक्षये । विषुवे शतसाहस्रमाकामावैष्वनन्तकम्" इति । आ-का-मा-वैषु = आषाढ-कार्त्तिक-माघ-वैशाखपूर्णिमासु। अनन्तकम्—अनन्तफलजनकम् । संक्रान्तौ तु विशेषमाह ब्रह्मपुराणे—"एकान्ततो मया प्रोक्ताः कालाः संक्रान्ति-संज्ञकाः । नैतेषु विद्यतेऽनिष्टं यतश्चाक्षयसंज्ञकाः ॥ अश्रद्धयाऽपि यद्दत्तं कुपा-

---

१. 'श्राद्धम्प्रतिरुचिश्च' इति प्रकृतयाज्ञवल्क्यवचनस्थचकारादित्यर्थः ।

त्रेभ्योऽपि मानवैः। अकालेऽपि हि तत्सर्वं सत्यमक्षयतां व्रजेत्" इति।
शातातपः—"नवोदके नवान्ने च गृह-प्रच्छादने तथा। पितरः स्पृहयन्त्य-
न्नमष्टकासु मघासु च॥ तस्माद्दद्यात्सदा युक्तो विद्वत्सु ब्राह्मणेषु च" इति।
नवोदके=प्रावृष आरम्भे-आर्द्रादाविति यावत्, "वर्षाकाले तथाऽऽर्द्रादि-
नक्षत्रगणनम्मतम्" इति रुद्रयामलोक्तेः। नवान्ने=व्रीहि यव-पाकयोः
श्राद्धविधिश्रुतेः शरदि वसन्ते च। नवोदकपदस्य तदुत्पत्तिकाले, नवान्न-
पदस्य च तद्भक्षणकाले लाक्षणिकत्वात्। गृहप्रच्छादने=गृहनिर्म्माणकाले।
अष्टकासु=तिसृष्वपि मतान्तरे चतसृष्वपि बहुवचननिर्देशात्सङ्कोचे
बीजाभावाच्च। मघास्विति बहुवचनन्तु च्छान्दसं, तस्या एकत्वात्। सदे-
त्युक्त्या नवोदकादिश्राद्धानां नित्यत्वं सूचितम्। युक्तः=गृह्योक्तयत्नवान्।
विद्वत्सु=पात्रेषु। ब्राह्मणेष्वित्यत्र प्राप्तेष्विति शेषः, एवञ्च यदा पात्र-
ब्राह्मणा उपलभ्येत तदापीत्यर्थः "तीर्थद्रव्योपपत्तौ तु न कालमवधारयेत्।
पात्रञ्च ब्राह्मणम्प्राप्य सद्यः श्राद्धं विधीयते' इति हारीतवचनात्। तीर्थं=
गङ्गादि, द्रव्यं-गण्डकमांसादि, उपपत्तिरुपलब्धिः, अवधारयेत्=प्रतीक्षेत।
तीर्थ-द्रव्य-सुपात्रब्राह्मणानामुपलब्धौ पार्वणश्राद्धस्यामावास्यापराह्णादिनिय-
मव्यतिरेकेणापि प्रतिषिद्धरात्र्याद्यतिरिक्ते कालेऽवश्यकर्त्तव्यत्वमिति पिण्डि-
तोऽर्थः। वृद्धपराशरः- "श्राद्धं वृद्धावचन्द्रेभच्छायाग्रहणसंक्रमे। नवोदके
नवान्ने च नवच्छन्ने तथा गृहे॥ नवैक्षवेषु चेहन्ते पितरो हि मघास्वपि॥
पितरः स्पृहयन्त्यन्नमष्टकासु मघासु च" इति। अचन्द्रा=अमावास्या,
इभच्छाया=गजच्छाया, नवैक्षवेषु=नवेक्षुविकारेषु, ईहन्ते=कामयन्ते,
व्याख्यातानीतराणि।

चन्द्रमण्डलोपरि प्रद्यवि[1] पितॄणामवस्थानान्मनुष्यदिवसगणनयैको
मासः पितृणामेकं दिनमित्यमावास्या पितृदिनमध्यभागस्तत्समीपवर्ती
कृष्णपक्षीयदशम्यादिरपीत्यत एवोक्तं मनुना-"कृष्णपक्षे दशम्यादौ वर्ज-
यित्वा चतुर्दशीम्। श्राद्धे प्रशस्तास्तिथयो यथैता न तथेतराः" इति।
कृष्णपक्षस्य मुख्यतामाह कालमाधवीये-'दैवे मुख्यः शुक्लपक्षः कृष्णः

---

१. "उदन्वती द्यौरवमा, पीलुमती तिमध्यमा, तृतीया ह प्रद्यौरिति यस्यां
पितर आसते" इति प्रागुक्तश्रुतेः प्रद्योनामन्याकाशे।

पित्र्ये विशिष्यते" इति। अथामावास्याकाल-वेलादिस्तत्र श्रुतिः-"अमावास्यायां पितृभ्यो दद्यात्" इति। तन्त्ररत्नधृतच्छन्दोगपरिशिष्टे च—"पिण्डान्वाहार्यकं श्राद्धं क्षीणे राजनि शस्यते" इति। अत्र "ततः प्रभृति पितरः पिण्डसंज्ञान्तु लेभिरे" इति मत्स्यपुराणात्पिण्डानां = पितॄणाम्, अन्वाहार्यम् = 'अन्वाहार्यं मासिकोंऽश' इत्यमरान्मासैकतृप्तिजनकं श्राद्धं-पिण्डान्वाहार्यम्। तथा च मनुः-"पिण्डानां मासिकं श्राद्धमन्वाहार्यं विदुर्बुधाः" इति। "पितृयज्ञं तु निर्वर्त्य विप्रश्चन्द्रक्षयेऽहनि। पिण्डान्वाहार्यकं श्राद्धं कुर्यान्मासानुमासिकम्" इति च। पितृयज्ञम् = "अमावास्यायां पिण्डपितृयज्ञं चरन्ति" इति श्रुतिबोधितं पिण्डपितृयज्ञसंज्ञकं यज्ञम्। क्षीणे राजनीति राजनि = चन्द्रे क्षीणे=नष्टे सत्यमावास्यायामिति यावत्। चन्द्रक्षयमाह च्छन्दोगपरिशिष्टे—"अष्टमेंऽशे चतुर्दश्याः क्षीणो भवति चन्द्रमाः। अमावास्याष्टमांशे च ततः किल भवेदणुः" इति। तेन चतुर्दश्यष्टमयामादमाष्टमयामं यावच्चन्द्रक्षयः। कश्चिद्विशेषमाह तत्रैव-"आग्रहायण्यमावास्या तथा ज्येष्ठस्य या भवेत्। विशेषमाभ्यां ब्रुवते चन्द्रचारविदो जनाः॥ अत्रेन्दुराद्ये प्रहरेऽवतिष्ठते चतुर्थभागो न कलावशिष्टः। तदन्त एव क्षयमेति कृत्स्नमेवं-ज्योतिश्चक्रविदो वदन्ति" इति। तदन्ते = अमान्त इति कल्पतरौ, अमायाः प्रथमयामान्त इति श्राद्धकल्प इत्येवञ्चाग्रयण-ज्येष्ठामावास्ययोरपराह्णद्वयलाभे उत्तरापराह्ण एव चन्द्रक्षय एतन्मत इत्यास्तां तावत्।

प्रकृतमनुसरामः—अमावास्यावत्पूर्णिमादावपि पार्वणमावश्यकम्, "अमावास्याव्यतीपात-पौर्णमास्यष्टकासु च। विद्वाञ्छ्राद्धमकुर्वाणः प्रायश्चित्तीयते हि सः" इति स्मृतेः। अमावास्या पूर्णिमा च प्रत्येकं द्विविधा, तथा हि श्रूयते कठशाखायाम्-"या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका, या पूर्वाऽमावास्या सा सिनीवाली योत्तरा सा कुहूः" इति। बृहद्वसिष्ठोऽपि-"राका चानुमतिश्चेति पौर्णमासीद्वयं विदुः। राका सम्पूर्णचन्द्रा

---

१. अस्य 'तदामिषेण कर्त्तव्यं प्रशस्तेन प्रयत्नतः' इत्युत्तरार्द्धम्। अत्र प्रशस्तेनाऽऽमिषेणेति खड्गिमांसेनेत्यर्थः। प्रयत्नत इत्यभिधानात्प्रशस्तमांसदानस्यावश्यकत्वं बोध्यते, तदलाभे तदनुकल्पद्रव्यादिनाऽपि कर्त्तव्यमेव।

स्यात्कलोनानुमतिर्म्मता ॥ दृष्टचन्द्राममावास्यां सिनीवालीं प्रचक्षते । एतामेव कुहूमाहुर्नष्टचन्द्रां महर्षयः" इति । कलोना = कलया न्यूना । अमरोऽपि-"कलाहीने सा (चा) नुमतिः पूर्णे राका निशाकरे ।......सा दृष्टेन्दुः सिनीवाली सा नष्टेन्दुकला कुहूः" इति । स्मृत्यन्तरमपि-"राका चानुमतिश्चैवं पौर्णमासी द्विधा स्मृता । सिनीवाली कुहूश्चैवममावास्या द्विधैव तु" इति । अमावास्यादिश्राद्धस्य सर्वकर्त्तव्यतामाह मत्स्यपुराणे— "अमावास्याष्टका कृष्णपक्षपञ्चदशीषु च" इत्युपक्रम्य "एतच्चानुपनीतोऽपि कुर्यात्सर्वेषु पर्वसु । श्राद्धं साधारणं नाम सर्वकामफलप्रदम् ॥ भार्याविरहितोऽप्येतत्प्रवासस्थोऽपि नित्यशः । शूद्रोऽप्यमन्त्रवत्[1]कुर्यादनेन विधिना बुध" इति । अत्र चन्द्रक्षयाद्यादरो न, प्रमाणाभावात् । हेमाद्रौ जातूकर्ण्यः-ग्रहोपरागे च सुते च जाते पित्र्ये[2] गयायामयनद्वये च । नित्यश्च शङ्खे च तथैव पद्मे दत्तं भवेन्निष्कसहस्रतुल्यम्" इति । ग्रहेति— ग्रहयोश्चन्द्र-सूर्ययोरुपरागो = ग्रहणं तस्मिन्नित्यर्थः । अयनद्वये = दक्षिणोत्तरायणरूपे । शङ्ख-पद्मलक्षणमप्युक्तं तेनैव-"शङ्खमाहुरमावास्यां क्षीणचन्द्रां द्विजोत्तमाः । अष्टकासु भवेत्पद्मं तत्र दत्तं तथाऽक्षयम्" इति । शङ्खस्त्वाह[3]-"यदा विष्टिर्व्यतीपातो भानुवारस्तथैव च । पद्मकं नाम तत्प्रोक्तमयनाच्च चतुर्गुणम्" इति । पञ्चदशीश्राद्धफलविषये विशेषमाह मनुः— "पक्षत्यादिविनिर्दिष्टान् विपुलान्मनसः प्रियान् । श्राद्धदः पञ्चदश्यां तु[4] सर्वान् कामान् समश्नुते" इति । पक्षतिः = प्रतिपत् तदादिसकलतिथिषु विनिर्दिष्टान् सकलानेव मनोऽभिलषितान् कामान् पञ्चदश्यां श्राद्धदः प्राप्नोतीति वचनार्थः । अत्र 'पक्षत्यादिविनिर्दिष्टान्' इत्यादिनाऽमावास्यायां प्रतिपदाद्युक्तसकलफल-प्राप्ति-प्रदर्शनेन तत्र श्राद्धावश्यकत्वमभिप्रेयते । अत्र विशाखादियोगे फलातिशयमाह-विष्णुः—"अमावास्या यदा मैत्र-

१. वैदिकमन्त्रवर्जम्, 'तदु ह वा एतच्छ्मशानं यच्छूद्र इति तस्माच्छूद्रसमीपे नाध्येतव्यम्" इति श्रुत्या शूद्रसमीपे त्रैवर्णिककर्तृकवेदाध्ययनस्यापि प्रतिषेधेन साक्षात्तत्कर्तृकतदध्ययनस्य स्वतः निषिद्धत्वात् । २. पितुरिदं तस्मिन्, 'वाय्वृतुपित्रुषसोय'-दिति यदत्र । ३. शङ्ख ऋषिः ।

४. पूर्णिमाया अप्युपलक्षणमिदम्, वचनस्थ-'पञ्चदशी'-पदेनोभयोर्ग्रहणात् ।

विशाखा-स्वाति-योगिनी। श्राद्धैस्तु पितरस्तृप्तिं प्राप्नुवन्त्यष्टवार्षिकीम् ॥ अमावास्या यदा रौद्रे पुष्यर्क्षे च पुनर्वसौ। द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्चिताः॥ वारुणेन त्वमावास्या देवानामपि दुर्लभा” इत्यादिना। मैत्रमनुराधा। वारुणेन = शतभिषर्क्षेण। प्रतिपदादिपञ्चदश्यन्त-श्राद्धकरणफलार्थवादा यथा—ब्रह्मपुराणे—“प्रतिपद्धनलाभाय द्वितीयार्थाय चापरे। तृतीयायां वरार्थाय शत्रुनाशाय चापरे॥ पञ्चम्यां धनलाभाय श्राद्धं कुर्यात्प्रयत्नतः। षष्ठ्यान्तु बालरक्षार्थं सप्तम्यां बन्धुवृद्धये॥ वृद्धिका-मस्तथाऽष्टम्यां स्त्रीकामो नवमेऽहनि। दशम्यां ब्रह्मतेजोऽर्थी सत्यार्थी च तथा-परे॥ एकादश्यां मध्यकृते ब्रह्मचारि-सुताय च। द्वादश्यां जयलाभाय त्रयोदश्यां निमृतये॥ प्रायोऽनशन-शस्त्राग्नि-विषोद्बन्धमितानां तथा। चतुर्दश्यान्तु कर्त्तव्यं तृप्त्यर्थमिति निश्चयः॥ अमावास्यायां स्वर्गाय भक्त्या सन्तर्पयेत्पि-तृन्। श्राद्धन्तु पौर्णमास्यां वै कृत्वा पूर्णं लभेत्फलम्” इति। अधिकन्तु पैठीनसि-हारीत-कात्यायनापस्तम्ब—वायुपुराणविष्णुपुराणादिभ्योऽवग-न्तव्यं फलमित्यलमत्र प्रयासेन। गारुडे-“अमावास्यादिने प्राप्ते गृहद्वारे समाश्रिताः। वायुभूताः प्रवाञ्छन्ति श्राद्धं पितृगणा नृणाम्॥ यावदस्त-ङ्गतं भानुं क्षुत्पिपासा-समाकुलाः। ततश्चास्तङ्गते सूर्ये निराशा दुःख-संयुताः॥ निःश्वसन्तश्चिरं यान्ति गर्हयन्तः स्ववंशजम्। तस्माच्छ्राद्धं प्रय-त्नेन अमायां कर्त्तुमर्हति” इति। युग्मायुग्मेषु द्वितीयाचतुर्थ्यादिषु तृतीया-पञ्चम्यादिषु च तिथिषु तथा भरणीरोहिण्यादिष्वश्विनीकृत्तिकादिषु च नक्षत्रेषु फलविशेषमाह मनुः—

> “युक्षु कुर्वन् दिनर्क्षेषु सर्वान् कामान् समश्नुते।
> अयुक्षु तु पितॄन् सर्वान् प्रजां प्राप्नोति पुष्कलाम्” इति।

पितॄन् सर्वानित्यत्र श्राद्धेन तर्पयित्वेति शेषः। सव्वँत्सरप्रदीपे—“अ-मावास्यां तु कन्यार्के तीर्थप्राप्तौ तथा नृप। कृत्वा श्राद्धं विधानेन दद्यात्षो-डशपिण्डकम्” इति। अमावास्यां तु कन्यार्क इति-कन्याराशिगतसूर्या-वच्छिन्नामावास्यायामित्यर्थः। तीर्थेति गयादितीर्थेत्याकूतम्।

---

१. एतच्च चतुर्थीश्राद्धफलम्।

## अथ षोडशपिण्डदानप्रयोगः।

वायुपुराणोक्तमाह तिथितत्त्वचिन्तामणौ—ऊनविंशति दास्यमान-पिण्डस्थानानि यथादक्षिणं भागचतुष्टयेन कृतानि जलेन सिक्त्वा तत्र दक्षिणाग्रान् कुशानास्तीर्य—"अस्मत्कुले मृता ये च गतिर्येषां न विद्यते। आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः॥ मातामहकुले ये च गति-र्येषां न विद्यते। आवाहयिष्ये तान् सर्वान् दर्भपृष्ठे तिलोदकैः॥ बन्धुवर्ग-कुले ये च गतिर्येषां न विद्यते। आवाहयिष्ये तान्सर्वान् दर्भपृष्ठे तिलोदकैः" इति मन्त्रैस्तिलोदकादिभिरावाह्य—"आब्रह्मस्तम्बपर्यन्तं देवर्षि-पितृ—मा-नवाः। तृप्यन्तु पितरः सर्वे मातृ-मातामहादयः॥ अतीतकुलकोटीनां सप्तद्वीपनिवासिनाम्। आब्रह्मभुवनाल्लोकादिदमस्तु तिलोदकम्" इति मन्त्राभ्यां तिलोदकाञ्जलीन्दत्त्वा मूलादितः पितृतीर्थेन पिण्डान् दद्यात्तथा हि—"अस्मत्कुले मृता ये च गतिर्येषां न विद्यते। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ मातामहकुले ये च गतिर्येषां न विद्यते। तेषामुद्धर-णार्थाय इमं पिण्डं ददाम्यहम्॥ बन्धुवर्गकुले ये च गतिर्येषां न विद्यते। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अजातदन्ता ये केचिद्ये च गर्भे प्रपीडिताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अग्निदग्धाश्च ये केचिन्नाग्निदग्धास्तथापरे। विद्युच्चौरहता ये च तेभ्यः पिण्डं ददाम्यहम्॥ उद्बन्धनमृता ये च विषशस्त्रहताश्च ये। आत्मोपघातिनो ये च तेभ्यः पिण्डं ददाम्यहम्॥ अरण्ये वर्त्मनि वने क्षुधया तृषया हताः। भूतप्रेत-पिशाचाश्च तेभ्यः पिण्डं ददाम्यहम्॥ रौरवे चान्धतामिस्रे कालसूत्रे च ये मृताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अनेकयातनासंस्थाः प्रेतलोके च ये गताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ अनेक-यातनासंस्था ये नीता यम-किङ्करैः। तेषामुद्धरणार्थाय इमं पिण्डं ददा-म्यहम्॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः। तेषामुद्धरणार्थाय इमं पिण्डं ददाम्यहम्॥ पशुयोनिगता ये च पक्षिकीटसरीसृपाः। अथवा वृक्षयोनिस्थास्तेभ्यः पिण्डं ददाम्यहम्॥ जात्यन्तरसहस्रेषु भ्रमन्तः स्वेन कर्म्मणा। मानुष्यं दुर्लभं येषां तेभ्यः पिण्डं ददाम्यहम्॥ दिव्यन्तरिक्ष-भूमिष्ठाः पितरो बान्धवादयः। मृता असंस्कृता ये च तेभ्यः पिण्डं ददा-

म्यहम् ॥ ये केचित्प्रेतरूपेण वर्त्तन्ते पितरो मम । ते सर्वे तृप्तिमायान्तु पिण्डदानेन सर्वदा ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ पितृवंशे मृता ये च मातृवंशे च ये मृताः । गुरुश्वशुरबन्धूनां ये चान्ये बान्धवा मृताः ॥ ये मे कुले लुप्तपिण्डाः पुत्रदारविवर्जिताः । क्रियालोपगता ये च जात्यन्धाः पङ्गवस्तथा ॥ विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । तेषां पिण्डो मया दत्तो ह्यक्षय्यमुपतिष्ठताम् ॥ आब्रह्मणो ये पितृवंशजाता मातुस्तथा वंशभवा मदीयाः । कुलद्वये ये मम दासभूता भृत्यास्तथैवाश्रितसेवकाश्च ॥ मित्राणि सख्यः पशवश्च वृक्षा दृष्टा ह्यदृष्टाश्च कृतोपकाराः । जन्मान्तरे ये मम दासभूतास्तेभ्यः स्वधापिण्डमहं ददामि" इति । अत्र पिण्डा ऊनविंशतिः, षोडशपिण्डोक्तिस्तु पञ्चाम्रादिवत्पारिभाषिकीत्यपि तत्रैव ।

## अथ पार्वणाशक्तौ कर्तव्यनिर्णयः ।

निरग्नेः पार्वणाशक्तावाह विष्णुपुराणम्—"अन्नेन वा यथाशक्ति कालेऽस्मिन् भक्तिनम्रधीः । भोजयिष्यति विप्राग्र्यांस्तन्मात्रविभवो नरः ॥ असमर्थोऽन्नदानस्य धान्यदानं स्वशक्तितः । प्रदास्यति द्विजाग्र्येभ्यः स्वल्पां वा पितृ-दक्षिणाम् ॥ अत्राप्यसामर्थ्ययुतः कराग्रावस्थितांस्तिलान् । प्रणिपत्य द्विजाग्र्याय कस्मैचिद् भूप दास्यति ॥ तिलैः सप्ताष्टभिर्वापि समवेतान् जलाञ्जलीन् । भक्तिनम्रः समुद्दिश्य तवास्माकं प्रदास्यति ॥ यतः कुतश्चित्सम्प्राप्य गोभ्यो वापि गवाह्निकम् । अभावे प्रीणयन्नस्माञ्छ्राद्धयुक्तः प्रदास्यति ॥ सर्वाभावे वनं गत्वा कक्षामूलप्रदर्शकः । सूर्यादिलोकपालानामिदमुच्चैर्वदिष्यति ॥ न मेऽस्ति वित्तं न धनं न चान्यच्छ्राद्धोपयुक्तं, स्वपितॄन्नतोऽस्मि । तृप्यन्तु भक्त्या पितरौ, मयैतौ भुजौ कृतौ वर्त्मनि मारुतस्य" इति । गवाह्निकम् = गवां दिवसाहारम् । कात्यायनः—"श्रद्धान्वितः श्राद्धं कुर्याच्छाकेनापि नापरपक्षमतिक्रामेत्" इति । अपरपक्षं= प्रतिमासकृष्णपक्षम् । प्रतिमासकृष्णपक्षम्प्रकृत्य श्रुतिः—"शाकेनापि नापरपक्षमतिक्रामेन्मासि मासि[1] वोऽशनम्" इति । अस्यार्थः प्रागेव प्रसङ्गादुक्तः । ब्रह्मपुराणम्—"पयोमूलफलैः शाकैः कृष्णपक्षे तु सर्वदा । पराधीनः

1. प्रतिमासम् ।

प्रवासी च निर्द्धनो वापि मानवः। मनसा भावयुक्तेन श्राद्धे दद्यात्तिलोदकम्॥ नाश्नन्ति पितरश्चेति कृत्वा हृत्कमले तु यः। न तर्पयति तान् भक्त्या तद्देहाद्रुधिरन्तु ते। पिबन्ति सर्वनाशञ्च कुर्वन्त्यथ पदे पदे" इति। एषु वचनेषु 'शाकेनापि' 'पयोमूलफलैःशाकैः' इत्याद्युपादानेनास्य श्राद्धस्यावश्यकर्त्तव्यताभिहिता। अपरपक्षम्प्रकृत्य 'मासि मासि' इति श्रुतेर्द्वादशस्वप्यपरपक्षेष्वस्य श्राद्धस्यावश्यकर्त्तव्यता ध्वन्यते, वीप्सायाश्चान्यथाऽनुपपत्तेः। अपरपक्षम्प्रकृत्यैव गौतमः-"अथ श्राद्धममावास्यायां पितृभ्यो दद्यात्पञ्चमीप्रभृति वाऽपरपक्षस्य सर्वस्मिन् वा यथाश्राद्धं द्रव्यदेशब्राह्मणसन्निधौ वा कालनियमः शक्तितः" इति। शक्तिः=श्राद्धसामग्री-सम्पादिका स्वीयसम्पत्ति-योग्यता तामपेक्ष्य कालनियमस्तेन तादृशयोग्यताया असत्त्वे पञ्चम्यादितोऽकरणे न दोष इत्यायातम्। अपरपक्षस्य = कृष्णपक्षस्य, "योऽपक्षीयते स पितर"-इति लिङ्गात्, कृष्णपक्षे श्राद्धविधेः समाचाराच्च, तदुक्तम्-'अपरपक्षे श्राद्धं कुर्वीत' इति गृह्यसूत्रव्याख्यातृभिर्वैशद्येन। कृष्णपक्षपदमनुक्त्वाऽपरपक्षपदोपादानन्तु पितृकर्म्मसु चान्द्रो मास इति ध्वनयितुं, तथा च स्मर्यते-"आब्दिके पितृकृत्ये च चान्द्रो मासः प्रशस्यते" इति, "सौरो मासो विवाहादौ यज्ञादौ सावनः स्मृतः। पार्वणे चाष्टकाश्राद्धे चान्द्रो मासो महालये" इति च। मार्गादिकृष्णपक्षेष्वपि समर्थस्य प्रतिपदमारभ्य तदसमर्थस्य पञ्चमीमारभ्य ततोऽप्यसमर्थस्य दशमीमारभ्य ततोऽप्यसमर्थस्यामावास्यामात्रं प्रतिमासं श्राद्धकाल इति कर्त्तृशक्ति-सापेक्षोऽयं कालविकल्पो न तु कर्त्तुरैच्छिकः, लघूपाये सम्भवति गुरूपायेन पक्षविधेरनुपादेयतयाऽननुष्ठानलक्षणाप्रामाण्यापत्तेर्वज्रलेपायितत्वात्। फलभूमा तु न, कर्म्मणो नित्यत्वात्फलभूम्नश्च काम्यविषयत्वादिति वाचस्पतिमिश्राः। सर्वापरपक्षादिश्राद्धकरणाशक्तौ प्रेतपक्षश्राद्धमवश्यं कर्त्तव्यम्, "एतान्येव हि हिंसन्ति पञ्चमं यो व्यतिक्रमेत्। तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृमेधिकम्" इति स्मृतेः। एतानि = प्रागुक्तपुत्रायुर्द्धनधान्यादिप्राप्तिरूपफलानि। पञ्चमम् = आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्विनकृष्णपक्षमित्यर्थः[1]। पैतृमेधिकम् = पितृश्राद्धम्।

---

१. इदञ्चानुपदमेवाग्रे 'आषाढीमवधिं कृत्वे'ति जातूकर्ण्यवचनेन मूल एव मया प्रमाणयिष्यते।

## अथ पितृपक्षश्राद्धनिर्णयः ।

ब्रह्मपुराणम्—"आश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा ॥ नाश्नन्ति पितरश्चेति कृत्वा मनसि यो नरः । श्राद्धं न कुरुते तत्र तस्य रक्तं पिबन्ति ते ॥ यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः । तावच्छ्राद्धस्य कालः स्याच्छून्यं प्रेतपुरं तथा ॥ इति । दिने दिन इति वीप्सयाऽखिल एव पक्ष इत्यर्थः । त्रिभागहीनम् = पक्षस्य तृतीयो भागस्तद्रहितं–पञ्चमीत इति यावत् । अर्द्धम् = पक्षार्द्धभागमष्टमीत इति यावत् । तत्र आश्वयुक्कृष्णपक्षे । ब्रह्माण्डे—"कन्यां गते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि तेषु दत्तमथाक्षयम् ॥ राजसूयाश्वमेधाभ्यां यदीच्छेत्सदृशं फलम् । अप्यम्बुमूलशाकाद्यैः पितॄन् कन्यागतेऽर्चयेत् ॥ इति । ब्रह्माण्ड-मार्कण्डेययोः—"कन्यां गते सवितरि दिनानि दश पञ्च च । पार्वणेनैव विधिना श्राद्धं तत्र विधीयते ॥ कन्यागते सवितरि यान्यहानि तु षोडश । क्रतुभिस्तानि तुल्यानि देवो नारायणोऽब्रवीत्" ॥ इति । शाट्यायनिः—"कन्यास्थार्कान्वितः पक्षः सोऽत्यन्तं पुण्यमुच्यते" इति । वृद्धमनुः—"मध्ये वा यदि वाप्यन्ते यत्र कन्यां व्रजेद्रविः । स पक्षः सकलः श्रेष्ठः श्राद्धषोडशकं प्रति ॥" इति । एतच्च कन्यागतत्वगुणफलमाश्विनकृष्णपक्ष एव वचनान्तरैः सहैकवाक्यत्वानुरोधादितरथा विधिगौरवप्रसङ्गाच्च । अत एव—"आषाढीमवधिं कृत्वा यः स्यात्पक्षस्तु पञ्चमः । अपरपक्षस्तु विज्ञेयः कन्यां गच्छतु वा न वा" इति जातूकर्ण्यः, "अगतेऽपि रवौ कन्यां श्राद्धं कुर्वीत यत्नतः । आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्म्मणि" इति जाबालश्च कन्यागतत्वं रवेरिहानावश्यकं मुखतो ब्रूतः । वृद्धमनुः—"आषाढीमवधिं कृत्वा पञ्चमं पक्षमाश्रिताः । काङ्क्षन्ति पितरः क्लिष्टा अन्नमप्यन्वहं जलम्" इति । आषाढीमवधिं कृत्वा पञ्चमपक्षत्वादेवास्यापरपक्षस्याश्विनकृष्णपक्षत्वं तत्रैव पञ्चमत्वपूर्त्तेः, "येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि । तस्यां दद्यान्नचेद्दत्तं पितॄणान्तु महालये" इति महालयच्युतश्राद्धकालत्वेन कार्त्तिकामावास्याविधिस्मृतेश्च पितॄणां महस्योत्सवस्याऽऽलयत्वेनाश्विनकृष्णपक्षपर्यायस्याषाढीतः पञ्च-

मपक्षत्वाभाव एतद्वचनासङ्गतेः स्पष्टत्वात्। "अपरपक्षे यदहः[1] सम्पद्यतेऽमावास्यायां तु विशेषेण" इति निगमेऽमावास्यायामित्यस्य सर्वास्वमावास्यास्वित्यर्थः, 'आश्वयुक्कृष्णपक्षे तु श्राद्धं देयं दिने दिने" इति सामान्यत आश्विनकृष्णपक्षीयसर्वतिथ्यालिङ्गकवचनेनैव सिद्धौ अमावास्यायां पितृभ्यो दद्यात्" इति विधेस्तदितरपरत्वात्। इदमेवाभिप्रेत्य 'अमावास्याष्टकावृद्धि'-रित्यत्रामावास्याया विशिष्योपादानम्। कालादर्शः—पक्षाद्यादि च दर्शान्तं पञ्चम्यादि दिगादि च। अष्टम्यादि यथाशक्ति कुर्यादापरपाक्षिकम्" इति। पक्षादिः = प्रतिपत्। दिक् = दशमी। तेन प्रतिपदादिदर्शान्तमिति प्रथमः पक्षः, पञ्चम्यादिदर्शान्तमिति द्वितीयः, दशम्यादिदर्शान्तमिति तृतीय इति पक्षत्रयं निर्गलितम्। गोतमेन त्वत्र-"अथापरपक्षे श्राद्धं पितृभ्यो दद्यात्पञ्चम्यादिदर्शान्तमष्टम्यादि-दशम्यादि-सर्वस्मिंश्च" इति। दर्शान्तमित्यस्याष्टम्यादिदशम्यादिभ्यामपि सम्बन्धः। सर्वस्मिन्निति जात्येकत्वात्। चो वार्थे। अयञ्च पक्षविकल्पः कर्तृशक्ति-सापेक्षः—"अथ श्राद्धममावास्यायां पितृभ्यो दद्यात्पञ्चमीप्रभृति वाऽपरपक्षस्य यथाश्राद्धं सर्वस्मिन् वा द्रव्य-देश-ब्राह्मण-सन्निधौ वा कालनियमः शक्तितः" इति गोतमेन प्रतिपदमभिधानात्। अत एव "आषाढ्याः पञ्चमे पक्षे कन्या-संस्थे दिवाकरे। यो वै श्राद्धं नरः कुर्यादेकस्मिन्नपि वासरे॥ तस्य सम्वत्सरं यावत्सन्तुष्टाः (न्तृप्ताः) पितरो ध्रुवम्" इति हेमाद्रि-धृत नाडी(नागर)खण्डवाक्य एकस्मिन्नपीत्युक्तिः। शक्तिसत्त्वे तु मुख्यपक्षत्यागं विगर्हति मनुः "प्रभुः प्रथमकल्पस्य योऽनुकल्पेन वर्त्तते। न साम्परायिकं तस्य दुर्म्मतेर्जायते क्वचित्" इति। साम्परायिकम् औत्तरकालिकम्-पारलौकिकफलार्थमिति यावत्। एवञ्च प्रथम-(यावत्पक्षं प्रत्यहश्राद्धकरण)पक्षे नन्दारविवारचतुर्दश्यादि-सत्त्वेऽपि श्राद्धं कर्त्तव्यमेव, "नभस्यापरपक्षे तु श्राद्धं देयं दिने दिने। नैव नन्दादि वर्ज्यं स्यान्नैव वर्ज्या चतुर्दशी" इति कार्ष्णाजिनिस्मृतेः। एवं युगादिमन्वादौ पिण्डदान-निषेधोऽपि तीर्थ-महालय-वार्षिकाद्यतिरिक्तपरः, "तीर्थे साम्वत्सरे श्राद्धे पितृयज्ञे महालये। पिण्डदानं प्रकुर्वीत

---

१. अहःपदं तिथिपरम्।

युगादिभरणीमघे" "महालये क्षयाहे च दर्शे पुत्रस्य जन्मनि। तीर्थेषु निर्वपेत्पिण्डान् रविवारादिकेष्वपि" इति स्मृतिभ्याम्। युगादिभरणीमघ इति समाहारद्वन्द्वेनैकवचनम्। ननु तर्हि "अयने विषुवे चैव मघायमयुगादिषु। श्राद्धं कुर्वीत यत्नेन पिण्डनिर्वपणं विना" "मन्वादिश्च युगादिश्च मघा च भरणी तथा श्राद्धं प्रकुर्वीत पिण्डनिर्वपणं विना॥ तथा मघाभरण्योश्च त्रयोदश्यां विशेषतः। प्रौष्ठपदस्य द्वादश्यां मघर्क्षं निपतेद्यदि॥ तत्र संकल्पनश्राद्धं पिण्डनिर्वापवर्जितम्" "मघायुगादौ भरण्यां संक्रान्तौ रविवासरे। पिण्डदानं न कुर्वीत यदीच्छेज्जीविताम्सुतान्" "मघायां पिण्डदानेन ज्येष्ठः पुत्रो विनश्यति। कनीयाँस्तु त्रयोदश्याम्" "मघायुगादौ भरण्यां यत्नेन परिवर्जयेत्। पिण्डदानं न कुर्वीत यदीच्छेत्सुतजीवितम्" इत्यादीनामयनादिषु पिण्डदाननिषेधकवचनानां का गतिरिति चेत्, तिथि-वार-नक्षत्र-संक्रान्ति-युगादिनिमित्तक्रियमाण-काम्यश्राद्धीयपिण्डदाननिषेधपरतया चारितार्थ्यमित्यवेत। नन्दादिवर्जकवचनञ्च—"नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि। तेषु श्राद्धं न कुरुत" इत्यादिरूपमितरत्र दर्शितम्। "कन्यां गते सवितरि यान्यहानि तु षोडश" इत्यादिप्रागुक्तब्रह्माण्डादिवचनस्थमह्नां षोडशत्वञ्च हेमाद्रिणा त्रेधा व्याख्यातम्-"भाद्रपूर्णिमया सह गणनयैकः पक्षः, तिथिवृद्धया षोडशदिनात्मकेन पक्षेण द्वितीयः, आश्विनकृष्णप्रतिपदमादायाश्विनशुक्लप्रतिपत्पर्यन्तेन च तृतीयः। एषु प्रथमपक्षे "प्रशस्ताः पूर्णिमामुख्यास्तिथयः षोडशैव ताः" इति पुराणसमुच्चयवचनं, तृतीयपक्षे च "अहः षोडशकं यत्तु शुक्लप्रतिपदा सह। चन्द्रक्षयाविशेषेण सापि दर्शात्मिका स्मृता" इति देवकवचनं प्रमाणमितरत्र तु "पक्षाद्यादि च दर्शान्त-"मिति कालादर्शवाक्यं शिष्टाचारश्च। यदि तु "मातॄणां नवमी यद्वद्धतानाञ्च चतुर्दशी। तद्वन्मातामहानाञ्च शुक्लेऽथ प्रतिपन्मता" इति स्मृतेराश्विनशुक्लप्रतिपदि दौहित्रकर्त्तृकमातामहादिश्राद्धविषयत्वमुच्यते तदैकाहे तिथिद्वयसम्भवे श्राद्धद्वय-करणादेव षोडशत्वं पूरणीयमत्र पक्षे। इदञ्चाश्विनशुक्लप्रतिपदि मातामहादिश्राद्धं जीवत्पितृकेणापि दौहित्रेण कार्यम्, "जातमात्रस्तु दौहित्रो विद्यमानेऽपि मातुले। कुर्यान्मातामहश्राद्धं प्रतिपद्याश्विने सिते"

इति स्मृतेस्ततश्च "मातामहानां-दातव्यं प्रतिपद्येव मुख्यकम् । त्रीणि हित्वा प्रयत्नेन श्राद्धं कुर्यात्सपिण्डकम्" इति कात्यायनस्मरणात्पित्रादि-त्रिके जीवति त्रिपिण्डं, मृते तु षट्पिण्डं श्राद्धं कर्त्तव्यम् । पौर्णमास्यां पार्वणप्रतिषेधस्तु भाद्रीतरपरः "पौर्णमासीषु सर्वासु निषिद्धं पिण्डपा-तनम् । वर्जयित्वा प्रौष्ठपदीं यथा दर्शस्तथैव सा" इति गार्ग्यस्मरणात् । प्रौष्ठपदीं = भाद्रपदीम् । वस्तुतस्त्वत्र वचने 'पिण्डपातन' पदं न श्राद्धपरं किन्तु पिण्डप्रदानमात्रपरं, भाद्रीभिन्नास्वपि माघीश्रावण्याग्रहायणीप्रभृ-तिषु पौर्णमासीषु प्रतिपदं पार्वणोक्तेस्तथा च नित्यश्राद्धं प्रक्रम्य विष्णु-धर्म्मोत्तरे-"पौर्णमासी तथा माघी श्रावणी च नरोत्तम" इति, वसिष्ठेन च "श्रावण्याग्रहायण्योरष्टकासु च पितृभ्यो दद्यात्" इति स्मर्यते । ब्रह्म-पुराणम्-"आश्वयुक्कृष्णपक्षे तु श्राद्धं कार्यं दिने दिने । त्रिभागहीनं पक्षं वा त्रिभागं त्वर्द्धमेव वा" इति । अत्र दिने दिने इति वीप्सया शक्तौ सत्यां श्राद्धस्य पक्षपर्यन्ततोक्ता । त्रिभाग-हीन-मित्यनेन चतुर्दशी-सहितप्रतिपदादितिथिचतुष्टयस्य व्युदासात्पञ्चम्यादिः पक्षः फलितः । "ऊर्ध्वं चतुर्थ्या यदहः सम्पद्यते ऋते चतुर्दशीम्" इति कात्यायनवचन-मत्रानुकूलम् । त्रिभागमित्यनेन च दशम्यादिरिति कल्पतरुः । यत्त्वत्र 'दिने दिने' इति वीप्सयाऽस्य श्राद्धस्याश्विनकृष्णसम्पूर्णपक्षव्यापक-त्वोक्त्या चतुर्दश्यामपि कर्त्तव्यत्वमायातीति केचिदाचक्षते तदनक्षरम्[1], "विष-शस्त्र-श्वापदाहितिर्यग्ब्राह्मणघातिनाम्[2], चतुर्दश्यां क्रियाः कार्या अन्येषान्तु विगर्हिताः" "वृक्षारोहणलोहाद्यैर्विद्युज्जलविषाग्निभिः । न-खि-दंष्ट्रि-विपन्ना ये तेषां शस्ता चतुर्दशी" "युवानः पितरो यस्य मृताः शस्त्रेण वा हताः । तेन कार्यं चतुर्दश्यां तेषां तृप्तिमभीप्सता" अपमृत्युर्भवेद्येषां शस्त्रमृत्युरथापि वा । श्राद्धं तेषां प्रकर्त्तव्यं चतुर्दश्यां नराधिप" "श्राद्धं शास्त्रहतस्यैव चतुर्दश्यां महालये" इत्यादि-मरीचि-प्रचेतो-ब्रह्मपुराण-नागरखण्ड-कालादर्शादिवचनानां विरोधस्यापरिहा-र्यत्वात् । ननु प्रागुक्त-प्रचेतो-ब्रह्मपुराण-नागरखण्डवचनेषु चतुर्दश्य-

---

१. अवाच्यम् ।

२. घातोऽस्त्येषामिति व्युत्पत्त्या हतानामित्यर्थोऽन्यथान्वयानुपपत्तेः ।

धिकरणकं तत्तदितरश्राद्धं न प्रतिषिद्धं न वा पितृपक्षपदमुपात्तमिति पितृपक्षीयचतुर्दश्यामितरेषामपि प्रमीतानां युक्तमेव श्राद्धमिति चेद्भ्रान्त विभ्रान्तोऽसि, मरीचि-कालादर्शवचनाभ्यां सहैकवाक्यतानुरोधेन प्राचेतसादिवचनानामपि चतुर्दश्यधिकरणकविष-शस्त्रादि-हतमात्रश्राद्धविधायकत्वेनैव व्यवस्थापनौचित्यात्। 'चतुर्दश्यां महालये' इत्यनेन मुखतो महालयपदमुपादाय 'न वाऽपरपक्षपदमुपात्त'-मिति त्वन्मतानादरणाच्च। किञ्च मरीच्यादिवचनेषु चतुर्दशी सामान्येनोक्ता चतुर्दशीत्वावच्छेदेनापरपक्षीयामपि तां समाक्षिपतीति किं नश्छिन्नम्?। अपि च मरीच्यादिवचनेष्वेवकाराभावेऽपि 'अभक्ष्यो ग्रामकुक्कुटः' "अभक्ष्यो ग्रामसूकरः" 'पञ्च पञ्चनखा भक्ष्याः' इत्यादिवत्परिसंख्ययेतरपरिच्छेदस्य सुकरत्वात्। परिसंख्या हि-'एकस्यानेकत्र प्रसक्तस्यान्यतो निवृत्त्यर्थमेकत्र पुनर्विधानं, यथा सोमयागे सोमलता कण्डयित्वा हविर्द्धाननामकेन शकटेनानीयते-यस्य शकटस्यैकस्मिन्भागेऽश्वोऽपरत्र च गर्दभो युक्तौ भवतः, सोमलतां तदुपरि संस्थाप्य तद्वाहन-वेलायां शकटवाहैनर्त्विजा बल्गाग्रहणाय "इमामगृभ्णन्रशनामृतस्य पूर्व आयुषि विदथेषु कव्या। सा नो अस्मिन्सुत आ बभूव ऋतस्य सामन्त्सरमारपन्ती" इत्येष मन्त्रः पाठ्यतया विनियुक्तो बल्गा(रसना)-ग्रहणञ्च सामान्येनाश्व-गर्दभयोः स्वतः[1] प्राप्तं तत्रानेन मन्त्रेण किंसम्बन्धिनी बल्गा ग्राह्येति संशये ब्राह्मणम्-"इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते" इति। एतेन ब्राह्मणवाक्येन ह्येकस्याऽऽदानस्यानेकत्र = अश्व-गर्दभरशनयोः प्रसक्तस्यान्यतः = गर्दभरशनाया निवृत्त्यर्थमेकत्र = अश्वरशनायां पुनर्विधानम् = 'इत्यश्वाभिधानीमादत्ते' इत्यंशतः पुनः प्रतिपादनं क्रियत इत्यस्ति परिसंख्ययेतरव्यवच्छेदस्तथा चोक्तं मीमांसकैः-"तत्र चान्यत्र च प्राप्तौ परिसंख्या निगद्यते" इति। प्रोक्तब्राह्मणवाक्ये 'अश्वाभिधानी-'मित्यस्य 'अश्वसम्बन्धिनी-'मित्यर्थः। स्पष्टञ्चैतच्छतपथब्राह्मणाऽऽपस्तम्बा[2]दिषु। इयञ्च शाब्दी आर्थी चेत्युभयविधा-यत्रापोह्य[3]मानोऽप्यु-

१. रागतः। २. आदिना मत्कृतसायणीयर्ग्वेदभाष्यभूमिकाटीकायामिति।
३. व्यावर्त्यमानोऽभावप्रतियोगीति यावत्।

पान्तः सा शाब्दी यथा 'भक्तिर्भवे न विभवे' इत्यादौ, यत्रापोह्यमानोऽर्थाऽऽपत्तिलभ्यः साऽऽर्थी यथा 'कौटिल्यं कचनिचये' 'चित्रकर्म्मसु वर्णसङ्करा ध्वजेषु प्रकम्पा रतेषु केशग्रहा' इत्यादाविति स्पष्टं काव्यप्रकाशादावपि। एवञ्च 'ऋते चतुर्दशीम्' इति कातीयवचनमपि शस्त्रादिहतातिरिक्तश्राद्धपरमेव । अत एव "महालये चतुर्दश्यां मघायां पुत्रवानपि। पिण्डनिर्वपणं कुर्याद्यस्य शस्त्रहतः पिता" "कृष्णपक्षे चतुर्दश्यां मघायुक्तं दिनं यदि। पिण्डनिर्वपणं कुर्यात्तृप्त्यर्थं शस्त्रघातिनः" इत्यादिवृद्धमन्वादिवचनसङ्गतिः। यत्तु "जलाग्निभ्यां विपन्नानां सन्न्यासे वा गृहे पथि। श्राद्धं कुर्वीत तेषां वै वर्जयित्वा चतुर्दशीम्" इति शाकटायनवचनं तन्महापातकादि-प्रायश्चित्तार्थजलाग्निमृतपरमिति न तद्विरोधः। यदपि "शस्त्र-विप्र-हतानाञ्च शृङ्गि-दंष्ट्रि-सरीसृपैः। आत्मनस्त्यागिनाञ्चैव श्राद्धमेषां न कारयेत्" इति च्छागलेयाद्युक्तं तदपि वृद्धादिव्यतिरिक्त-बुद्धिपूर्वकमृत-विषयम्, प्रागुक्तमरीच्यादिवचनैकवाक्यतानुरोधात्। पित्रादिषु त्रिष्वपि शस्त्रहतेषु तु-"पित्रादयस्त्रयो यस्य शस्त्रैर्यातास्त्वनुक्रमात्। स भूते पारणं कुर्यादाब्दिकानि पृथक् पृथक्" इति बृहत्पराशरादिवचनोक्तो विशेषः। भूते = चतुर्दश्याम्। 'विषशस्त्रश्वापदाहि' इत्यादीनां प्रतिषेधकवचनानां काम्यश्राद्धविषयत्वेन व्याख्यानन्तु बङ्गीयानामनास्थेयमेव। नचैवं 'दिने दिने' इति वीप्सा निरवकाशा, चतुर्दशीवर्जाश्विनकृष्णपक्षीयसर्वदिनाधिकरणकश्राद्धविधायकतया सावकाशत्वात्। यत्तु कृष्णपक्षस्य चान्द्रमासीयत्वेन तत्र [1]'तिथिनैकेन दिवसश्चान्द्रमासः प्रकीर्त्तितः' इति शिष्टोक्तेरत्र दिनपदं तिथिपरमिति केचिदूचुस्तदरुचिरम्, 'दिन'-पदस्य सूर्यावच्छिन्नयामचतुष्टयात्मककालमात्रबोधकतया तिथिवाचकत्वायोगात्, शक्तिग्राहकशिरोमणिना व्यवहारेण तथैवानुभवात्। दिनपदाश्रुत्या काम्यविधिनिषेधस्य तिथिपरत्वेऽपि नित्यविधाविह तच्छ्रुत्या तिथिपरत्वकल्पनाया अनौचित्याज्जघन्यवृत्तिकल्पनाऽऽपत्तेश्च।

नन्वेवं 'कृष्णपक्षे दशम्यादौ वर्जयित्वा चतुर्दशीम्। श्राद्धे प्रशस्तास्तिथयः' इति प्रागुक्तं मनुवचनं विरुद्धमिति चेन्न, एतद्वचनं कृष्णपक्षे

---

१. जघन्यवृत्तिर्लक्षणारूपा।

दशमीमारभ्य चतुर्दशीभिन्नायां कस्यामप्येकस्यां तिथौ श्राद्धं प्रशस्तमित्यर्थपरं, 'श्राद्धं देयं दिने दिने' इति वचनञ्चाश्विनकृष्णपक्षीयसकलदिनाधिकरणकश्राद्धविधिपरमिति विभिन्नविषयत्वात्। एतेन 'अत्र दिनपदस्य तिथिपरत्वादेकयैव तिथ्या यदाऽपराह्णद्वयव्यापनं तदा कपालाधिकरणन्यायेन प्रथमदिन एव श्राद्धं तेनैव च शास्त्रस्य कृतार्थत्वान्नोत्तरत्र तत्तिथौ पुनस्तच्छ्राद्धकरणमावश्यकमित्युत्तरदिने पार्वणाननुष्ठानमेव, यदि त्वेकस्मिन्नेव दिने तिथिद्वयं तदा तत्रैव पार्वणद्वयमिति निर्णयन्तस्तिरोहिताः। इदन्तु न विस्मर्त्तव्यम्–अपरपक्षस्यापि त्रयोदश्यां सन्तानवता पार्वणं न कार्यमितरेण तु कार्यमिति। "त्रयोदश्यां कृष्णपक्षे यः श्राद्धं कुरुते नरः। पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्रस्य निश्चितम्" "असन्तानस्तु यस्तस्य श्राद्धे प्रोक्ता त्रयोदशी। सन्तानयुक्तो यः कुर्यात्तस्य वंशक्षयो भवेत्" "त्रयोदश्यां तु वै श्राद्धं न कुर्यात्पुत्रवान् गृही" इत्यादिभिरङ्गिरोनागरखण्डवामनवचनैस्तथा प्रतिपादनात्॥

## अथाऽष्टकान्वष्टकादिश्राद्धनिर्णयः।

तत्र वसिष्ठः–"श्रावण्याग्रहायण्योरष्टकासु च पितृभ्यो दद्यात्" इति। एतच्चाग्निव्याप्येतिकर्त्तव्यताविरहात्साग्निनिरग्न्युभयसाधारणम्। "आग्रहायण्या ऊर्ध्वं तिस्रोऽष्टकास्तिस्रोऽन्वष्टकाः क्रमेणापूपमांसशाकैः" इति श्राद्धपल्लवधृतकात्यायनवचनाद्यद्यपि तिस्र एवाष्टका अभ्युपलभ्यन्ते तथापि "या चाप्यन्या चतुर्थी स्यात्तां तु कुर्याद्विशेषतः। आसु श्राद्धं द्विजः कुर्यात्सर्वस्वेनापि नित्यशः" इति वायुपुराणवचनादाश्विनाष्टकाप्यस्ति चतुर्थी। अत एव "हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः" इत्याश्वलायनोक्तमष्टकाचतुष्टं सङ्गच्छते। चतुष्टञ्च पौषादिकृष्णपक्षत्रये तिस्र आश्विनकृष्णपक्षीया चैकेति मिलित्वा बोध्यम्। चतुर्थ्या आश्विनकृष्णाष्टकात्वे प्रमाणन्तु–"प्रौष्ठपद्यामतीतायामष्टका त्वं भविष्यसि" इति वरदानवाक्यमेव। अत्र द्रव्यविषये–" क्रमेणापूपमांसशाकैः" इति प्रागुक्तं कात्यायनवचनम्, "आद्यापूपैः सदा कार्या मांसैरन्या भवेत्तथा। शाकैः कार्या तृतीया स्यादेष द्रव्यगतो विधिः" इति वायुपुराणञ्च द्रष्टव्यम्। चतुर्थ्यपि शाकैरेव "वर्षासु मध्ये शाकैश्च चतुर्थ्यामेव सर्वदा' इति ब्रह्म-

पुराणात्। चतुर्थ्याम् = आश्विनकृष्णाष्टम्याम्। मैथिलव्यवहारोऽप्येवमेव। "ऐन्द्र्यां तु प्रथमायां वै शाकैः सन्तर्पयेत्पितॄन्। प्राजापत्यां द्वितीयायां मांसैः शुद्धैस्तु तर्पयेत्॥ वैश्वदेव्यां तृतीयायामपूपैश्च यथाक्रमम्" इति ब्रह्मपुराणवचनन्तु शाखान्तरपरतया योज्यम्।

अष्टकामुपक्रम्य "हुत्वा मात्रे प्रमात्रे च" इति विष्णुधर्म्मोत्तरीयात्प्रथमं मातृभ्यस्ततः पितृभ्यस्ततो मातामहेभ्यो दद्यात्। इदमष्टकाश्राद्धं त्रयोदशीश्राद्धञ्चाऽऽरब्धापरपक्षश्राद्धेन कर्त्रा तन्त्रेण कार्यमितरेण तु स्वातन्त्र्येण। मांसैरित्यत्र पशोरिति शेषः, "यदि चाल्पतरसम्भारः स्यादपि पशुनैव कुर्वीत" इत्यष्टकान्वष्टके उपक्रम्य गोभिलसूत्रात्। पशुरपि च्छाग एव, "छागोऽनादेशे पशुः" इति गृह्यान्तरात्। छागाभावे तु "अपि वा स्थालीपाकं कुर्वीत" इति गोभिलगृह्यसूत्रात्स्थालीपाक एवानुकल्पः। अत्र विशेषो यथा छन्दोगपरिशिष्टे– "स्थालीपाकं चरुस्थाने कुर्याद्यद्यानुकल्पिकम्। श्रपयेत्तं सवत्सायास्तरुण्या गोः पयस्यमुम्" इति। अन्वष्टकाश्राद्धं "श्वोऽन्वाष्टक्यम्" इति विष्णुस्मृतेरष्टकाश्राद्धोत्तरदिने कार्यम्। "अन्वष्टकास्वष्टकावत्" इति कात्यायनस्मृत्याऽन्वष्टकास्वष्टकाधर्म्मातिदेशाद्द्रव्याद्यत्राप्यष्टकावदेव। इदञ्च श्राद्धं मातृप्रधानमेव। न च "न योषिद्भ्यः पृथग्दद्यादवसानदिनादृते[1]। स्वभर्तृपिण्डमात्रा[2]भ्यस्तृप्तिरासां यतः स्मृता" इत्यादिकात्यायनादि-स्मृत्या क्षयाहव्यतिरेकेण मात्रादिश्राद्धं पृथक् प्रतिषिद्धमिति कथमिदं मातृप्रधानमिति वाच्यम्, "अन्वष्टकासु वृद्धौ च गयायाञ्च क्षयेऽहनि। अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना[3]

---

१. मृताहाद्वार्षिकैकोद्दिष्टादिति यावत्। २. मात्रा अंशः। ३. 'सीतायाः पतये नम'–इत्यादिवदाख्यातः पतिः पतिरिति कल्पनेन लाक्षणिकत्वाद्गौणमुख्यन्यायाद्वा 'पतिः समास एवे'–ति नियमाप्रवृत्त्याऽयं प्रयोगोऽन्यथा नाभावाभावात्। वस्तुतस्तु त्रिशङ्क्वाद्ययाज्ययाजनादिवहषीणां तपोबलादसाधुप्रयोगेऽपि दोषाभावेन तत्र तत्र 'पतये' 'सखिना' इत्याद्यसाध्वेव। नचैवं ब्रह्मयज्ञाध्ययने तदन्तर्गततत्तत्पदप्रयोगः कथमिति वाच्यम्, तपस्विप्रवरैर्ऋषिभिरुच्चारितत्वादस्माकमपि स्मृति–पुराणाध्ययनविधानाच्च। स्वेच्छयेदृशानां प्रयोगस्तु स्यादेव प्रत्यवायाय। अत एव छन्दोवत्कवयः कुर्वन्तीत्युक्त्वा न ह्यषेष्टिरस्तीत्युक्तं नदीसंज्ञासूत्रे भाष्य इति स्पष्टमन्यत्रैव।

सह" इत्यग्निपुराणेन, "अन्वष्टका गया मातृश्राद्धञ्चैव मृतेऽहनि। एकोद्दिष्टं तथा मुक्त्वा स्त्रीषु नान्यत्पृथग्भवेत्" इति शङ्खस्मृत्या, "अन्वष्टकासु च स्त्रीणां श्राद्धं कार्यं तथैव च" इति विष्णुधर्म्मोत्तरेण चान्वष्टकायां, गयायां वृद्धिश्राद्ध एकोद्दिष्टे च पृथगधिकार-प्राप्तेः। अत एव-"अष्टकासु देवपूर्वं शाकमांसापूपैः श्राद्धं दत्त्वाऽन्वष्टकास्वष्टकावद्वह्नौ हुत्वा देवपूर्वमेव मात्रे पितामह्यै प्रपितामह्यै च पूर्ववद्ब्राह्मणान् भोजयित्वा दक्षिणाभिश्चाभ्यर्च्यानुज्ञाप्य विसर्जयेत्" इति विष्णुपुराण उक्तम्।

इह यद्यपि "अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम्। पित्रादिमातृमध्यञ्च ततो मातामहान्तकम्" "पितॄणां प्रथमं दद्यान्मातॄणां तदनन्तरम्। ततो मातामहानाञ्च आन्वष्टक्ये क्रमः स्मृतः" "केवलास्तु त्रये कुर्याद्वृद्धावादौ प्रकीर्त्तिताः। अन्वष्टकासु मध्यस्था नान्त्याः कार्यास्तु मातरः" "वृद्धौ तु मातृपूर्वं वै श्राद्धं कुर्वीत बुद्धिमान्। अन्वष्टकासु सर्वासु पितृपूर्वं समाचरेत्" इति कात्यायन-विष्णुपुराण-च्छागलेय-पुराणसमुच्चय-वचनैर्म्मातृमध्यम्, "अन्वष्टकासु क्रमशो मातृपूर्वं तदिष्यते" "मातृयजनन्वष्टकास्वादितः" इत्यादिब्रह्मपुराण-दीपिकाधृतस्मृत्यादिभिर्म्मातृपूर्वमित्येवंविरोधे मातृश्राद्धमादौ कार्यं मध्ये वेति संशयः सम्भवति तथापि देशाचाराच्छाखाभेदाद्वा व्यवस्था कार्याऽत एवात्र मैथिला मातृपूर्वमेव श्राद्धमाद्रियन्ते। इह "अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम्" इति प्रागनुपदोक्तकात्यायनस्मृतेः पित्रादित्रिक-मात्रादित्रिक-मातामहादित्रिकेति नवदेवत्यं श्राद्धमिति केचित्तदयुक्तम्, आश्विनकृष्णनवम्यधिकरणकश्राद्धस्य द्वादशदेवत्यत्वादन्यथा मातॄणां पृथक्त्वेन मातामह्यादीनामपृथक्त्वेन चार्द्धजरतीयापत्तेस्तथा च पुराणसमुच्चये-"सर्वासामेव मातॄणां श्राद्धं कन्यागते रवौ। नवम्याञ्च प्रदातव्यं ब्रह्मलब्धवरा यतः॥ पितृ-मातृकुले नार्यो याः काश्चित्प्रमृताः स्त्रियः। श्राद्धार्हा मातरो ज्ञेयास्तासां श्राद्धं प्रदापयेत्॥ तमिस्रपक्षनवमी या पुण्या तु नभस्यके। चत्वारः पार्वणाः कार्याः पितृपूर्वा मनीषिभिः॥ पितॄणान्तु त्रयः पिण्डा मातृपूर्वास्तथा त्रयः। मातामहानामप्येवं त्रयो मातामहीषु च॥ एवं कुर्वंस्ततः श्राद्धं पितॄणाञ्च न

---

१. प्रतिपार्वणं पितॄणामेकैकत्रिकसत्त्वेन पार्वणचतुष्टये द्वादशत्वमवगन्तव्यम्।

दोषभाक्'' इति । पितृपूर्वा इति देशान्तराचारपरम् । एवमेव ''पितृभ्यः प्रथमं दद्यान्मातृभ्यस्तदनन्तरम् । ततो मातामहेभ्यश्च तत्पत्नीभ्यस्तथैव च'' ''आदौ पिता ततो माता ततो मातामहस्तथा । मातामह्यास्ततो दद्यात्प्रेतपक्षे तु सर्वदा'' इति सुमन्तुवचनयोरपि । इह यद्यप्यविशेषेण प्रेतपक्षे श्राद्धचतुष्टयोक्तिस्तथापि ''नवानां नवकं वृद्धौ तथैवान्वष्टके विदुः । कुर्याद् द्वादशदै ( दै ) वत्यं प्रेततीर्थे गयासु च'' ''अन्वष्टकायाञ्च महोत्सवेषु श्राद्धक्रिया द्वादशदैवता स्यात्'' ''सर्वासामेव मातृणां श्राद्धं कन्यागते रवौ ।। नवम्याञ्च प्रदातव्यं ब्रह्मलब्धवरा यतः ।। .........तस्मिन्पक्षे नवमी या पुण्या तु नभस्यके । चत्वारः पार्वणाः कार्याः पितृपूर्वा मनीषिभिः'' इत्यादिकात्यायनपुराणसमुच्चयादिवचनैः सहैकवाक्यतानुरोधादाश्विनापरपक्षान्वष्टकामात्रपरत्वं वेदितव्यम् । एवञ्च ''अन्वष्टकासु नवभिः पिण्डैः श्राद्धमुदाहृतम्'' इत्यादिवचनं प्रेतपक्षीयान्वष्टकातिरिक्तान्वष्टकात्रयपरमिति स्पष्टमेव, बहुवचनस्य त्रित्वेनाप्युपपत्तेस्ततश्च ''गयायां पुष्करे चैव तथैवान्वष्टकासु च । पितृमुख्येन[1] कर्त्तव्यं पार्वणानां चतुष्टयम्'' इति वृद्धयाज्ञवल्क्यादिवचनेऽन्वष्टकास्विति बहुवचनमविवक्षितमेव, प्रेतपक्षीयान्वष्टकामात्राधिकरणकपार्वणचतुष्टयविधायकप्रागुक्तवचनानुरोधात् । तस्मात्पितृपक्षान्वष्टकायां, गयायां, पुष्करादितीर्थे च मात्रादित्रिक[2]-पित्रादित्रिक-मातामहादित्रिक-मातामह्यादित्रिकाणां सविश्वदेवानां श्राद्धं कार्यमितरासु तिसृष्वन्वष्टकासु मात्रादित्रिक-पित्रादित्रिक-मातामहादित्रिकाणां तल्लिङ्गेषु सर्वेष्वेव विहितकालेषु क्षयाहवर्जं षट्पुरुषम्, ''पितॄन् मातामहांश्चैव द्विजः श्राद्धेन तर्पयेत्'' ''द्विपार्वणं प्रकर्त्तव्यं विना श्राद्धं क्षयाहनि । पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्'' ''मातुः पितरमारभ्य त्रयो मातामहाः स्मृताः । तेषां तु पितृवच्छ्राद्धं कुर्युर्दुहितृसूनवः'' इत्यादिभ्य ऋष्यशृङ्ग-व्यास-पुलस्त्यादिवचनेभ्यः । इत्थञ्च ''ततः प्रभृति संक्रान्तावुपरागादिपर्वसु । त्रिपिण्डमाचरेच्छ्राद्धम्'' इत्यादिमत्स्यपुराणादिवचनमपि मातामहादिपिण्डत्रिकसंयोजनया पार्वणद्वयपरकमेवेत्यवि-

---

१. पित्रादिक्रमेण । २. पक्षान्तरे त्वादौ पित्रादित्रिकं ततो मात्रादित्रिकमिति न विस्मर्त्तव्यम् ।

रुद्धमेव। "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्। अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्" "पार्वणं कुरुते यस्तु केवलं पितृहेतुतः। मातामहं[1] न कुरुते पितृहा सोऽपजायते[2]" इत्यृष्यश्रृङ्ग-स्कन्दपुराणवचनाभ्यां प्रागुक्तवचनैश्च सहैकवाक्यत्वात्। "शेषेषु पिण्डाः स्युः षडिति स्थितिः" इति कात्यायनेन, "द्विपार्वणं प्रकर्त्तव्यं विना श्राद्धं क्षयाहनि" इत्यृष्यश्रृङ्गेण च मुखतः प्रतिपादितत्वाच्च। क्षयाहे तु "एकस्य च मृतेऽहनि" इत्यादिपराशरादिवचनानुरोधादेकोद्देश्यकमेव श्राद्धं कार्यमिति पर्यवस्यति। 'विना श्राद्धं क्षयाहनी'-त्यस्य क्षयाहाधिकरणकश्राद्धव्यतिरेकेणेत्यर्थः। अत्र सुवासिनीभोजनमावश्यकमुक्तं, मार्कण्डेयपुराणे-"मातुः श्राद्धे तु सम्प्राप्ते ब्राह्मणैः सह भोजनम्। सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत्" इति। वृद्धवसिष्ठस्तु-"मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि। पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः" इत्यनेन विशेषमाह। तत्र व्यवस्था तु देशाचारत एव मिथिलायां ब्राह्मणलाभेपीह[3] सुवासिनीभोजनं सर्वत्र कार्यते। अष्टाविति वृद्धिश्राद्धविषयमिति निर्णयसिन्धुरनादेय एव निर्मूलत्वात्।

पितृपक्षे श्राद्धाकरणे कालमाह यमः—"पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः" इति। आश्विनकृष्णशुक्लोभयपक्षपञ्चमीद्वयाभ्यन्तरे दद्यादिति।तदर्थस्तेनाश्विनकृष्णपक्षे ( पितृपक्षे ) श्राद्धाकरणे आश्विनशुक्लेऽपि पञ्चमीपर्यन्तं श्राद्धं कर्त्तव्यमिति निर्गलति। अत्राप्यकरणे कार्त्तिकामावास्यायां कर्त्तव्यमित्यपि यम एवाह—"येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि। तस्यां दद्यान्न चेद्दत्तं पितृणां वै ( तु ) महालये" इति। दीपान्विता = दीपावली। महालये = पितृपक्षे। तत्राप्यकरणे तुलासंक्रान्ति, मतान्तरे वृश्चिकसंक्रान्ति यावत्कृष्णपक्षे कस्यामपि तिथौ कर्त्तव्यम्,-"यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। शून्यं प्रेतपुरं[4] तावद्वृश्चिकं यावदागतः" इति महाभारतवचनात्। "वृश्चिके सम-

---

१. मातामहादि-सम्बन्धि। २. 'सोऽचि लोपे चेत्पादपूरणम्', इत्यनेन सुलोपोऽत्र। ३. आश्विनान्वष्टकाश्राद्धे। ४. श्राद्धाय स्पृहयन्तः सर्वे एव पितरः प्रेतपुरं परित्यज्य श्राद्धभूमिमुपतिष्ठन्त इति प्रेतपुरस्य शून्यता सिद्धा।

शुद्धमेव। "पितरो यत्र पूज्यन्ते तत्र मातामहा ध्रुवम्। अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेत्" "पार्वणं कुरुते यस्तु केवलं पितृहेतुतः। मातामहं न कुरुते पितृहा सोपजायते" इत्यृष्यशृङ्ग-स्कन्दपुराणवचनाभ्यां प्रागुक्तवचनैश्च सहैकवाक्यत्वात्। "शेषेषु पिण्डाः स्युः षडिति स्थितिः" इति कात्यायनेन, "द्विपार्वणं प्रकर्त्तव्यं विना श्राद्धं क्षयाहनि" इत्यृष्यशृङ्गेण च मुखतः प्रतिपादितत्वाच्च। क्षयाहे तु "एकस्य च मृतेऽहनि" इत्यादिपराशरादिवचनानुरोधादेकोद्देश्यकमेव श्राद्धं कार्यमिति पर्यवस्यति। 'विना श्राद्धं क्षयाहनी'-त्यस्य क्षयाहाधिकरणकश्राद्धव्यतिरेकेणेत्यर्थः। अत्र सुवासिनीभोजनमावश्यकमुक्तं, मार्कण्डेयपुराणे-"मातुः श्राद्धे तु सम्प्राप्ते ब्राह्मणैः सह भोजनम्। सुवासिन्यै प्रदातव्यमिति शातातपोऽब्रवीत्" इति। वृद्धवसिष्ठस्तु-"मातृश्राद्धे तु विप्राणामलाभे पूजयेदपि। पतिपुत्रान्विता भव्या योषितोऽष्टौ कुलोद्भवाः" इत्यनेन विशेषमाह। तत्र व्यवस्था तु देशाचारत एव मिथिलायां ब्राह्मणालाभेपीह सुवासिनीभोजनं सर्वत्र कार्यते। अष्टाविति वृद्धिश्राद्धविषयमिति निर्णयसिन्धुरनादेय एव निर्मूलत्वात्।

पितृपक्षे श्राद्धाकरणे कालमाह यमः—"पञ्चम्योरन्तरे दद्यादुभयोरपि पक्षयोः" इति। आश्विनकृष्णशुक्लोभयपक्षपञ्चमीद्वयाभ्यन्तरे दद्यादिति।तदर्थस्तेनाश्विनकृष्णपक्षे ( पितृपक्षे ) श्राद्धाकरण आश्विनशुक्लेऽपि पञ्चमीपर्यन्तं श्राद्धं कर्त्तव्यमिति निर्गलति। अत्राप्यकरणे कार्त्तिकामावास्यायां कर्त्तव्यमित्यपि यम एवाह-"येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि। तस्यां दद्यान्न चेद्दत्तं पितृणां वै ( तु ) महालये" इति। दीपान्विता = दीपावली। महालये = पितृपक्षे। तत्राप्यकरणे तुलासंक्रान्ति, मतान्तरे वृश्चिकसंक्रान्ति यावत्कृष्णपक्षे कस्यामपि तिथौ कर्त्तव्यम् ,-"यावच्च कन्यातुलयोः क्रमादास्ते दिवाकरः। शून्यं प्रेतपुरं तावद्वृश्चिकं यावदागतः" इति महाभारतवचनात्। "वृश्चिके सम-

---

१. मातामहादि-सम्बन्धि। २. 'सोऽचि लोपे चेत्पादपूरणम्, इत्यनेन सुलोपोऽत्र। ३. आश्विनान्वष्टकाश्राद्धे। ४. श्राद्धाय स्पृहयन्तः सर्वे एव पितरः प्रेतपुरं परित्यज्य श्राद्धभूमिमुपतिष्ठन्त इति प्रेतपुरस्य शून्यता सिद्धा।

भारतोक्तमनुवदति-"सर्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने। अकुर्वाणस्तु तच्छ्राद्धं पङ्के गौरिव सीदति" इति। यत्तु "सूतके मृतके चैव न दोषो राहुदर्शने। तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते" इति वृद्धवसिष्ठवचनं, "स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके" इति व्याघ्रपाद्वचनं, "सर्वे वर्णाः सूतकेऽपि मृतके राहुदर्शने। स्नात्वा श्राद्धम्प्रकुर्वीरन् दानं शाठ्यविवर्जितम्" इति कालादर्श-मदनपारिजातादि-धृतवचनञ्च हेतूकृत्य राहूपरागेऽशौचमध्येऽपि श्राद्धस्य कर्त्तव्यतां ब्रूते कमलाकरस्तन्मैथिलादिसकलशिष्टाऽऽचार-विरुद्धत्वात्, "स्नानमात्रं प्रकुर्वीत दानश्राद्ध-विवर्जितम्" इति राहूपरागाधिकरणकाशौचप्रकरणस्थस्मृति-विरोधाच्चानादरणीयमेव, देशान्तराचारपरत्वेन वोन्नेयम्। सम्वत्सरप्रदीपे मार्कण्डेयः—"एकरात्रमुपोष्यैव राहुं दृष्ट्वा स्वयं नरः। पुण्यमाप्नोति कृत्वा च दानं श्राद्धं विधानतः" इति। रात्रावप्येतच्छ्राद्धं कर्त्तव्यमेव, "स्नानं दानं जपः श्राद्धमनन्तं राहुदर्शने। आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्जयेत्" इति स्मृतेः। अन्यत्र = राहुग्रासादितरत्र। "सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः। तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम्" इति विष्णूक्तेश्च।

एतदपि श्राद्धं नित्यकाम्योभयस्वरूपं संयोगपृथक्त्वन्यायादिति वाचस्पति-केशव-नरहरयो मैथिलमहाभागाः। एतच्च श्राद्धं द्विजानामप्यामान्नेनैव कार्यम्-"आपद्यनग्नौ तीर्थे च चन्द्रसूर्यग्रहे तथा। आमश्राद्धं द्विजैः कार्यं शूद्रेण तु सदैव हि" इति। आमलक्षणं तत्कालनीयत्वञ्च प्रागेवोक्तम्॥॥॥

## अथ नवान्नश्राद्धनिर्णयः।

"गृहमेधी शरद्वसन्तयोर्व्रीहियवाभ्यां यजेत" "व्रीहियवपाकौ च" इति विष्णुसूत्राभ्याम्, "व्रीहिपाके तु कर्त्तव्यं यवपाके च पार्थिव। न तावाद्यौ महाराज विना श्राद्धं कथञ्चन" इति विष्णुधर्म्मोत्तरीयात्, "अकृताग्र(ग्र)यणञ्चैव धान्यजातं द्विजोत्तम। राजमाषानणूंश्चैव मसूरांश्च विवर्जयेत्" इति वराह(वायु)पुराणवचनाच्च शरद्वसन्तशुक्लपक्ष-

१. निर्णयसिन्धुकृत्।

योर्यथाक्रमं व्रीहि(षष्टिधान्य)-यवाभ्यां कार्यम्। आद्यौ = भक्षणीयौ। अणून् = 'अकटा' इति प्रसिद्धक्षुद्रद्विदलानि। अकृताग्र(ग्र)यणम् = अ-सम्पादितप्रथमान्नागमनश्राद्धं, न त्वाग्र(ग्र)यणनामिकेष्टिः-"श्यामाकैरि-क्षुभिश्चैव पितॄणां सार्वकालिकम्। कुर्यादाग्र(ग्र)यणं यस्तु स शीघ्रं फल-माप्नुयात्" इत्यादिवचनानुरोधात्, "राजमाषानणून्" इत्युत्तरार्द्धे वा-क्यभेदापत्तेश्च। नवव्रीह्यादिच्छेदनप्रकारश्च कामधेनुधृतब्रह्मपुराणेऽभि-हितः—"शुक्लपक्षे नवं धान्यं पक्वं ज्ञात्वा सुशोभनम्। गच्छेत्क्षेत्रे विधानेन गीतवाद्यपुरःसरः॥ ...........इत्यारभ्य.......... "तेन देवान् पितॄंश्चैव तर्पयेदर्चयेत्तथा" इत्यन्तेन। इदञ्च श्राद्धं नित्यत्वा-न्नव-व्रीहि-यवाभावे पुराणैरपि तदभावे च शाल्यादिनाऽपि कर्त्तव्यम्, नित्यत्वञ्च प्रागुक्तवचनेन व्रीहियवपाकावभिधाय "पौर्णमासी तथा माघी श्रावणी च नरोत्तम। प्रौष्ठपद्यामतीतायां तथा कृष्णत्रयोदशी॥ एतांस्तु श्राद्धकालान् वै नित्यानाह प्रजापतिः" इत्यनेन विष्णुधर्म्मोत्तरे, नित्य-श्राद्धान्युपक्रम्य-"आमावास्यास्तिस्रोऽष्टकास्तिस्रोऽन्वष्टका माघी श्राव-णी प्रौष्ठपद्यूर्ध्वं कृष्णत्रयोदशी व्रीहि-यवपाकौ च" इत्यनेन विष्णुस्मृतौ च व्यक्तं, विना श्राद्धं व्रीहि-यवभक्षणप्रतिषेधेन तदन्नसंस्कारार्थत्वाच्च। प्रागुक्तवरा( वायु )पुराणवचने 'धान्यजात'मित्युक्तेः प्रतिधान्यमिदमा-वश्यकम्। इदञ्च श्राद्धं नन्दायां, हरिशयने, कृष्णपक्षे, तुला-धनुःस्थे रवौ पौषे चैत्रे त्रयोदश्यां शुक्रे च प्रतिषिद्धम्-"नवान्नं नैव नन्दायां नापि सुप्ते जनार्दने। न कृष्णपक्षे धनुषि तुलायां नैव कारयेत्" "कृष्णपक्षे नवान्नन्तु न कुर्यान्मानवो, यतः। पितरस्तन्न गृह्णन्ति दाता च नरकं व्रजेत्" "पौषे चैत्रे कृष्णपक्षे नवान्नं नाचरेद्बुधः। भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते" "नन्दायां भार्गवदिने त्रयोदश्यां त्रिजन्मनि। श्राद्धमेतेष्वकर्त्तव्यं पुत्रदारधनक्षयात्" इति ज्योतिषधृत-कामधेनुधृत-भोजराजधृत-ज्योतिषधृतवचनेभ्यः। विशेषन्त्वाह वराहपुराणे-"वृश्चिके शुक्लपक्षे तु नवान्नं शस्यते बुधैः। उत्तरे क्रियमाणन्तु धनुष्येव कृतं भवेत्॥ धनुषि यत्कृतं श्राद्धं मृगनेत्रासु रात्रिषु। पितरस्तन्न गृह्णन्ति

---

१. पूजोपकरणसामग्रीमादाय।

नवान्नामिषगर्द्धिनः" इति। ज्यौतिषे भोजराजोऽपि-'वृश्चिके शुक्लपक्षे तु' इत्यादि 'नवान्नामिषगर्द्धिनः (काङ्क्षिणः)' इत्यन्तं प्राग्वदभिधाय "शुक्लपक्षे नवं धान्यं पक्कं ज्ञात्वा सुशोभनम्। सुतिथौ सुमुहूर्त्ते च नवान्नफलभक्षणम्॥ त्रिजन्मसु त्रयोदश्यां नन्दायां पितृभेऽपि वा। श्राद्धं शुक्रदिने नैव कार्यं सन्ततिमिच्छता॥ चैत्रे पौषे कृष्णपक्षे नवान्नं वर्जयेत्सदा। भवेज्जन्मान्तरे रोगी पितॄणां नोपतिष्ठते" इति विशेषो दर्शितः। अत्र चैत्र-पौषयोर्निषेधाद्वृश्चिके तत्प्रतिषेधेन प्राक् तदकरणे माघेऽपि श्राद्धं विधाय नवान्नं भक्षणीयमिति निर्गलति। एतेन वृश्चिकत्रयोदशांशमध्ये कर्त्तव्यमित्यायाति। पूर्वभाग इत्युक्तेः, ज्योतिःसारसमुच्चये-"वृश्चिकस्थे रवौ त्यक्त्वा वासराणि त्रयोदश। नवान्नैर्विहितं श्राद्धं धनुष्येव कृतं भवेत्" इत्यनेन तदुत्तरभागे प्रतिषेधाच्च। एषु वृश्चिके 'शुक्लपक्षे' इति वचनं शुक्लपक्षे विधायकमेव, वचनान्तराणि (ज्योतिषवचनानि) च कृष्णपक्षे निषेधकान्येव। 'कृष्णपक्षे नवान्नन्तु न कुर्यान्मानव-इत्युक्त्वा 'सामान्यनिषेधोऽयमिति कामधेनुकृतः। वृश्चिकशुक्लपक्षे तदकरणे माघेऽपि कर्त्तव्यं प्रागुक्तनित्यत्वहेतोः 'शस्यत' इति शब्दस्वरसाच्चेत्यास्तां विस्तरः॥

## अथ आर्द्रानक्षत्रप्रथमपादे कर्तव्यानिर्णयः।

आर्द्रानक्षत्रप्रथमपादगते रवौ भूमी रजस्वला भवति तत्र स्वाध्यायवषट्कारदेवपितृपूजनादीनि निषिद्धानि तथा च राजमार्त्तण्डे "न स्वाध्यायं वषट्कारं न देवपितृपूजनम्। हलानां योजनञ्चैव बीजानां वपनं तथा॥ दिनत्रयं न कुर्वीत यावत्पृथ्वी रजस्वला। यतिनो व्रतिनश्चैव विधवा च द्विजस्तथा॥ अम्बुवाची दिने नैव पाकं कुर्यान्न भक्षयेत्" इति। "यस्मिन् वारे सहस्रांशुर्यत्काले मिथुनं व्रजेत्। अम्बुवाची भवेन्नित्यं पुनस्तत्कालवारयोः" इति, "रजोयुक् क्ष्माऽम्बुवाची च रौद्राद्यपादगे रवौ" इति च ज्यौतिषवचनाद्रजस्वलाभूमिरेवाऽम्बुवाचीत्युच्यते।

## अथाऽऽभ्युदयिकश्राद्धनिर्णयः।

तत्रादौ गणपति-दुर्गा-श्री-सहित-षोडशमातृकापूजनमावश्यकं-तथा

च च्छन्दोगपरिशिष्टे–“कर्मादिषु च सर्वेषु मातरः सगणाधिपाः। पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः” इति। पूजयन्ति=पुत्र-दार-धनादिसमृद्ध्या संवर्द्धयन्ति। अत्र प्रयत्नेनेत्यभिधानान्मातृकापूजाया आवश्यकत्वं द्योत्यतेऽत एव शातातपः स्मरति–“अकृत्वा मातृयागं तु यः श्राद्धं परिवेषयेत्। तस्य क्रोधसमाविष्टा हिंसामिच्छन्ति मातरः” इति। स्मृत्यन्तरञ्च–“मातृः सम्पूजयित्वा तु पितृभ्यः सुसमाहितः। वृद्धिश्राद्धं ततः कुर्यात्सदाभ्युदयकारकम्” इति। अत्र–क्त्वाश्रुतेर्मातृयागस्य वृद्धिश्राद्धपूर्वकालिकता स्पष्टं प्रतीयते। ल्यबभावश्छान्दसः। मातरश्च–“गौरी पद्मा शची मेधा सावित्री विजया जया। देवसेना स्वधा स्वाहा मातरो लोकमातरः॥ धृतिः पुष्टिस्तथा तुष्टिरात्मनः कुलदेवताः” इति बह्वृचगृह्योक्ता गौर्यादयो यथाक्रमं बोध्याः। इदन्त्ववधेयम्–“आदौ विनायकः पूज्यो ह्यन्ते च कुलदेवताः” इति बह्वृचच्छन्दोगपरिशिष्टयो-र्विनायकपदस्याजहत्स्वार्थलक्षणया दुर्गोपलक्षकत्वेन कुलदेवतापदस्य च श्रिया उपलक्षकत्वेनादौ गणपतिदुर्गयोस्ततो गौर्यादीनां षोडशानां मातृणामन्ते च श्रियाः पूजनं कर्त्तव्यं तथैव मैथिलादिशकलशिष्टाचारात्, “दुर्गाक्षेत्र[1]विनायकाः-वृद्धौ वृद्धौ सदा पूज्याः” इति हेमाद्रिधृतस्मृतेः, “सर्वकामसमृद्ध्यर्थमादौ पूज्यो विनायकः” इति लिङ्गपुराणवचनात्, “श्रियञ्च पूजयेत्पश्चात्ततः कर्म समाचरेत्” इति स्मृतेश्च। इयञ्च मातृका पूजा सति सम्भवे राजतप्रतिमासु तदभावे लिखितपटादिषु तदभावे चाक्षतपुञ्ज-कुड्यस्थगोमयरेखिकादिषु कार्या तथा च च्छन्दोगपरिशिष्टे–“प्रतिमासु च शुद्धासु लिखिता वा पटादिषु। अपि वाऽक्षतपुञ्जेषु नैवेद्यैश्च पृथग्विधैः” इति। शुद्धास्वित्यभिधानात्प्रतिमासु राजतादिषु। आदिना कुड्यादिपरिग्रहः। अन्ते च विन्यस्तरेखिकाणाम्मध्ये कुड्यादौ सवृन्तकदलीफलेन पूगीफलेन बाहुप्रमितस्रुचा घृतमादाय वसोर्द्धारा देयाः तथैव कल्पतरु–श्राद्धप्रयोगादिसम्मतेः। सा च सप्तकृत्वः पञ्च-

---

१. क्षेत्रः = क्षेत्रपालः, एतत्पूजनं विघ्ननिवारकत्वेन दृष्टार्थमिति काम्यमिति निबन्धार इति शुभकर्मनिर्णये मैथिलो मुरारिमिश्रो महाभागः। अत एव कर्तुरिच्छाधीनमिति मैथिला नाचरन्ति।

कृत्वो वा-"कुड्यलग्नां वसोर्द्धारां सप्तधारान् घृतेन तु। कारयेत्पञ्चधारां वा नातिनीचां न चोच्छ्रिताम्" इति कात्यायनपरिशिष्टस्मरणात्। आचारात्तु त्रिरपि भवति। कारयेदिति स्वार्थे णिच् तेन कुर्यादित्यर्थः। धारादानन्तु "एतमुत्य"-मिति मन्त्रेण, माध्यन्दिनीयानां "वसोः पवित्रमसी-"ति मन्त्रेण। एतन्मन्त्रपाठश्च "एकद्रव्ये कर्मावृत्तौ सकृन्मन्त्रवचनं कृतार्थत्वा"दिति कात्यायनोक्तेः सकृदेव न तु धाराकर्मानुसारेण पुनरावर्त्तनीयः सप्तत्वपञ्चत्वाद्यवच्छिन्नधारादानस्यैक्यादिति स्पष्टं संस्काररदीपके। वसुश्चेदिराजस्तमुद्दिश्य धारा-वसुधारा-"यज्ञेषु जुह्वतां विप्रैर्वसोर्द्धारां महात्मभिः। प्राप्स्यसेऽस्मदनुध्यानान्मा च त्वां ग्लानिराविशत्" इति मोक्षधर्मे वसुम्प्रति चेदिवाक्यादिति वाचस्पतिमिश्राः। वस्तुतस्तु-"घृतकुम्भं वसोर्द्धारां पातयेदनलोपरि। औदुम्बरीमथार्द्राञ्च तथा कोटरवर्जिताम्॥ बाहुमात्रीं स्रुचं कुर्यात्ततः स्तम्भद्वयोपरि। घृतधारां तथा सम्यगग्नेरुपरि पातयेत्" इति महार्णवधृतस्मृतेरग्निरेवोद्देश्यो न च तस्य वसुत्वाभावः,-"वसुरग्निर्वसुः सूर्यो वसुर्देवो वसुर्मही। वसु रत्नं वसु द्रव्यं वसवोऽष्टौ धरादयः" इत्यभिधानादत एव प्रागुक्तवचने "यज्ञेषु जुह्वताम्" इति सङ्गच्छते, यज्ञाधिकरणकस्य हवनस्याग्निमात्रोद्देश्यकत्वात्तत्र मोक्षधर्मोक्तवचनं यज्ञधारापरमेवेति शुभकर्मनिर्णये मुरारिमिश्राः। इयञ्च मातृकापूजा "कर्मादिषु च सर्वेषु" इति प्रागुक्तच्छन्दोगपरिशिष्टवचने स्वतन्त्रफलश्रुतेः प्रधानस्वरूपैव न त्वाभ्युदयिकाङ्गभूतेत्यतस्सङ्कल्पः पृथगेव-"ॐ अद्यामुककर्म्मणि गणपतिदुर्गाश्रीसहितषोडशमातृरहं पूजयिष्ये" इत्येवं कर्त्तव्यः। एतेन मातृकापूजनस्य श्राद्धाङ्गतयाऽऽभ्युदयिकश्राद्धसङ्कल्पोत्तरं मातृकापूजनमुचितमिति केषाञ्चिद्वचनमनुचितमेवेत्यन्यत्र प्रपञ्चितम्। इत्थं सविसर्जनां मातृकापूजां कृत्वा वृद्धिश्राद्धमाचरेत्तत्र-"मातृश्राद्धन्तु पूर्वं स्यात्पितॄणां तदनन्तरम्। ततो मातामहादीनां वृद्धौ श्राद्धत्रयं मतम्" इति शातातपवचनात्, "ततो मातामहाश्चैव विश्वेदेवास्तथैव च" इति मत्स्यपुराणवचनाच्च सविश्वदेव-मात्रादित्रिक-पित्रादित्रिक-मातामहादित्रिकश्राद्धं कर्त्तव्यम्। यत्तु-

१. रूपनारायणादिसम्मतोऽप्ययेषपक्षः।

"विश्वदेवविहीनन्तु केचिदिच्छन्ति सत्तमाः" इति मातृश्राद्धे विश्वदेव-श्राद्धनिषेधकं-मार्कण्डेयपुराणं तच्छाखान्तरपरतया कथञ्चिन्नेयम्। "पिशाचा राक्षसा यक्षा भूता नानाविधास्तथा। तत्पालनाय विहिता विश्वेदेवाः स्वयम्भुवा" इति स्मृतेर्विश्वदेवश्राद्धस्याऽऽवश्यकत्वप्रदर्शनात्। तत्र कस्मिञ्छ्राद्धे किन्नामको विश्वदेव इत्याह-"इष्टिश्राद्धे क्रतुर्दक्षः सत्यो नान्दीमुखे वसुः। नैमित्तिके काल-कामौ काम्ये च धुरिलोचनौ॥ पुरूरवा माद्रवाश्च पार्वणे समुदाहृतौ" इति। एवञ्च क्रतु-दक्ष-सत्य-वसु-काल-काम-धुरि-लोचन-पुरूरवोमाद्रवसो विश्वेदेवास्तेषु प्रतिश्राद्धं द्वौ द्वौ विवक्षितौ तथाहि-इष्टिश्राद्धे क्रतु-दक्षौ, नान्दीश्राद्धे सत्य-वसू, नैमित्तिके=ग्रहणादिनिमित्तके काल-कामौ काम्ये-धुरि-लोचनौ, पार्वणे च पुरूरवोमाद्रवसौ। इति। आदित्यपुराणे-"विश्वेदेवाः क्रतु-र्दक्षः सर्वास्विष्टिषु कीर्त्तितौ। नित्यं नान्दीमुखश्राद्धे वसु-सत्यौ च पैतृके॥ नवान्नलभने देवौ काल-कामौ सदैव हि। अपि कन्यागते सूर्ये श्राद्धे च धुरि-लोचनौ॥ पुरूरवार्द्रवौ चैव विश्वेदेवाश्च पार्वणे" इति विशेषः कश्चित्। पैतृके=पित्रुद्देश्यके श्राद्धे। नवान्नलभने=नवान्नं लभत इति तथा-नवान्ननिमित्तके श्राद्ध इत्यर्थः। "विकिरं-वैश्वदेवि-कम्" "सा वैश्वदेव्यामिक्षा" इत्यादिश्रुतेः "वैश्वदेवन्तु तान्त्रिकम्" इत्यादिस्मृतेश्च समासे 'विश्वदेव' पदमेव साधु न तु 'विश्वेदेवा' इती-त्यन्यत्र प्रपञ्चितम्। एतच्चाभ्युदयिकम् "वृद्धौ न तर्पिता ये वै पितरो गृहमेधिभिः। तद्धीनमफलं ज्ञेयमासुरो विधिरेव सः" इति शातातपस्मृते-रावश्यकम्। यद्यपि "मातृश्राद्धन्तु पूर्वेद्युः कर्म्माहनि तु पैतृकम्। माता-महं चोत्तरेद्युर्वृद्धौ श्राद्धत्रयं स्मृतम्" इति गार्ग्यवचनात्कर्म्मपूर्वदिने मातृश्राद्धं, कर्म्मदिने पित्रादित्रिकश्राद्धं तदुत्तरदिने च मातामहादित्रिक-श्राद्धमित्यायाति तथापि "पृथग्दिनेष्वशक्तश्चेदेकस्मिन्नपि वासरे। श्राद्ध-त्रयं प्रकुर्वीत वैश्वदेवन्तु तान्त्रिकम्" इति गार्ग्यवचनात्, "अलाभे भिन्नकालानां नान्दीश्राद्धत्रयं बुधः। पूर्वेद्युर्वै प्रकुर्वीत पूर्वाह्णे मातृपूर्व-कम्" इति मनुवचनादाचाराच्चैकस्मिन्नपि दिने कार्यम्। तत्र "महत्सु पूर्वेद्युस्तदहरल्पेषु" इति गृह्यपरिशिष्टवचनान्महत्सु दर्शपूर्णमासादिषु यागेषु पूर्वदिने, अल्पेषु चूडाकरणोपनयनविवाहादिषु तद्दिन एवेति

नाचारविरोधोऽपि । एतच्छ्राद्धोद्देश्यभूताः पितरो नान्दीमुखा उच्यन्ते "नान्दीमुखाः पितरः प्रीयन्ताम्" इति गोभिलगृह्यसूत्रात्, "नान्दीमुखान्पितृगणानभ्यर्चेत्प्रयतो गृही" इति शुभकर्म्मनिर्णयधृतस्मृतेः, "पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम्" इति ब्रह्मपुराणवचनात्, "नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही" इति विष्णुपुराणात्, "नान्दीमुखानां प्रत्यब्दं कन्याराशिगते रवौ । पौर्णमास्यां तु कर्त्तव्यं वराहवचनं यथा" इति हेमाद्रिधृत-ब्रह्मपुराण-मार्कण्डेयपुराणाभ्याञ्च । विग्रहस्तु "नान्द्यर्थं = वृद्ध्यर्थं मुखं येषा'-मिति । यत्तु "पिता पितामहश्चैव तथैव प्रपितामहः । त्रयो ह्यश्रुमुखा ह्येते पितरः परिकीर्त्तिताः ॥ एभ्यः पूर्वतरा ये च प्रजावन्तः सुखैषि(धि)ताः । ते तु नान्दीमुखा नान्दी समृद्धिरिति कथ्यते" इति ब्रह्मपुराणवचनेन पित्रादित्रिकपूर्वपुरुषत्रिकस्य नान्दीमुखत्वप्रतिपादनं तज्जीवत्पित्रादित्रिकविषयं तेषामेवाश्रुमुखत्वस्य प्रायेण सम्भवाच्छाखान्तरविषयं वाऽवगन्तव्यम् । यत्तु 'नान्दीमुखे विवाहे च प्रपितामहपूर्वकम् । वाक्यमुच्चारयेद्धीमानन्यत्र पितृपूर्वकम्" इति वचने नान्दीमुखपदस्य श्राद्धपरत्वमुद्वाहतत्त्वादौ प्रतिपादितं तदजहत्स्वार्थवृत्त्येति न तद्विरोधः । अत एव "कर्तुं नान्दीमुखं द्विजः" इत्यादिशाट्यायनादिवचनं सङ्गच्छते । इदञ्च श्राद्धं सपिण्डमपिण्डञ्च "पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे कुलाचारदेशकालाद्यवेक्ष्य हि" इति मार्कण्डेयपुराणात् । "पिण्डनिर्वपणं कुर्यान्न वा कुर्याद्विचक्षणः । वृद्धिश्राद्धे महाबाहो कुलधर्म्मानवेक्ष्य च" इति भविष्यपुराणाच्च । तत्र पिण्डदानपक्ष आवाहनादि कार्यं तदभावे च नेत्याह छागलेयः—"अग्नौकरणमर्घ्यञ्चावाहनञ्चावनेजनम् । पिण्डश्राद्धे प्रकुर्वीत पिण्डहीने विवर्जयेत्" इति । पिण्डाश्च दधि-मधु-यव-तण्डुल-बदरीफलैः सम्पाद्यास्तथा च ब्रह्मपुराणम्—"शाल्यन्नं दधिमध्वक्तं बदराणि यवास्तथा । मिश्रीकृत्य तु चत्वारि पिण्डाञ्छ्रीफलसन्निभान् ॥ दद्यान्नान्दीमुखेभ्यस्तु पितृभ्यो विधिपूर्वकम्" इति । चत्वारीति दधिमधुनोरन्यतरत्वोपदेशात् । अत एव "सर्वस्मादन्नमुद्धृत्य व्यञ्जनैरुपसिच्य च । संयोज्य यव-कर्कन्धू-दधिभिः प्राङ्मुखस्ततः ॥ अवनेजनवत्पिण्डान्दत्त्वा बिल्वप्रमाणकान् । तत्पात्रक्षालनेनाथ पुनरप्यवनेजयेत्" इति छन्दोगपरिशिष्टे मधुनोऽनुक्तिः ।

"दधि-बदराक्षतमिश्रान् पिण्डान्" इति गोभिले तु प्रकरणाद्यवग्रहणम्[1]। प्रोक्तपरिशिष्टे 'प्राङ्मुख' इत्युपादानादत्र पिण्डदानं प्राङ्मुख एव कुर्यात्। पिण्डदानोत्तरं विशेषमाह तत्रैव-"अर्घ्यं पुष्पञ्च धूपञ्च प्रशस्तमनुलेपनम्। वासश्चाप्यहतं वस्त्रं देयञ्च सदशं समम्॥ द्राक्षाऽऽमलकमूलानि यवांश्च विनिवेदयेत्। तान्येव दक्षिणाञ्चैव दद्याद्विप्रेषु सर्वदा" इति। सदशम् = दशाभिरञ्चलैः सहितम्, 'दशापवित्रेण ग्रहं सम्मार्ष्टि' इत्यादौ 'दशा' पदेन वस्त्राञ्चलस्य मीमांसायां व्याख्यातत्वात्। परिशिष्टे च "प्रागग्रेष्वथ दर्भेषु आद्यमामन्त्र्य पूर्ववत्। अपः क्षिपेन्मूलदेशेऽवनेनिक्ष्वेति निस्तिलाः॥ द्वितीयञ्च तृतीयञ्च मध्यदेशाग्रदेशयोः। मातामहप्रभृतींस्तु तेषामेव हि वामतः" इत्यनेन पित्राद्यवनेजनवामतो मातामहाद्यवनेजनाभिधानात्, "यथावनिक्तं पिण्डान्ददाति" इति स्मरणात्पिण्डदानेऽपि स एव क्रमोऽवगन्तव्यः। एतेन 'प्रदक्षिणमुपचार' इति गोभिलवाक्यान्मात्रादिपिण्डदक्षिणभागे पित्रादिपिण्डास्तद्दक्षिणभागे च मातामहादिपिण्डा इति वदन्तः परास्ताः। 'प्रदक्षिणमुपचार' इति वचनन्तु "अपसव्यं ततः कृत्वा पितॄणामप्रदक्षिणम्" इति याज्ञवल्क्यवचनेन देवकर्म्मोत्तरं पितृकर्म्मणि सर्वत्र प्राप्तस्य वामोपचारस्य निरासार्थमिति नासमञ्जसम्। आभ्युदयिके यद्यपि "नान्दीमुखे विवाहे च प्रपितामहपूर्वकम्। वाक्यमुच्चारयेद्धीमानन्यत्र पितृपूर्वकम्" इति प्रागुक्ताद्वचनात्प्रपितामहादिक्रमेणैव वाक्यमुच्चारणीयं न तु पित्रादिक्रमेणेति प्रमाणयितुं शक्यते तथापि बहुप्रामाणिकोपदेशादाचाराच्च पित्रादिक्रम एवाद्रियते। इह श्राद्धे पित्राद्यर्घपात्राधिकरणकयवप्रक्षेपे तिलक्षेपमन्त्रस्यैवातिदेशः स च "यवोऽसि सोमदेवत्यो गोसवो देवनिर्म्मितः। प्रत्नमद्भिः पृक्तः पुष्ट्या नान्दीमुखाँल्लोकान्प्रीणाहि नः स्वाहे" ति भेदेन पठनीयः। 'नान्दीमुखान् पितॄल्लोकान् प्रीणाहि नः स्वाहे'-ति 'पितृ'-पदस्याधिकस्य प्रदानन्तु निष्प्रमाणमेवेति प्रमाणयिष्यतेऽनुपदमेतदग्रे-भूस्वामिनेऽन्नदानमाभ्युदयिकबहिर्भूतश्राद्धविषयमिति नेह तत्कार्यं, प्रमाणाभावात्। अक्षय्य-

---

1. केचित्त्वत्र प्रकरणेऽक्षतपदेनैव यवग्रहणम्, 'अक्षताश्च यवाः प्रोक्ता' इति भट्टनारायणोक्तेरिति' वदन्ति तन्मते 'दधिबदराक्षते'त्यत्राक्षता एवयवा बोध्याः।

स्थाने च 'नान्दीमुखाः पितरः प्रीयन्ता' मित्येव न तु 'अक्षय्यासनयोः षष्ठी'त्यस्यात्रादरस्तथैव कात्यायनेन सूत्रितत्वात्।[1] 'अत्र पितरो मादयध्वम्' इत्यादौ 'अत्र नान्दीमुखाः पितरो मादयध्वम्' इत्यादिर्वाक्यभेदस्त्वप्रामाणिकत्वादसङ्गत एव। दक्षिणादानन्त्वत्राप्यावश्यकमेव 'हतो यज्ञो ह्यदक्षिण'-इति स्मरणात्। दक्षिणाद्रव्यन्तु फलमूले एव तथैव शिष्टाचारादपि। तद्वाक्येऽत एव 'इमे फलमूले वनस्पतिदैवते' इत्युपादानमावश्यकं मन्यते। 'द्राक्षामलकमूलानि' इत्यारभ्य 'तान्येव दक्षिणां दद्या'-दित्यन्तं छन्दोगपरिशिष्टमप्यत्र मूलम्। इदञ्च श्राद्धं-"निषेककाले सोमे च सीमन्तोन्नयने तथा। ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमिष्यते" इति भविष्यपुराणवचनात्कतिपु चित्कर्मस्वङ्गं न विवाहादौ। "ज्ञेये पुंसवने चैव सीमन्तोन्नयने तथा। एतेष्वेव प्रधानेषु श्राद्धं कर्माङ्गमिष्यते" इति स्मृतावेवकारेण यावद्वचनं हि वाचनिकमिति न्यायेन च निषेकादिमात्रपरत्वनिश्चयादित्यकृतसपिण्डनस्याधिकारिणः कन्यापुत्रविवाह आभ्युदयिकानधिकारात्तदकरणेऽपि न विवाहवैगुण्यमापतितुमर्हति। एतेन निषेककाल इत्यादिभविष्यपुराणवचनस्य विवाहादेरप्युपलक्षकत्वमाश्रित्य विवाहादिमहादानादावपीदमङ्गमेवेत्येतदकरणेऽङ्गवैकल्यप्रयुक्तं प्रधानकर्मणोऽपि वैगुण्यं स्यादेवेत्यपास्तम्। प्राक्प्रतिपादितदिशोपलक्षकत्वे प्रमाणाभावात्। एतत् पुत्रजन्मादौ नैमित्तिकमेव "नैमित्तिकमथो वक्ष्ये श्राद्धमभ्युदयात्मकम्। पुत्रजन्मनि तत्कार्यं जातकर्मसमं नरैः" इति मार्कण्डेयपुराणात्। अत्र पुत्रजन्मपदं विवाहादेरप्युपलक्षणं "कन्यापुत्रविवाहेषु" इति विष्णुपुराणे निमित्तार्थकसप्तमीश्रुतेः। वस्तुतस्तु "नान्दीमुखेभ्यः श्राद्धन्तु पितृभ्यः कार्यसिद्धये। ततो विवाहः कर्त्तव्यः शुभः शुभफलप्रदः" इत्यर्थवादस्मृतेर्विवाहे काम्यमेवेदमिति केनचित्प्रतिबन्धकेनैतदकृत्वापि विवाहकरणे न दोषः। पुत्रस्य प्रथमविवाह एवाभ्युदयिकं न द्वितीयादौ, तत एव संस्कारसिद्धेरिति महामहोपाध्याय-मैथिल-मुरारिप्रभृतयः। आश्वलायनः-"तिलोऽसीति पदस्थाने यवोऽसीति पदं वदेत्। स्वधयेति पदस्थाने पुष्ट्या शब्दं वदेदिह॥ पितृनिति पदस्थाने वदेन्नान्दी-

---

१. 'नान्दीमुखाः पितरः प्रीयन्तामित्यक्षय्यस्थाने' इति हि कात्यायनसूत्रस्वरूपम्।

मुखानिति" इति। क्वचित् 'पितृनिति पदात्पूर्वम्' इति पाठः। एतद्वचनानुरोधेन "नान्दीमुखाः पितरः प्रीयन्ताम्" इति प्रोक्तगोभिलसूत्रानुरोधेन च पितृपदात्प्राङ् नान्दीमुखपदप्रयोगस्त्यागवाक्येषु कर्त्तव्यो वस्तुतस्तु तिलोऽसीत्याश्वलायनवचनमत्र न प्रमाणं तस्य 'तिलोऽसि सोमदेवत्य' इति वैदिकमन्त्रस्थ 'तिलोऽसि' 'स्वधया' 'पितॄन्' इति पदत्रये यथाक्रमं 'यवोऽसि' 'पुष्ट्या' 'नान्दीमुखान्' इति प्रयोक्तव्यमित्यत्रैव तात्पर्यात्। 'पितृनिति पदात्पूर्वम्' इति पाठश्च पूर्वापराननुसन्धानमूलक एवेति प्रतिभाति। किञ्चिद्विशेषमाह कात्यायनः—"प्रातरामन्त्रितान् विप्रान् युग्मानुभयतः स्थितान्। उपवेश्य कुशान्दद्यादृजुनैव हि पाणिना॥ निपातो नहि सव्यस्य जानुनो विद्यते क्वचित्। सदा परिचरेद्भक्त्या पितॄनप्यत्र देववत्। नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते। पात्राणां पूरणादीनि दैवेनैव हि कारयेत्॥ सव्येन सोपवीतेन ऋजुदर्भैश्च धीमता। पितॄणां रूपमास्थाय देवा ह्यन्नं समश्नुते॥ तस्मात्सव्येन दातव्यं वृद्धिश्राद्धेषु नित्यशः। मधुमध्विति यस्तत्र त्रिर्जपोऽशितुमिच्छताम्॥ गायत्र्यनन्तरं सोऽत्र मधुमन्त्रविवर्जितः। न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम्। निपातः = पातनम्। सव्यस्य = वामस्य। ऋजुदर्भैरित्यासनादौ सर्वत्र ऋजव एव दर्भाः। समश्नुत इत्येकवचनं छान्दसत्वात्सन्तव्यम्। मधुमध्विवतीति तत्र = प्रकृतिभूते पार्वणेऽन्नोत्सर्गोत्तरं भोजनात्प्राग्गायत्री–मधुवातेति मन्त्रपाठानन्तरं यो मधुमधुमध्विति त्रिर्जपः सोऽत्र विकृतिभूत आभ्युदयिके मधुवातेति मन्त्रविवर्जितः कार्यो न तु 'प्रकृतिवद्विकृतिः कर्त्तव्या' इति न्यायान्मधुमन्त्रपाठोऽपीत्यर्थः। एष च मधुमन्त्रनिषेधः समस्त एवाभ्युदयिक इति श्राद्धप्रदीपः। पितृसंहिताम् = पितृमन्त्रान्। अपि च–"अथाग्रभूमिमासिञ्चेत्सुसुप्रोक्षितमस्त्विति। शिवा आपः सन्त्विति च युग्मानेवोदकेन च॥ सौमनस्यमस्त्विति च पुष्पदानमनन्तरम्। अक्षतञ्चारिष्टमस्त्वित्यक्षतानपि दापयेत्॥ अक्षय्योदकदानन्तु ह्यर्घ्यदानवदिष्यते। षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन॥ प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः। पवित्रान्तर्हितान् पिण्डान् सि-

१. अव्ययमिदम्। "किञ्चिदीषन्मनागल्पे" इत्यमरः।

च्छेदुत्तानपात्रकृत् ।। युग्मानेव स्वस्तिवाच्यानङ्गुष्ठग्रहणं सदा । कृत्वा धुर्य्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः'' इति । सपिण्डीकरणस्य कर्त्तव्यत्वे तदुत्तरमेवाभ्युदयिकं कार्य्यं न तु ततः प्राक् "भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा । सहपिण्डक्रियां कृत्वा पश्चादभ्युदयं चरेत्'' इति ...... स्मरणात् । अत्र क्त्वाप्रत्ययेन समानकर्तृकत्वादेव पौर्वापर्यावगतेः कर्तृपरमेवेदं वचनं न तु यस्य ( मृतस्य ) सपिण्डनं न कृतमस्ति तस्यैवाभ्युदयिकं न कर्त्तव्यं तदितरस्य तु कर्तव्यमेवेत्यर्थपरम् । षोडशश्राद्धादौ विहितकालिकाधिकारिज्येष्ठाभावदशायां कनिष्ठेष्वपि सहकारियोग्यतायाः सत्त्वेन तद्विनिगमनया पुत्रत्वमेव सकलश्राद्धाधिकारितावच्छेदकं लाघवान्न तु ज्येष्ठत्वमात्रमिति कनिष्ठेनापि सपिण्डनाभ्यन्तरे कन्याविवाहादिष्वाभ्युदयिक न कर्त्तव्यमेवेति विस्तरोऽन्यत्र । यत्तु "वृद्धिश्राद्धविहीनस्तु प्रेतश्राद्धानि यश्चरेत् । स श्राद्धी नरके घोरे पितृभिः सह मज्जति'' इत्युशनोवचनं, यच्च-"प्रेतश्राद्धानि शिष्टानि सपिण्डीकरणं तथा । अपकृष्यापि कुर्वीत कर्त्तुं नान्दीमुखं द्विजः'' इति शाट्यायनिवचनञ्च तन्मिथिलादिशिष्टदेशाचारविरुद्धत्वाद्देशान्तराचारपरं शाखान्तरपरं वा कथञ्चिन्नेयम् । अथ यदर्थं वृद्धिश्राद्धं कृतम्भवेत्तस्य कर्म्मणः केन चिद्विघ्नेन तद्दिनेऽननुष्ठाय दिनान्तरे क्रियमाणत्वे ततः पूर्वं पुनरपि तदङ्गतया वृद्धिश्राद्धं कार्य्यमेव "प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः । तदङ्गस्याक्रियायान्तु नाऽऽवृत्तिर्न च तत् क्रिया'' इति प्रागुक्ते छन्दोगपरिशिष्टे प्रधानानुरोधेनाङ्गस्य पुनराचरणाभिधानात् ।। "ध्रियमाणे तु पितरि पूर्वेषामेव निर्वपेत्'' इत्यादिमन्वादिवचनाज्जीवत्पितृकेणापि यो यो जीवति पित्रादिस्तं तं परित्यज्याभ्युदयिकं कार्यम् । "स-पितुः पितृकृत्येषु त्वधिकारो न विद्यते'' इति वचनञ्च पार्वणादिविषयमिति न तद्विरोधः । एतच्च श्राद्धं- "पार्वणञ्चापराह्णे तु प्रातर्वृद्धिनिमित्तकम्'' । इति शातातपोक्तेः, "पूर्वाह्णे मातृकं श्राद्धमपराह्णे तु पैतृकम् । एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्'' इति मत्स्यपुराणवचनाच्छिष्टाऽऽचाराच्च पूर्वाह्णे एव कार्यं, पुत्रजन्मनि तु-"पूर्वाह्णे वै भवेद्वृद्धिर्विना जन्मनिमित्तकम् । पुत्रजन्मनि कुर्वीत श्राद्धं तात्कालिकं बुधः'' इति स्मरणात्सद्य एव न तु पूर्वाह्णनियमः ।

एतच्छ्राद्धकरणप्रकारमाहतुः कात्यायनश्छन्दोगपरिशिष्टञ्च—“स्वपितृभ्यः पिता दद्यात्सुतसंस्कारकर्मणि । पिण्डानोद्वाहनात्तेषां तस्याभावे तु तत्क्रमात्” इति । सुता च सुतश्च सुतौ पुमान्स्त्रियेत्येकशेषस्तयोः संस्कारकर्म = जातकर्मनामकरणचूडाकरणोपनयनविवाहरूपं तस्मिंस्तत्तत्कर्मकर्त्ता यदि पिता स्यात्तदा स स्वपितृभ्यः पिण्डान्दद्यात् = आभ्युदयिकं श्राद्धं कुर्यात् । पिण्डरूपेणाङ्गेन प्रधानस्य श्राद्धस्य लक्षितत्वात् 'पिण्डदोऽशहरः' इत्यादौ तथा दर्शनात् । ओद्वाहनादित्यत्र आ + उद्वाहनादिति च्छेदोऽभिविधौ चायमाङ् तेन विवाहपर्यन्तमित्यर्थः । तेषां = संस्करणीयसुतपितुः पितॄणाम् । तस्य = संस्करणीयसुतपितुः । अभावे = असत्त्वे अभावोऽत्र विनाशरूपः तत्क्रमात् = तं=संस्करणीयसुतपितरमादाय क्रमस्तेन = संस्करणीयसुतपित्रा सह वा क्रमस्तत्क्रमस्तस्मात्—ततश्च संस्करणीयसुतस्य पितृ—पितामह—प्रपितामहानां संस्करणीयसुतपितुर्मातामह—प्रमातामहवृद्धप्रमातामहानाञ्च तदा श्राद्धमिति निर्गलतीति केचित्, वस्तुतस्तु संस्करणीयपित्रभावे यस्तत्कर्मकर्त्ता स संस्करणीयमाणवकादेः पितृपितामहप्रपितामहानां मातामह—प्रमातामह—वृद्धप्रमातामहानां मातृ—पितामही—प्रपितामहीनाञ्च श्राद्धं कुर्यादित्येव चतुर्थचरणार्थः क्रमव्यवच्छेदक 'तु' शब्दानुरोधेन तत्क्रमादित्यस्य संस्करणीयक्रमादित्येवार्थात् । संस्करणीयः स्वयं यथा करोति तथा तत्पितुरसत्त्वे तत्संस्कर्त्ता कुर्यादिति हि तत्क्रमपदार्थः यत्त्वत्र पक्षे संस्करणीयपितुर्विधेयतया स्वपितृभ्य इत्यनेन प्राप्तानां षण्णाम्मध्ये संस्करणीयपितामह प्रपितामहयोरेवानूद्यतया तेषामिति बहुवचनासङ्गतिस्तेषामित्यस्य संस्कार्यपितॄणामिति तु नार्थोऽप्रस्तुतत्वादिति तं = संस्कार्यपितरमादाय क्रमस्तत्क्रम इत्येव व्याख्यानं युक्तमितरथा तत्क्रमादित्यत्रत्यतत्पदेन सुतसंस्कारकर्मणीत्येतद्घटकोपसर्जनसुतपरामर्शापत्तेः । एवं सत्यनुवादापत्तिस्तु न, अप्राप्तसंस्करणीयपितृविधायकत्वात् 'भूतभव्यसमुच्चारणे भूतं भव्यायोपदिश्यते' इति न्यायादिति मुरारिमिश्रास्तन्न, कल्पनागौरवभिया तादृक्समासस्यानादरणात् । तेषामिति बहुवचनास-

---

१. इहैकवचनं जात्येकत्वात् । २. एतेन तत्क्रमादित्यत्र षष्ठीतत्पुरुष इति सूचितम् । ३. तमादाय क्रम इत्येवं रूपस्य ।

ङ्गतिस्तु न, संस्कार्यक्रमपक्षेऽपि श्राद्धोद्देश्यतया संस्कार्यपितामह-प्रपितामह-मातामह-प्रमातामहवृद्धप्रमातामहानां सत्त्वात्तच्छब्दस्य च बुद्धिस्थपरामर्शकत्वात् । तच्छब्देनोपसर्जनपरामर्शस्तु न दोषाय 'पटोलपत्रं पित्तघ्नं मूलं तस्य कफापहम्' इत्यादौ तथा दर्शनात् । तस्याभाव इत्यत्रत्यतदा[1] पितुः परामर्शोऽत्यन्तसन्निधेरनन्तरोच्चारिततत्क्रमादित्यत्रत्यतदापि तस्यैव परामर्शो युक्त इति तु न युक्तं, तच्छब्दस्य बुद्धिस्थवाचकत्वमेव नानन्तर्यादिवाचकत्वमिति सर्वसम्मतत्वात्प्रत्युत तस्याभावे तु तत्क्रमादित्यत्र तस्य = पितुरभावे तु तत्क्रमात् = संस्कार्यसुतक्रमादित्येव सहृदयसाक्षिकोऽक्षरार्थो लभ्यते इति लाघवादौचित्याच्च तत्क्रमादित्यत्र षष्ठीतत्पुरुष एवेति मे प्रतिभाति । अत एव-"अष्टौ संस्कारकर्माणि गर्भाधानमिव स्वयम् । पिता कुर्यात्तदन्यो वा- तस्याभावे तु तत्क्रमात्" इति स्मृत्या जीवति पितरि तस्य तदतिरिक्तस्य वा संस्कर्तृत्वे साम्यमुक्त्वा तस्याभावे त्वित्यादिना तद्वैषम्यप्रदर्शनं सङ्गच्छते, भवन्मते तत्क्रमादित्यनेन पितृक्रमादित्येव लब्धव्ये तस्य 'पिता कुर्यात्तदन्यो वा' इत्यनेनैव सिद्धौ 'तस्याभावे तु तत्क्रमात्' इत्यंशवैयर्थ्यस्य वज्रलेपायितत्वात् । एतद्वचनबलादेव जीवति पितरि तदतिरिक्तः संस्कर्त्ता संस्करणीयपितृक्रमेणैव श्राद्धं कुर्यादित्यायाति साम्यप्रतिपादकवाशब्दस्वारस्यादिति दिक् ।

एतच्छ्राद्धनिमित्तान्याह विष्णुपुराणम्—

> "कन्यापुत्रविवाहेषु प्रवेशे नववेश्मनः ।
> नामकर्म्मणि बालानां चूडाकर्म्मादिके तथा ॥
> सीमन्तोन्नयने चैव पुत्रादिमुखद ने ।
> नान्दीमुखं पितृगणं पूजयेत्प्रयतो गृही" इति ॥

चूडाकर्म्मादिक इत्यादिग्रहणादुपनयनपरिग्रहः । एवञ्च चूडाकरणात्प्राङ्निष्क्रमणान्नप्राशनयोराभ्युदयिकं न कार्यम् । अन्नादिपदस्य प्रकारवाचित्वे तु नामकरणस्य पृथगुपादानं व्यर्थं स्यादित्यवधेयम् । मत्स्यपुराणम्-

"उत्सवानन्दसन्ताने यज्ञोद्वाहादिमङ्गले । मातरः प्रथमं पूज्याः पितरस्तदनन्तरम् ॥ ततो मातामहाश्चैव विश्वेदेवास्तथैव च" इति । उत्सवाऽऽ-

---

१. तच्छब्देन ।

नन्दसन्ताने = उत्सवाऽऽनन्दहेतुभूतसन्तानोत्पत्तौ । अत्रोद्वाहादीत्यादिना चूडाकरणादिपरिग्रहः । पुनस्तदेवाह-"अन्नप्राशे च सीमन्ते पुत्रोत्पत्तिनिमित्तके । पुंसवे च निषेके च नववेश्मप्रवेशने ॥ देवव्रते जलादीनां प्रतिष्ठायां तथैव च ( विशेषतः ) । तीर्थयात्रा-वृषोत्सर्गे वृद्धिश्राद्धं प्रकीर्त्तितम् ॥ इति । निषेके = गर्भाधाने । ब्रह्मपुराणम्—"कर्म्मण्यथाभ्युदयिके मङ्गल्यवति शोभने । जन्मन्यथोपनयने विवाहे पुत्रकस्य च ॥ पितॄन्नान्दीमुखान्नाम तर्पयेद्विधिपूर्वकम् । देवव्रतेषु चाऽऽधानयज्ञपुंसवनेषु च ॥ नवान्नभोजने स्नान ऊढायाः प्रथमार्त्तवे । देवाऽऽरामतडागादि-प्रतिष्ठाद्युत्सवेषु च ॥ राजाभिषेके बालान्नभोजने वृद्धिसंज्ञकान् । व(वा)नस्थाद्याश्रमं गच्छन् पूर्वेद्युः सद्य एव वा ॥ पितॄन् पूर्वोक्तविधिना तर्प्पयेत्कर्म्मसिद्धये" इति । आभ्युदयिके = अभ्युदयप्रयोजनके । शोभने = प्रशस्ते-तुलापुरुषदानादौ । विष्णुपुराणम्-"यज्ञोद्वाहप्रतिष्ठासु मेखलाबन्धमोक्षयोः । पुत्रोत्पत्तौ वृषोत्सर्गे वृद्धिश्राद्धं समाचरेत्" इति । प्रतिष्ठा = देवमूर्त्तिस्थापनादिः । मेखलाबन्धः = उपनयनम् । कालादर्शबोपदेवौ च-"सीमन्तव्रतचौलनामकरणान्नप्राशनोपायनस्नानाऽऽधानविवाह-यज्ञ-तनयोत्पत्ति-प्रतिष्ठासु च । पुंसूत्यावसथप्रवेशनसुताऽऽस्याद्यावलोकाऽऽश्रमस्वीकार-क्षितिपाभिषेकदयिताऽऽद्यर्त्तौ च नान्दीमुखम्" इति । चौलं = चूडाकरणम् । उपायनमुपाकर्म्म । आधानं = गर्भाधानम् । तनयेति-तनयश्च तनया च तनयौ पुमान्स्त्रियेत्येकशेषस्तयोरुत्पत्तिरित्यर्थः । पुंसूतिः = पुंसवनम् । आवसथप्रवेशनं = गृहप्रवेशः । सुतेति-इहापि पूर्ववत्सुता च सुतश्चेत्येकशेषे सुतौ तयोरास्यं = मुखं-सुताऽऽस्यं तस्याद्यः = प्रथमोऽवलोको दर्शनमित्यर्थः । आश्रमस्वीकारो वानप्रस्थाद्याश्रमान्तरपरिग्रहः । दयिताऽऽद्यर्तुः = स्त्रियाः प्रथमऋतुधर्म्मः । कूर्म्मपुराणम्--"तीर्थयात्रा समारम्भे तीर्थप्रत्यागमेषु च । वृद्धिश्राद्धं प्रकुर्वीत बहुसर्पिःसमन्वितम्" इति । एषु वचनेषु यत्र यत्रान्नप्राशनवृषोत्सर्ग-

---

१. पुत्रिकाया अप्युपलक्षकमिदम् । २. आदिना वापी-तडागारामादिप्रतिष्ठाग्रहणम् । ३. श्रावणपौर्णमास्यां विहितमिदं वैदिकं कर्म्म पञ्चापादिषु पश्चिमदेशेष्वद्यापि प्राचुर्येण क्रियमाणं दृश्यते । ४. 'ऋतयक' इति प्रकृतिभावोऽत्र ।

योराभ्युदयिकविधिः स मिथिलेतरदेशाचारापेक्ष इति निखिलं निर्म्मल-मित्याभ्युदयिकनिर्णयः।

## अथ तर्पणनिर्णयः।

तत्र तर्पणे मृतपितृकस्याधिकारो जीवत्पितृकस्य मृतमातृकस्य तु देवर्षितर्पणेऽधिकारः। पितुः सन्न्यासग्रहण-पातित्यादिदोषेण तर्पणानर्हत्वे तु जीवत्पितृकोऽपि पितामहादितर्पणं-कुर्यादित्याह याज्ञवल्क्यः-"यदि स्याज्जीवपितृक एतान्दिव्यान् पितॄंस्तथा। येभ्यो वापि पिता दद्यात्तेभ्यो वापि च दापयेत्" इति। कात्यायनोऽपि-"ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ" इति। "उत्तीर्य वाससी परिधाय" इति कात्यायनोक्तेः "उदकेनोदकं कुर्यात्पितृभ्यश्च कदाचन। उत्तीर्य च शुचौ देशे कुर्यादुदकतर्पणम्" इति स्मृत्यन्तरोक्तेश्च तर्पणं सति सम्भवे स्थल एव कार्यं न जले। "कायस्थैर्यैस्तिलैर्मोहात्करोति पितृतर्पणम्। तर्पितास्तेन पितरस्त्वङ्मांसरुधिरास्थिभिः" "अङ्गस्थैर्न तिलैः कुर्याद्देवर्षिपितृतर्पणम्। रुधिरन्तु भवेत्तोयं प्रदाता किल्बिषी भवेत्" इति वचनाभ्यामेकवाक्यत्वाच्च। न हि जले तर्पणे तिलानां कायस्थ(अङ्गस्थ)त्वं न सम्भवतीति। विधवामधिकृत्य काशीखण्डे "तर्पणं प्रत्यहं कुर्याद् भर्तुःकुशतिलोदकैः। तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम्" इति। विष्णुः-"स्नातश्चार्द्रवासा देवपितृ-तर्पणमम्भस्थ एव कुर्यात्परिवर्जितवासाश्चेत्तीरमुत्तीर्य" इति। इत्थमेव व्यवहारोऽपि। विष्णुः-"स्नात्वा च विधिवदुपस्पृशेत्पुरुषसूक्तेन प्रत्यृचं पुरुषाय पुष्पाञ्जलिं दद्यादुदकाञ्जलिञ्चादावेव दिव्यतीर्थेन देवानां तर्पणं कुर्यात्पित्र्येण पितृणामादौ स्ववंश्यानां-तर्पणं कुर्यात्ततः स्व-सम्बन्धि-बान्धवानां ततः सुहृदामेवं नित्यस्नायी स्यात्" इति। उपस्पृशेत् = आचामेत्। पुरुषसूक्तेन = सहस्रशीर्षेत्यादिषोडशर्चात्मकेन। प्रत्यृचम् = एकामेकामृचम्प्रति। दिव्यतीर्थेन = अङ्गुल्यग्ररूपेण। पित्र्येण = पितृसम्बन्धितीर्थेन-अङ्गुष्ठाङ्गुलिमध्यभागेनेति यावत्। स्ववंश्यानाम् = पितृ-मातृ-वंशजातानां = पित्रादीनां मातामहादीनाञ्चेत्यर्थः। शातातपः-"तर्पणन्तु शुचिः कुर्यात्प्रत्यहं स्नातको द्विजः। देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथा-

क्रमम् "शुचिरशक्तौ मन्त्रस्नाने नापि। यथाक्रमम्=निर्दिष्टक्रममनतिक्रम्य। अत्र प्रत्यहमित्यभिधानात्, "तस्मात्सदैव कर्त्तव्यमकुर्वन्न महतैनसा। युज्येत०" इत्यादिच्छन्दोगपरिशिष्टाच्च नित्यतर्पणविधिलाभः। याज्ञवल्क्यः-"स्नात्वा देवान् पितॄँश्चैव तर्पयेदर्चयेत्तथा" इति। इहोभयत्र वचनयोर्देवाः=ब्रह्मादयः। अर्चयेदिति-सपुष्पाक्षतादिभिस्तत्तल्लिङ्गैर्मन्त्रैर्देवान्, श्राद्धेन च पितॄनित्यर्थः।

तर्पणस्य नित्यमवश्यकर्त्तव्यतामाह छन्दोगपरिशिष्ट एव-"छायां यथेच्छेच्छरदातपार्त्तः पयः पिपासुः क्षुधितोऽत्तुमन्नम्। बालो जनित्रीं जननी च बालं योषित्पुमांसं पुरुषश्च योषाम्॥ तथा सर्वाणि भूतानि स्थावराणि चराणि च। विप्रादुदकमिच्छन्ति सर्वेऽभ्युदयकाङ्क्षिणः॥ तस्मात्सदैव कर्त्तव्यमकुर्वन् महतैनसा। युज्यते ब्राह्मणः-कुर्वन् विश्वमेतद्बिभर्त्ति हि॥ नाश्नन्ति पितरश्चेति कृत्वा हृत्कमले तु यः। न तर्पयति तान् भक्त्या देहात्तस्य पिबन्तु ते॥ पिबन्ति, सर्वनाशञ्च कुर्वन्त्यथ पदे पदे। तस्माद्यत्नेन च पितॄँस्तर्पयेत्सततं बुधः" इति। जनित्रीम्=जनयित्रीम्, छान्दसो णिजभावः। सततम्=नित्यम्। विष्णुपुराणम्-"शुचिवस्त्रधरः स्नातो देवर्षि-पितृ-तर्पणम्। तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः" इति। तेषाम्=देवर्षिपितॄणाम्। तीर्थेन=अङ्गुल्यग्रादिरूपेण। तथा च याज्ञवल्क्यः-"कनिष्ठादेशिन्यङ्गुष्ठमूलान्यग्रं करस्य च। प्रजापति-पितृ-ब्रह्म-देवतीर्थान्यनुक्रमात्" इति। देशिनी-तर्जनी। अनुक्रमात्=यथाक्रमम्। अमरोऽपि-"अङ्गुल्यग्रे तीर्थं दैवं स्वल्पाङ्गुल्योर्मूले कायम्। मध्येऽङ्गुष्ठाङ्गुल्योः पित्र्यं मूले त्वङ्गुष्ठस्य ब्राह्मम्" इति। स्थलस्य शुचित्वे तत्रैव, तदशुचित्वे जलेऽपि तर्पणमाह योगियाज्ञवल्क्यः-"यत्राशुचिस्थलं वा स्यादुदके देवताः पितॄन्। तर्पयेत यथाकाममप्सु सर्वं प्रतिष्ठितम्" इति। "आपो देवगणाः सर्वे आपः पितृगणाः स्मृताः। तस्माज्जले जलं देयं पितॄणां दत्तमक्षयम्" इति। कार्ष्णाजिनिश्च। असंस्कृतमृतानां तु स्थल एव जलदानमाहायमेव-"देवतानां पितॄणाञ्च जले दद्याज्जलाञ्जलिम्। असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिम्" इति। अत्र जल इति जल एवेत्यर्थः, 'सर्वं वाक्यं सावधारण-'मिति न्यायादुत्तरार्द्धोपादानस्यान्यथानुपपत्तेश्च। एवमेवाऽऽचारादर्शादयोऽपि।

अत्र स्थले इत्यभिधानात्कुशरहितभूमावेव दानं कार्यमिति द्वैतपरिशिष्ट-मतम्। हारीतस्तु-"देवाश्च पितरश्चैव काङ्क्षन्ति सरितम्प्रति। अदत्ते तु निराशास्ते प्रतियान्ति यथागतम्" इत्यनेन नद्यां तर्पणावश्यकर्त्तव्यतां स्मरति। अदत्त इत्यत्र 'जले' इति शेषः। यमोऽपि-"अपि नः स कुले जायाद्यो नो दद्याज्जलाञ्जलीन्। नदीषु बहुतोयासु शीतलासु विशेषतः" इति। अत्र नदीषु इति बहुवचनोपादानादेकस्मिन् दिने बहुनदीलाभे प्रतिनदि तर्पणमित्याचारादर्श-नित्यकृत्यार्णवादयः। वस्तुतस्तु नदी-ष्विति बहुवचनं यस्यां कस्याञ्चिद्बहुतोयायां नद्यामिति तात्पर्येणैवेति मे प्रतिभाति। बौधायनः-"स्रवन्तीष्वनिबद्धासु त्रयो वर्णा द्विजातयः। प्रातरुत्थाय कुर्वीरन् देवर्षिपितृतर्पणम्" इति। स्रवन्तीषु=नदीषु। अनि-बद्धासु=अकृत्रिमासु। जलतर्पणपक्षे सूर्योपस्थानान्तां सन्ध्यां कृत्वा तर्पणं कार्यं नद्या उत्तीर्य गायत्रीजपस्ततो ब्रह्मयज्ञ इत्याचारादर्श-द्वैतपरि-शिष्टयोः। निबद्धासु नदीषु। यद्यपि "निबद्धासु न कुर्वीरन्नंशभाक् तत्र सेतुकृत्। तस्मात्परकृतान सेतून् कूपांश्च परिवर्जयेत्" इत्यनेन बौधा-यनस्तर्पणम्प्रतिषेधति तथापि पिण्डत्रयोद्धरणपूर्वकमापत्काले "त्रीन् पि-ण्डान् वा समुद्धृत्य कुर्यादापत्सु नो सदा" इत्यनेन सोऽप्यनुमन्यत एव। तथैव "निबद्धासु तु पिण्डांस्त्रीन् कूपात्तु त्रीन् घटांस्तथा" इति॥ शङ्खलि-खितौ-"वापीतडागोदपानेषु सप्त पञ्च त्रीन् वा पिण्डानुद्धृत्य देवान् पितॄंस्तर्पयेत" इति। अत्र सर्वत्र पिण्डानिति मृत्पिण्डानित्यर्थः। अयञ्च पिण्डोद्धारोऽसामर्थ्यात्स्नानाभावेऽपि कर्त्तव्यस्तर्पणाङ्गत्वादिति नित्यकृ-त्यार्णवे। याज्ञवल्क्यः-"तत्र सन्तर्पयेद्देवानृषीन् पितृगणांस्तथा। ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्॥ देवांश्छन्दांसि वेदांश्च ऋषींश्चैव तपोधनान्। आचार्यांश्चैव गन्धर्वान् गुरूंश्चैवेतरांस्तथा॥ तथा देवानुगा-न्नागान् सागरान् पर्वतांस्तथा। वनस्पतीनोषधींश्च भूतग्रामञ्चतुर्विधम्॥ अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति वक्तव्यं नाम्ना तु प्रणवादिना॥ आवाह्य पूर्ववन्मन्त्रैरास्तीर्य च कुशान्क्रमात्। प्रागग्रेषु सुरान्सम्यग् दक्षिणाग्रेषु वै पितॄन्। सव्यं जानु ततोऽन्वाच्य पाणिभ्यां दक्षिणामुखः। तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्वान् पितृगणांस्तथा॥ मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः। प्राचीनावीत्युदकन्तु प्रसिञ्चेद्वै तिलान्वितम्॥

यद्युद्धृतम्प्रसिञ्चेत्तु तिलान्सम्मिश्रयेज्जले । तिलानामप्यभावे तु सुवर्ण-रजतान्वितम् ॥ तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण चाप्यथ । कव्यबालं नलं सोमं यममर्यमणं तथा ॥ अग्निष्वात्तान् सोमपाँश्च तथा बर्हिषदः पितॄन् । यदि स्याज्जीवपितृक एतान्दिव्यान् पितॄँस्तथा ॥ येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत् । एताँश्च वक्ष्यमाणाँश्च प्रमीतपितृको द्विजः ॥ वसून् रुद्राँस्तथादित्यान्नमस्कारस्वधान्वितान् । एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः ॥ आचार्यान् स्वान् पितॄँश्चैव पितृप्रभृतिनामतः । मन्त्रैश्च देयमुदकं पितॄणां प्रीतिवर्द्धनैः ॥ उदीरतामङ्गिरस आयमित्यूर्जमित्यपि । पितृभ्य इति ये चेह मधुवाता इति त्र्यृचम् ॥ पितॄन्ध्यायन् प्रसिञ्चेद्वै जपेन्मन्त्रान् यथाक्रमम् । तृप्यध्वमिति च त्रिर्वै ततः प्राञ्जलिना, ततः । नमो व इति जप्त्वा वै ततो मातामहान् सखीन् ॥ तर्पयेदानृशंस्यार्थं धर्म्मं परममास्थितः । माता मातृ ता चैव मातुलानी पितृष्वसा ॥ दुहिता च स्वसा चैव शिष्यर्त्विग्ज्ञातिबान्धवाः । नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वशः ॥ सवर्णेभ्यो जलं दद्यान्नासवर्णे कथञ्चन । पूर्वं स्वपितरस्तर्प्याः पश्चादन्याँश्च तर्पयेत् ॥ नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः । पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः" इति । अन्वारब्धेन पश्चाल्लग्नेन । सव्यम् = वामम् । अन्वाच्य = पातयित्वा । पूर्ववदिति–श्राद्धप्रकरणे स्वेनैव याज्ञवल्क्येनोक्तैः 'विश्वेदेवासः' 'उशन्तस्त्वा' इत्यादिभिर्म्मन्त्रैरित्यर्थः । तल्लिङ्गैः=पितृप्रकाशकैरुदीरतामवर इत्यादिभिर्म्मन्त्रैः । इत्थञ्च 'विश्वे देवास आगतेति विश्वेदेवाः शृणोम'–मिति च मन्त्राभ्यां ब्रह्मादीन्, 'उशन्तस्त्वे'–ति 'आयन्तु न' इति च मन्त्राभ्यां पितॄनावाह्य तर्पयेदिति निर्गलितम् । अत्र मन्त्रैरिति बहुवचनमविवक्षितं यद्वा प्रोक्तमन्त्रचतुष्टयाभिप्रायम् । स्मृतिकौमुद्यां देवनाथठक्कुरोऽपि प्रकृतयाज्ञवल्क्यवचने बहुवचनमविवक्षित्वा 'विश्वेदेवास' इत्यनेन देवान्, 'उशन्तस्त्वे'–त्यनेन च पितॄनावाह्य तत्तल्लिङ्गैर्म्मन्त्रैस्तर्पयेदिति निर्णिनाय । प्रदीपकारास्तु बहुवचनासाङ्गत्येन प्रोक्तयाज्ञवल्क्यवचनस्यात्राप्रसक्त्या 'देवा आगच्छन्तु' इत्यस्य वाक्यस्य मन्त्रत्वाभावेन च 'आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते । मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थिति"–

रिति च्छन्दोगपरिशिष्टोक्तेर्मन्त्रविशेषानुपदेशे व्याहृतिमन्त्रप्रतीत्या देवानां व्याहृतिभिरावाहनं, पितॄणान्तु 'उशन्तस्त्वे'-ति 'आयन्तु न'-इति 'आगच्छन्तु मे पितर'-इति मन्त्रैरित्यूचुः। अत्रत्यमतान्तराणि विस्तरभयान्नोक्तानि। एतञ्च समन्त्रकमावाहनं छन्दोगातिरिक्तपरमेवेति रत्नाकरो व्यवहारश्च। प्राचीनावीती = दक्षिणस्कन्धनिहितवामबाहन्तर्लम्बितयज्ञोपवीतः। 'प्राचीनावीतमन्यस्मि'-न्नित्यमरात्, "सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमन्ववलम्बं भवत्येवं प्राचीनावीती भवति" इति गोभिलगृह्यसूत्राच्च। प्रसिञ्चेत् = दद्यात्-पात्रस्थं जलमादाय पात्र एव तिलान् प्रक्षिपेदित्यर्थः; स च प्रक्षेपो दक्षिणहस्तेनैव कर्त्तव्यः, 'दक्षिणस्तत्र विज्ञेय'-इति वचनात्। जलाशयस्थजलेन तर्पणे तु वामहस्तेनादाय तिला अञ्जलौ मेलनीया इति तत्त्वम्। दक्षिण इति-दक्षिणकरेण पितृतीर्थेन जलमादाय दक्षिणकरपितृतीर्थेनैव दद्यादित्यर्थः। मरीचिः-"वामहस्ते तिला ग्राह्या मुक्त्वा हस्तन्तु दक्षिणम्" इति, "मुक्तहस्तन्तु दातव्यं मुद्रां तत्र न दर्शयेत्" इति च। मुक्तहस्तमिति क्रियाविशेषणं, मुक्तहस्तं = प्रसारितहस्तं यथास्यात्तथेत्यर्थः। न मुद्रामिति तर्जन्यङ्गुष्ठमुद्रया पितृतीर्थस्यावरोधो यथास्यात्तथा न कुर्यादित्यर्थः। शङ्खः-"नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना। नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते" इति। अत्र भूमाविति स्थलस्य शुचितायां, तदशौचे तु जले कार्यमेव। 'यत्राशुचि स्थलं वा स्या'-दित्यादिकार्ष्णाजिनिस्मृतेः। जलस्थेन तु जल एव तर्पणे जलं प्रक्षेप्यमाहयमः-"भूमौ यदापो दीयन्ते दाता चैव जले स्थितः। वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित्" इति। अत्र यदित्यव्ययम्। स्थलस्थेन च स्थल एवेत्यत्र प्रागुक्तशङ्खवचनं नेयम्। एवं स्थलस्थो जले न तर्पयेदित्याह तीर्थचिन्तामणिधृतस्मृतिः-"स्थले स्थित्वा जले यस्तु प्रयच्छेदुदकं नरः। नोपतिष्ठेत्पितॄणां तु सलिलं तन्निरर्थकम्" इति। मरीचिः-"रजते मनसा यायात्सुवर्णे हस्तनिर्गतम्। तिलेषु च क्षणाद्गच्छेत्ताम्रे तु द्विमुहूर्ततः। दर्भे सप्तमुहूर्ते तु मन्त्रदत्तं तदक्षयम्" इति। इह 'रजत' 'इत्यादिस प्तम्यन्तेषु 'हस्तसम्बद्ध'-इति शेषपूरि-

---

१. व्याहृतिमन्त्राणां प्रजापतिरेव ऋषिर्देवता चेति हि याज्ञिकसिद्धान्तः।

सस्य सप्तम्यन्तस्य सम्बन्धो ज्ञेयः। यायादित्यत्र पितॄनिति शेषः। मन्त्रप्राशस्त्यवादोऽयम्। मरीचिः-"हिमेन सह यद्दत्तं क्षीरेण मधुना तथा। तदप्यक्षयतां याति पितॄणान्तु तिलोदकम्" इति। एतदपि प्राशस्त्यपरम्। हिमं = कर्पूरम्। "तिलानामप्यभावे तु सुवर्णरजतान्वितम्। तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वा पुनः" इति मरीचिवचनं समुदितानां तिल-सुवर्णादीनामभाव एकदेशग्रहणप्रदर्शनार्थम्। अत एव "विना रूप्यसुवर्णेन विना ताम्रतिलैस्तथा। विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते" इति शङ्खवचनमपि रूप्यादिसमस्ताभावपरमेव। "सौवर्णेन हि पात्रेण राजतौदुम्बरेण च। खड्गपात्रेण शङ्कुना वाऽप्युदकं पितृतीर्थं स्पृशन् दद्या"-दिति शङ्खवचनञ्च सम्भवपरम्। राजतौदुम्बरेणेति समाहारद्वन्द्वाद्राजतेन औदुम्बरेणेत्यर्थः। खड्गपात्रेण = गण्डकास्थिनिर्मितपात्रेण। शङ्कुः = कीलकः स च प्रकरणात्स्वर्ण-रूप्यादिनिर्मित एव ग्राह्यः, प्रकरणस्याभिधानियामकत्वात्। उदकमित्यादि-पितृतीर्थं स्पृशन्नुदकं दद्यादित्यन्वयः। इह तत्तत्पात्रसम्भवदशायामपि तर्पणेऽञ्जल्यन्वयः कार्य एव। न चाप्प्रणयनकरणस्य चमसस्य गोदोहनेनेव तर्पणकरणस्याञ्जलेस्तत्तत्पात्रेण बाधः शक्यते वक्तुम्, तत्रैकस्यां क्रियायामप्प्रणयनरूपायां समुच्चयासम्भवाद्गोदोहनेन चमसबाधस्य सम्भवेन प्रकृते समुच्चयसम्भवेनायोग्यत्वादित्याचारविवेक-द्वैतपरिशिष्ट-द्वैतनिर्णयादिकृतः। शङ्खलिखितौ-"नेष्टकाचिते पितॄ स्तर्पयेत्' इति। उशना च-"न वेष्टितशिरा न कृष्णकाषायवासा देवपितृकार्यं कुर्यात्" इति। कृष्णेति रक्तस्याप्युपलक्षणं पितृकार्ये। तर्पणक्रममाह कात्यायनः-"ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्। देवाँश्छन्दांसि वेदानृषीन् पुराणाचार्यान् गन्धर्वानितराचार्यान् सव्वँत्सरञ्च सावयवं देवीरप्सरसो देवानुगान्नागान् सागरान् पर्वतान् सरितो मनुष्यान् यक्षान्रक्षांसि पिशाचान सुपर्णान् भूतानि पशून् वनस्पतीनोषधीर्भूतग्रामं चतुर्विधं तृप्यतामित्योङ्कारपूर्वं ततो निवीती मनुष्यान् सनकञ्च सनन्दञ्च तृतीयञ्च सनातनम्। कपिल-

---

१. 'गण्डके खड्गखड्गिना'-वित्यमरः। २. 'गेणा' इति मैथिली-प्रसिद्धवन्य-पशुविशेषास्थीत्यर्थः।

श्चाऽऽसुरिश्चैव वोढुं पञ्चशिखस्तथा ॥ ततोऽपसव्यं तिलमिश्रम्, -कव्यवालं नलं सामं यममर्यमणमग्निष्वात्तान् सोमपान् बर्हिषदश्च य[1]माँश्चैके-यमाय धर्मराजाय मृत्यवे चान्तकाय च। वैवस्वताय कालाय सर्वभूतक्षयाय च। औदुम्बराय दध्नाय नीलाय परमेष्ठिने। वृकोदराय चित्राय चित्रगुप्ताय वै नमः। एकैकस्य तिलैर्मिश्राँस्त्रींस्त्रीन् दद्याज्जलाञ्जलीन्। यावज्जीवकृतं पापं तत्क्षणादेव नश्यति। जीवत्पितृकोऽप्येतानन्याँश्चेतर उदीरतामङ्गिरस आयन्तु न ऊर्जं पितृभ्यो ये चेह मधुवाता इति त्र्यृचं जपन् प्रसिञ्चेत्तृप्यध्वमिति त्रिर्नमो व इत्युक्त्वा मातामहाचार्यगुरुशिष्यर्त्विग्ज्ञातिबान्धवा अतर्पिता देहाद्रुधिरं पिबन्ति" इति। क्रमिकपाठादेव पूर्वत्वसिद्धौ पूर्वमित्युक्त्या प्रत्येकं ब्रह्मादीनां तर्पणमायाति तेन 'ओङ्कारपूर्वं तृप्यता'-मित्यस्य 'ओंब्रह्मा तृप्यता'-मित्येवं क्रमेण प्रत्येकमन्वयः। "तृप्यतामिति सेक्तव्यं नाम्ना च प्रणवादिना" इति याज्ञवल्क्यस्मरणात्। प्रणवादिनेति प्रणव आदिर्यस्येति बहुव्रीहिर्नाम्नो विशेषणम्। आचार्यविशेषणं पुराणानिति इतरानिति च, संवत्सरविशेषणं सावयव इति, भूतग्रामविशेषणं चतुर्विधमिति। चातुर्विध्यञ्च जरायुजाण्डजस्वेदजोद्भिज्जभेदात्। निवीती=कण्ठलम्बितयज्ञोपवीती। इह निवीतीत्युक्त्या प्रागुपवीतित्वसिद्धिस्तथा च योगियाज्ञवल्क्यः-"ब्रह्मादीनुपवीती तु देवतीर्थेन तर्पयेत्। निवीती कायतीर्थेन मनुष्यान् सनकादिकान्" इति। अत्र सर्वत्र प्रत्येकमेकैक एवाञ्जलिर्देय उपस्थितत्वादावृत्तौ मानाभावाच्च। केचित्त्वत्र "एकैकमञ्जलिं देवा द्वौ द्वौ च सनकादयः। अर्हन्ति पितरस्त्रींस्त्रीं स्त्रियस्त्वे (श्चै) कैकमञ्जलिम्" इति वाक्याद्व्यवस्थापयन्ति। 'ततोऽपसव्य'-मित्यपसव्यपदं दक्षिणामुखत्व-वामजानुपातादेः सर्वस्यापि पितृधर्मस्योपलक्षणमित्याचारचिन्तामणिः। "तर्पयेज्जीवत्पितृक एतान् दिव्यान् पितॄँस्तथा। एताँश्च वक्ष्यमाणाँश्च प्रमीतपितृको

---

१. 'यमाँश्चैके' इति कात्यायनवचनादाचाराच्च यमतर्पणं पञ्चपुराणानुक्तमप्यावश्यकं तत्र च "एकैकस्य तिलैर्म्मिश्रैस्त्रींस्त्रीन् दद्याज्जलाञ्जलीन्" इति कात्यायनेन प्रत्येकमञ्जलित्रयदानलाभेऽप्याचारादेकैक एवाञ्जलिरिति महामहोपाध्यायगुरवः परमेश्वरशर्म्माणः।

द्विजः ॥ वसून्रुद्राँस्तथा दिव्यान्नमस्कारस्वधान्वितान्। एते सर्वस्य पितर एवायत्ताश्च मानुषाः ॥ आचार्यान् स्वान् पितृँश्चैव पितृप्रभृतिनामतः" इति प्रागुक्तवचने नमस्कारस्वधान्वितानित्यस्याविशेषोक्तावपि वस्वादिभिरेवान्वयो दिव्यपितृत्वान्न तु स्वपितृभिरदिव्यत्वात्। अत एव "माता मातृष्वसा चैव मातुलानी पितृष्वसा। दुहिता च स्वसा चैव शिष्यर्त्विग्ज्ञातिबान्धवाः ॥ नामतस्तु स्वधाकारैस्तर्प्याः स्युरनुपूर्वशः" इत्यनेन मात्रादितर्पणे स्वधामात्रान्वयोक्तिः सङ्गच्छते। अत्र मात्रादीनां पित्रादेरप्युपलक्षकत्वं श्वश्रूभगिन्यादिसङ्ग्रहार्थमुपलक्षकतायाः सर्वैः स्वीकृतत्वेन लाघवाद्विशेषापेक्षया सामान्यस्य पित्रादेरेवोपलक्षकत्वौचित्यात्। विभज्यते च नमोऽन्तर्भावो देवानामेव पितृणान्तु स्वधामात्रान्वितत्वम्— "स्वाहाकार-वषट्कार-नमस्कारा-दिवौकसाम्। स्वधाकारः पितृणान्तु" इत्यादिवाक्येन। ततश्च यथा "अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः" इति ब्रह्मपुराणे सामान्येन 'स्वधा नम'-इत्युक्तावपि त्रैवर्णिकविषयतया स्वधान्वयपरत्वं शूद्रविषयतया च नमोऽन्वयपरत्वं तथेहापि 'नमस्कारस्वधान्विता'-नित्यस्य दिव्यादिव्यभेदेन विच्छिद्यान्वयः। अत एव— "नामगोत्रस्वधाकारैस्तर्प्याः स्युः पितरस्तथा" इति याज्ञवल्क्येन नमोरहितमेव पितृतर्पणमुक्तं सङ्गच्छत इति द्वैतविवेककाराचारचिन्तामणि-द्वैतपरिशिष्ट-श्रीदत्ताह्निकादयः। कल्पतरु-रत्नाकर-देवनाथठक्कुरादयस्तु— सङ्कोचे बीजाभावेन 'नमस्कारस्वधान्विता'नित्यस्य पित्रादिष्वप्यन्वयं मन्वते। अत्र ग्राह्याग्राह्यत्व आचारः शरणम्। "हव्यवाहो वै देवानां कव्यवाहनः पितृणा"मिति श्रुतेः कव्यवाडनल इति कव्यवाट्त्वगुणविशिष्टानलबोधकतयैकैव देवता पितृगणान्तर्गतेति केचित्। अन्ये तु "कव्यवालादयो दिव्ययमा"-इति गोभिलोक्तवचनात्कव्यवालोऽनलश्चेति द्वे देवते, वह्नेः पितृन् प्रति कव्यवाहत्वेनोक्तश्रुतेश्चारिताथ्र्यात्। अत एव "कव्यवालं नलं सोम"-मिति कामधेन्वादौ पृथक् पाठ इति। ततश्च कव्यवालादितर्पणे प्रत्येकमञ्जलित्रयं देयं तेषां-पितृधर्मकत्वात्। नम इत्यस्य सर्वत्र चतुर्थ्यन्तैरन्वयः। अन्याँश्चेतर इतीतरः=मृतपितृकः, अन्यान्=स्वपित्रादींस्तर्पयेदित्यर्थः। जीवत्पितृकेणापि पितुः पातित्ये सन्न्यासादिना वा तर्पणानर्हत्वे "यदि स्याज्जीवपितृक एतान् दिव्यान् पितृंस्तथा।

येभ्यो वाऽपि पिता दद्यात्तेभ्यो वाऽपि प्रदापयेत्" इति याज्ञवल्क्यवचनात्पितामहादितर्पणं कर्त्तव्यम्। "ब्राह्मणादिहते ताते पतिते सङ्गवर्जिते। व्युत्क्रमाच्च मृते देयं येभ्य एव ददात्यसौ" इति च्छन्दोगपरिशिष्टवाक्याज्जीवतः पितुरनधिकारे पुत्रेण तत्कर्मापेक्षणीयत्वप्राप्तेः। जीवपितृक इति जीवतीति जीवो = जीवन् पिता यस्येत्यर्थः। पचादिपाठात्कर्त्तर्यच्। ताते= पितरि, 'तातस्तु जनकः पिते'त्यमरः। सङ्गवर्जिते = सन्न्यासिनीत्याम्रेडितम्। "शर्म्मन्नर्घादिके कार्यं शर्म्मा तर्पणकर्मणि। शर्म्मणोऽक्षय्यकाले स्यादेवं कुर्वन्न लिप्यति" इति गोभिलोक्तेः 'ॐ अद्यामुकगोत्रः पिताऽमुकशर्म्मा तृप्यतामिदं सतिलं जलं तस्मै स्वधा' इत्येव त्यागवाक्यस्वरूपम्। शर्म्मन्निति सम्बोधनान्तमित्यर्थः। शर्म्मेति-प्रथमान्तमित्यर्थः। शर्म्मण इति षष्ठ्यन्तमित्यर्थः। तृप्यतामित्यात्मनेपदन्तु शिष्टप्रयोगात्, तर्पयेद्देवतानाञ्च सव्यं कृत्वा समाहितः। अधिकारी भवेत्पश्चात्पितृणां तर्पणे द्विजाः॥ अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु। तृप्यतामिति सेक्तव्यं नामगोत्रेण वाग्यतैः" इति वचनेन 'तृप्यतामिति सेक्तव्यं'-मित्यादिष्टत्वाद्वा। तृपिर्हि परस्मैपदिषु पठितः। अस्मत्पितेत्येवमस्मच्छब्दस्तु वाक्ये न प्रयोक्तव्यः, सम्बन्धि-शब्दत्वादेव तत्सिद्धेरिति रत्नाकरादयो व्यवहारोऽपि।

"त्रीन् मातृतस्त्रीन् पितृत"-इति गोभिलीयात् पित्रादींस्त्रीन्मातामहादींश्च त्रींस्तर्पयित्वा मातृतः = मातृपक्षे पितृतः=पितृपक्षे स्त्रियस्तर्पणीयाः। न च 'कृतजपोऽन्तर्जानुरुदङ्मुखश्च दिव्येन तीर्थेन देवानुदकेन तर्पयेदथ कृतापसव्यो दक्षिणाभिमुखोऽन्तर्जानुः पितृतीर्थेन पितृभ्यो यथाश्राद्धं यथाप्रकाशमुदकं दद्यात्-पित्रे पितामहाय प्रपितामहाय, मात्रे पितामह्यै प्रपितामह्यै, आसप्तमात्पितृपक्षे यावतां नाम जानीयात् पितृपक्षाणामुदकतर्पणं कृत्वा गुरूणां तर्पणं कुर्याद्गुरूणां कृत्वा मातृपक्षाणां कुर्यान्मातृपक्षाणाञ्च कृत्वा सम्बधि बान्धवानां कुर्यात्तेषां कृत्वा सुहृदां कुर्यात्" इति शङ्खस्मृतौ पित्रादितर्पणोत्तरं मात्रादितर्पणं मुखत एवोक्तं विरुध्येतेति वाच्यम् "पित्रादीन्नामगोत्रेण ततो मातामहानपि" इति पाद्मोक्तेन सहैकवाक्यतालाभाय कात्यायन-गोभिलादि-प्रतिपादितार्थक्रमेणास्य शब्दक्रमस्य बाधात्। आचारस्तूभय-

थापि तर्पणस्यात एव बौधायनोऽपि—"पित्रादित्रिकं तर्पयित्वा मात्रादित्रिकं तर्पयेत्ततो मातामहादित्रिकं ततश्च मातामह्यादित्रिकम्" इत्याह। "देव्यन्तं नाम च स्त्रीणा"मिति गोभिलवचनाच्छिष्टाचाराच्च देव्यन्तमेव नामोच्चार्यं स्त्रीतर्पणे इति सर्वे निबन्धारः। तच्च त्रैवर्णिकविषयम्, शूद्रस्त्रीणां हि दास्यन्तमिति स्मृतिकौमुदी। अत्रत्यं विचारान्तरन्तु हेयमेव। जीवन्मातृकेण प्रमीतपितृकेण मातामह्यादितर्पणं न कार्यमिति केचित्तन्न, "यदि स्याज्जीवपितृक एतान् दिव्यान् पितॄंस्तथा। एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः" इति प्रागुक्तयाज्ञवल्क्यवचनस्य मातामह्यादिसाधारण्येनैव प्रवर्त्तनात्, प्रमीतपितृकत्वेनैव प्रमीतमात्रतर्पणाधिकारसिद्धेरौचित्याच्च। "आसप्तमात्पुरुषात्पितृपक्षे यावतां नाम जानीयात्पितृपक्षाणामुदकतर्पणं कृत्वा मातृपक्षाणां कुर्यात्" इत्यविशेषेणैव शङ्खस्मृत्युक्तेश्च। कृतजपोऽन्तर्जानुरिति प्रागुक्तशङ्खवचने अन्तर्जानुरित्यस्य जानुद्वयमध्यनिहितहस्त इत्यर्थः। उदङ्मुखश्चेति चकारः पूर्वमुखसमुच्चायकस्तेन देवतर्पणे प्राङ्मुखोऽपीति लभ्यते। दिव्येन = दैवेन—अङ्गुल्यग्ररूपेणेत्यर्थः। सुहृदां = मित्राणाम्। एतच्च तर्पणं सवर्णपरम्, "सवर्णेभ्यो जलं देयं नासवर्णे कदाचन" इति याज्ञवल्क्योक्तेः। एप च सवर्णनिर्णयो भीष्मतर्पणातिरिक्तपरो भीष्मतर्पणे हि "भीष्माय तु जलं दद्युस्त्रयो वर्णा द्विजातयः" इति शिष्टाचारानुमितस्मृतेस्त्रैवर्णिककर्तृकत्वं सिद्धम्। वस्तुतस्तु "अष्टम्यान्तु सिते माघे भीष्माय तु तिलोदकम्। अन्नञ्च विधिवद्दद्युः सर्वे वर्णा द्विजातयः" इति स्मृतेः शूद्रस्याप्यधिकारः। न चात्रापि 'द्विजातय'—इत्युक्त्या त्रैवर्णिकस्यैव तदधिकार इति शक्यते वक्तुम्, तथा सति 'सर्वे वर्णा'—इत्यस्य वैयर्थ्यापत्तेस्तस्मादत्र वचने 'द्विजातय'—इति सम्बोधनपदमेवञ्च "अधमस्य तु वर्णस्य यः करोत्यौर्ध्वदेहिकम्। तद्वर्णत्वमसौ याति इह लोके परत्र च" इति वचनं भीष्मेतरौर्ध्वदेहिकक्रियापरम्। अत एव "ब्राह्मणाद्यास्तु ये वर्णा दद्युर्भीष्माय नो जलम्। सम्वत्सरकृतं तेषां पुण्यं नश्यति सत्तम" इति स्मृत्या भीष्मतर्पणे वर्णसामान्याभिधानं-सङ्गच्छते। आचारोऽपि तथा। अत एव सदाचारबलात्सर्ववर्णविषयतामस्योचुः समयप्रदीपकृदादयः। प्रतिहस्तकादेरप्येतदेव सम्मतम्। इदञ्च तर्पणं माघशुक्लाष्टम्यां कार्यमाह भविष्यो-

त्तरे-शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम्। सम्वत्सरकृतं पापं तत्क्षणादेव (तस्य) नश्यति" इति। "अष्टम्यां तु सिते माघे भीष्माय तु तिलोदकम्" इति प्रागुक्तस्मृतिः। "माघे मासि सिताष्टम्यां सति(लि)लं भीष्मवर्म्मणे। श्राद्धञ्च ये तदा दद्युस्ते स्युः सन्ततिभागिनः" इति स्मृतिश्च। अत्र तिथिनिश्चयः "व्रतोपवासस्नानादौ घटिकैका यदा भवेत्। उदये सा तिथिर्ग्राह्या श्राद्धादावस्तगामिनी" इति विष्णुधर्म्मोत्तरीयात्कार्यः। तिथिद्वैधे तु-'युग्माग्नी'ति युग्मवाक्यात्। तर्पणमन्त्रस्तु "ॐ वैयाघ्रपद्यगोत्राय सांकृतिप्रवराय च। अपुत्राय ददाम्येतत्सलिलं भीष्मवर्म्म-(तर्प)णे" इति। ततः-"ॐ भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः। आभिरद्भिरवाप्नोतु पुत्रपौत्रोचितां क्रियाम्" इत्यभ्यर्थयेत्। एतच्च तर्पणं, ब्राह्मणः पितृतर्पणोत्तरं, क्षत्रियादिस्तु ततः प्रागेवेति समयप्रदीपादौ व्यवस्थापितम्। राजतर्पणमप्यसवर्णेन कार्यमेव "गुरवे मातुलादीनां स्निग्धमित्राय भूभुजे" इति विष्णुपुराणाभिधानात्। एवं शूद्रापुत्रेणासवर्णस्यापि पितुस्तर्पणं कार्यमेव, "ब्राह्मणेन न कर्त्तव्यं शूद्रस्य त्वौर्ध्वदेहिकम्। न शूद्रेण ब्राह्मणस्य विना पारशवात्क्वचित्" इति पारस्करस्मृतेः। अत्रौर्ध्वदेहिकपदं मरणोत्तरक्रियामात्रपरमिति तर्पणमपि संगृह्णाति। पारशवः = शूद्रायां ब्राह्मणाज्जातः। पाद्मम्-"ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम्। देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः॥ क्रूराः सर्पाः सुपर्णाश्च तरवो जृम्भकाः खगाः। विद्याधरा जलाधारास्तथैवाकाशगामिनः॥ निराधाराश्च ये जीवाः पापे धर्मे रताश्च ये। तेषामाप्यायनायैतद्दीयते सलिलं मया॥ कृतोपवीती देवेभ्यो निवीती च भवेत्ततः। मनुष्याँस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्तथा॥ सनकश्च सनन्दश्च तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा॥ सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा। मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्॥ प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च। देवान् ब्रह्मऋषीन् सर्वांस्तर्पयेदक्षतोदकैः॥ अपसव्यं ततः कृत्वा सव्यं जानु च भूतले। अग्निष्वात्ताँस्तथा सौम्यान् हविष्मन्तस्तथोष्मपान्॥ सुकालिनो बर्हिषदस्तथा चैवाज्यपान् पुनः। तर्पयेच्च पितॄन् भक्त्या सतिलोदकचन्दनैः॥ दर्भपाणिस्तु विधिना प्रेतान् स्वाँस्तर्पयेत्ततः॥ पित्रादीन्नामगो-

त्रेण तथा मातामहानपि । सन्तर्प्य भक्त्या विधिवदिमं मन्त्रमुदीरयेत् ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति" इति । अक्षतोदकैरित्यक्षतपदं यवपरम्, देवतर्पणं प्रक्रम्य "यवाद्भिस्तर्पये"-दिति परिशिष्टस्मरणात् । पितृतर्पणन्तु 'सतिलोदकचन्दनै'-रित्युक्तमेव । यवतिलालाभे सुवर्णरजतादिना तदलाभे दर्भैर्मन्त्रैश्च तर्पणं कर्त्तव्यम् । "तिलानामप्यलाभे तु सुवर्णरजतान्वितम् । तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण चाप्यथ" इति मरीचिवचनात् । हविष्मन्त इति च्छान्दसत्वात्प्रथमा । तर्पणोत्तरन्तु कुशास्त्याज्या एव "पिण्डार्थे ये स्मृता दर्भा यैः कृतं पितृतर्पणम् । मूत्रोच्चारे धृता ये च तेषां त्यागो विधीयते" इति लघुहारीतोक्तेः । मूत्रोच्चारे= तदुत्सर्गकाले । आचारस्तु न त्यागस्य ।[1] विष्णुपुराणे-"त्रिरपः प्रीणनार्थाय देवानामपवर्जयेत् । ऋषीणाञ्च यथान्यायं सकृच्चापि प्रजापतेः ॥ पितॄणां प्रीणनार्थाय त्रिरपः पृथिवीपते । पितामहेभ्यश्च तथा प्रीणयेत्प्रपितामहान् ॥ मातामहाय तत्पित्रे तत्पित्रे च समाहितः । दद्यात्पित्र्येण तीर्थेन काम्यञ्चान्यच्छृणुष्व मे ॥ मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथैव च । गुरवे मातुलादीनां स्निग्धमित्राय भूभुजे ॥ इदञ्चापि जपेदम्बु दद्दात्मेच्छया नृप । उपकाराय भूतानां कृतदेवादितर्पणः ॥ देवासुरास्तथा नागा यक्षा गन्धर्वराक्षसाः । पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥ जलेचरा भूमिचरा ( निलया )वाय्वाधाराश्च जन्तवः । तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुना सदा ( खिलाः ) ॥ नरकेषु समस्तेषु यातनासु च ये स्थिताः । तेषामाप्यायनायैतद्दीयते सलिलं मया ॥ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः । ते तृप्तिमखिला यान्तु ये चास्मत्तोयकाङ्क्षिणः ॥" इति । त्रिरप इति-ॐदेवास्तृप्यन्ताम्, ॐऋषयस्तृप्यन्तामित्येवं त्रिरुच्चार्य जलाञ्जलित्रयं दद्यादित्यर्थः । अपवर्जयेत् = दद्यात् । देवानामित्यादौ सम्प्रदानस्य सम्बन्धत्वविवक्षया षष्ठी । सकृदिति-ॐप्रजापतिस्तृप्यतामित्येवमेकमेवाञ्जलिं प्रजापतये

---

१. प्रमीतपितृतर्पणं कृत्वा मोटक ऋजवो दर्भाश्च त्याज्या इति स्मृतिदीपिकाऽप्येतन्मूलिकैव ।

दद्यादित्यर्थः। फलविशेषबुबोधयिषया मात्रादितर्पणस्य काम्यत्वोक्तावपि गोभिलीयादिभिः सिद्धान्तैर्नित्यत्वमभ्युपेयम्। येऽबान्धवा इति मन्त्र-पाठश्चापसव्येनैव कार्यस्तथैव सर्वसिद्धान्तात्। सुवर्णरजतकुशादिहस्त एव तर्पणं कार्यमाह लघुहारीतः-"जपे होमे तथा दाने स्वाध्याये पितृ-तर्पणे। अशून्यन्तु करं कुर्यात्सुवर्णरजतैः कुशैः" इति। शङ्खस्तु विशि-नष्टि-"विना रूप्यसुवर्णैश्च विना ताम्रतिलैस्तथा। विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते" इति। तिलतर्पणं प्रशंसति स्मृतिः-"कुशाहीनं तु यत्कर्म्म तिलहीनन्तु तर्पणम्। भोजनं दक्षिणाहीनं तत्सर्वं निष्फलं भवेत्" इति। तत्प्रतिषेधति विष्णुः-"भार्गवे भानुवारे च जन्मर्क्षे च तथा दिने। दूर्वास्नानं न कुर्वीत तिलैः कृष्णैस्तु तर्पणम्" इति। अपि च "रविशुक्रदिने चैव द्वादश्यां श्राद्धवासरे। सप्तम्यां जन्मदिवसे न कुर्यात्तिलतर्पणम्" इति। "रवौ कृष्णे त्रयोदश्यां सप्तम्यां निशि सन्ध्ययोः। तर्पणन्तु तिलैर्म्मिश्रं-तज्जलं रुधिरं भवेत्" इति च। मात्स्ये "सप्तम्यां निशि संक्रान्त्यां रविशुक्रदिने तथा। श्राद्धे जन्मदिने चैव न कुर्यात्तिल-तर्पणम्" इति। श्राद्धे = अमावास्यातिरिक्तश्राद्धे। "नीलषण्ढविमोक्षेण अमावास्यां तिलोदकैः। वर्षासु दीपदानेन पितॄणामनृणो भवेत्॥ अमा-वास्यान्तु ये मर्त्त्याः प्रयच्छन्ति तिलोदकम्" इत्यादिनाऽमावास्याश्राद्धे तद्विधिसिद्धेः। नीलषण्ढविमोक्षः = नीलवृषोत्सर्गः। बौधायनः-"पित्रोः श्राद्धे रवौ शुक्रे संक्रान्त्यां निशि सन्ध्ययोः। सप्तम्यां वर्षवृद्धौ च न कुर्यात्तिलतर्पणम्" इति। वर्षवृद्धिर्जन्मदिनम्। एतत्प्रतिप्रसवो यथा-"उपाकर्म्मणि चोत्सर्गे युगादौ मृतवासरे। सूर्यशुक्रादिवारेऽपि न दोष-स्तिलतर्पणे॥ तीर्थे तिथिविशेषे च कार्यं प्रेते च सर्वदा" इति स्कन्द-पुराणे। "तीर्थमात्रे तु कर्त्तव्यं तर्पणं सतिलोदकैः। योऽन्यथा तर्पये-न्मूढः स विष्टायां भवेत्कृमिः॥ विशेषतस्तु जाह्नव्यां सर्वदा तर्पयेत्पितॄन्" इत्येतद्वचनञ्च "तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके। निषिद्धेऽपि दिने कुर्यात्तर्पणं तिलमिश्रितम्" इति मरीचिवचनान्निषिद्धदिनतर्पण-परम्। जले वस्त्रनिष्पीडनं प्रतिषेधति पराशरः-"जलमध्ये तु यः कश्चिद् द्विजातिर्ज्ञानदुर्बलः। निष्पीडयति तद्वस्त्रं, स्नानं तस्य वृथा भवेत्" इति। याज्ञवल्क्यः-"वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभा-

गिनः। भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत्स्थले" इति। उच्छिष्ट-भागिनश्च "असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम्। उच्छिष्टं भाग-धेयं स्याद्दर्भेषु विकिरश्च यः॥ उच्छेषणं भूमिगतमजिह्मस्याशठस्य च। दासवर्गस्य तत्पित्र्ये भागधेयम्प्रचक्षते" इति मनुदर्शिता बोध्यास्तस्मा-द्भूमावास्तृतकुशाग्रयोपर्येतानुद्दिश्य वस्त्रनिष्पीडनोदकं देयमिति नित्यकृ-त्यार्णवे। "देवानृषीन् पितॄंश्चैव जलमध्ये तु तर्पयेत्। उत्तीर्य पीडयेद्व-स्त्रमपसव्यं यथाविधि" इति सर्वत्रैव जलादुत्तीर्यैव वस्त्रनिष्पीडनस्य मुख्यत उक्तेश्च। तथा च गृह्यसूत्रम्—"जलादुत्तीर्य स्नानशाटीं निष्पीड्य वस्त्रान्तरं परिधाय गायत्रीं जपेत्" इति। तर्पणात्प्राग् वस्त्रनिष्पीडनं प्रति-षिद्धम्, "निष्पीडयति यः पूर्वं स्नानवस्त्रन्तु तर्पणात्। निराशाः पितर-स्तस्य यान्ति देवाः सहर्षिभिः" "स्नातुं यान्तं द्विजं सर्वे देवाः पितृगणैः सह। वायुभूतास्तु गच्छन्ति तृषार्त्ताः सलिलं प्रति॥ निराशास्ते निवर्त्तन्ते वस्त्रनिष्पीडने कृते। तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम्" इति संवर्त्ता-दिस्मृतिभ्याम्। असंस्कृतमृतानुद्दिश्य दक्षिणाभिमुखो वस्त्रं निष्पीडयेत्तथा च स्मृतिः—"अन्नप्रकरवत्तस्या अपसव्येन पीडनम्। पीडयित्वा ततः पश्चा-ज्जपं कुर्यात्सुविस्तरम्" इति। अन्नप्रकरवत्=श्राद्धोच्छिष्टान्नविकिरवत्। तस्याः=शाट्याः। एतेनापि स्थल एव निष्पीडनमायाति दृष्टान्त-दार्ष्टान्तिकयोस्तुल्यत्वाभ्युपगमात्। न हि श्राद्धोच्छिष्टान्नं जले विकीर्यते। वस्त्र-निष्पीडनोदकदानात्प्राक् स्नान (निष्पीडनीय) वस्त्रं मृदा त्रिः क्षालनी-यम्, "स्नानशाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये" इति "मृदा प्रक्षा-लितञ्च यत्" इति च स्मरणात्। एतच्च गुह्याङ्गच्युतजलसम्बन्धदुष्टाधरी-यवस्त्रसंशोधनार्थं ज्ञेयम्। जले सार्द्रवस्त्रेण स्थले च शुष्कवस्त्रेणान्तर्जानु च तर्पणीयम्, "यज्जले शुष्कवस्त्रेण स्थले चैवार्द्रवाससा। सर्वं तन्निष्फलं प्रोक्तं बर्हिर्जानु च यत्कृतम्" इति दक्षेण तद्विरुद्धप्रतिषेधात्। एवमेव शिष्टाचारोऽपि। एतत्प्रतिषेधति स्मृत्यन्तरम्—"द्वादश्यां पञ्चदश्याञ्च संक्रा-न्तौ श्राद्धवासरे। वस्त्रं निष्पीडयेन्नैव न च क्षारेण योजयेत्" इति। तर्पणे निषिद्धं जलमुक्तं गौडीयनिबन्धे—"यन्न सर्वार्थमुत्सृष्टं यच्चाभोज्यनि-पानजम्। तद्वर्ज्यं सलिलं तात सदैव पितृकर्म्मणि" इति। अभोज्येति—अभोज्यस्य=अभोज्यान्नस्य यन्निपानं=जलाशयस्तज्जन्यमित्यर्थः। वायु-

पुराणे-"शूद्रोदकैर्न कुर्वीत तथा मेघाद्विनिःसृतैः" इति । वृष्टिजलसम्बन्धेऽपि निषेध उक्तस्तत्रैव "मेघे वर्षति यः कुर्यात्तर्पणं ज्ञानदुर्बलः । पितृणां नरके घोरे गतिस्तस्य भवेद्ध्रुवम् (वा)" इति । उद्धृतजले त्वाह हारीतः-"पात्राद्वा जलमादाय शुचौ पात्रान्तरे क्षिपेत् । जलपूर्णेऽथवा गर्त्ते न स्थानेषु विबर्हिषि" इति । "अङ्गुष्ठानामिकाभ्यान्तु दक्षिणस्येतरात्करात् । तिलान् गृहीत्वा पात्रस्थान् ध्यात्वा सन्तर्पयेत्पितॄन्" इति नारदवचनं प्रमाणीकृत्य 'वस्त्राऽऽवृते वामबाहौ तिलान् संस्थाप्याऽऽमुद्रदक्षिणहस्ततर्जन्यङ्गुष्ठान्यतरेण तिलानादाय वामकरतले संस्थाप्य तर्पये'-दिति । तर्पणप्रक्रियामाह मदनपारिजातः । अधरीयवस्त्रैकदेशेन वामहस्तेन वाऽऽहृतेन जलेन देव—पितृकर्म प्रतिषेधति शातातपः—"नाधोवस्त्रैकदेशेन शुद्ध्यर्थमप आहरेत् । यद्यानीतं तु सव्येन प्रोक्षयेद्दक्षिणेन तु" इति । सव्येन = वामेन । सम्पूर्णतर्पणकरणाशक्तौ तु "आब्रह्मस्तम्बपर्यन्तं जगत्तृप्यत्विति ब्रुवन् । दद्यादपोऽञ्जलींस्त्रींस्तु कुर्वन् संक्षेपतर्पणम्" इति विष्णुपुराणोक्तं संक्षिप्तं तर्पणं कर्त्तव्यम् । तर्पणोत्तरकर्त्तव्यमुक्तं विष्णुपुराणे—"आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम्" इति । अर्घदानमन्त्रोऽपि तत्रैव-"नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जगत्सवित्रे शुचये सवित्रे कर्म्मदायिने" इति । ततः "ॐ जपा (वा) कुसुमसंकाशं काश्यपेयं महाद्युतिम् । ध्वान्तारिं सर्वपापघ्नं प्रणतोऽस्मि दिवाकरम्" इत्यनेन सूर्यम्प्रणमेत् ॥

## अथागस्त्यतर्पणम् ।

तच्च भाद्रशेषदिनत्रये कर्त्तव्यमुक्तं ब्रह्मवैवर्त्ते "अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः । अर्घं दद्युरगस्त्याय गौडदेशनिवासिनः" इति । कन्यां—कन्याराशिमप्राप्ते भास्करे—भाद्र इत्यर्थः । नारसिंहे-"शङ्खे तोयं विनिक्षिप्य सितपुष्पाक्षतैर्युतम् । मन्त्रेणानेन वै दद्याद्दक्षिणाभिमुखः स्थितः" इति । अनेन मन्त्रेण = शङ्खं पुष्पं फलं तोय-मित्यादिना तत्रोक्तेन । तत्र दिनत्रये मन्त्रत्रयं यथा "कुम्भ ( घट ) योनिसमुत्पन्न मुनीनां मुनिसत्तम । उदयस्ते लङ्काद्वारे अर्घोऽयम्प्रतिगृह्यताम् ॥१॥ शङ्खं पुष्पं फलं तोयं रत्नानि विविधानि च । उदयस्ते लङ्काद्वारे अर्घोऽयं प्रतिगृह्य-

ताम् ॥२॥ काशपुष्पप्रतीकाश वह्निमारुतसम्भव। उदयस्ते लङ्काद्वारे अर्घो-ऽयम्प्रतिगृह्यताम् ॥ ३ ॥ इति।

## अथ संक्षिप्तनित्यश्राद्धविधिः।

कुशत्रयतिलजलान्यादाय ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतो-ऽपि वा यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॐ पुण्डरीकाक्षः पुनातु इति श्राद्धीयद्रव्याण्यात्मानञ्च सिक्त्वा कुशत्रयतिलजलैः ॐ अद्य नित्यश्राद्धमहं करिष्ये इति सङ्कल्प्य गायत्रीं देवताभ्य इति च त्रिर्जपित्वाऽप-सव्येन वामं जानु पातयित्वा दक्षिणामुखो मोटकतिलजलान्यादाय ॐ अद्यामुकगोत्राः पितृ–पितामह–प्रपितामहा अमुकामुकशर्म्माण इदमन्नं सतिलं वः स्वधा। ॐ अद्यामुकगोत्रा मातामह–प्रमातामह–वृद्धप्रमातामहा अमुकामुकशर्म्माण इदमन्नं सतिलं वः स्वधा इत्येकदैव पात्रस्थं सतिल-मन्नमुत्सृजेदिति ॥*॥ विशिष्टनित्यश्राद्धविधिस्तु तथैव ॐ अपवित्र इत्यादिना पुण्डरीकाक्षस्मरणपूर्वकं श्राद्धीयद्रव्याण्यात्मानञ्च सिक्त्वा कुशत्रयतिलजलान्यादाय प्राङ्मुखः ॐ अद्य नित्यश्राद्धमहं करिष्ये इति सङ्कल्प्य गायत्रीं देवताभ्य इति च त्रिर्जपित्वाऽपसव्यं कृत्वा वामं जानु पातयित्वा दक्षिणाभिमुखो मोटकादिना ॐ अद्यामुकगोत्र पितरमुकशर्म्म-न्निदमासनं ते स्वधा इत्यनेन तिलजलप्रोक्षितं दक्षिणाग्रं मोटकरूपमास-नमुत्सृजेत् एवमेव पितामहादिभ्योऽपि पञ्चभ्यः। ततः ॐ अपहत-असुरा रक्षाँसि ( क्षांसि ) वेदिषदः इत्यनेनान्नपात्रोपरि तिलान् विकीर्य ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्–इत्यावाह्य ॐ अद्यामुक-गोत्र पितरमुकशर्मन्नेतानि गन्धपुष्पंधूपदीपताम्बूलानि ते स्वधा इति यथाशक्ति गन्धादीनि दद्यात्। एवं पितामहादिपञ्चकायापि। ततो गायत्रीं पठित्वा जलेन भोजनपात्रासनयोश्चतुष्कोणं मण्डलं कारयित्वा एकत्र पात्रे सघृतं जलं निधायान्नोपरि मधु दत्त्वा दक्षिणेन पाणिनाऽन्नपात्रमालभ्य ॐ मधुवातेति त्र्यृचं पठित्वा कराभ्यामन्नं स्पृशन् ॐ पृथिवी ते पात्र-मित्यादि ॐ इदं विष्णुरित्यादि ॐ कृष्ण कव्यमिदं रक्ष मदीयमित्यन्तं पठित्वा वामहस्तमनुद्धरन्नेव दक्षिणहस्ताङ्गुष्ठेन ॐ इदमन्नमित्यन्नम् ॐ

इमा आप इति जलम् ॐ इदमाज्यमिति तत्पुटकस्थमेव घृतम् ॐ इदं हविरिति पुनरन्नञ्च संस्पृश्य ॐ अपहता असुरा इत्यनेनान्नोपरि तिलान् विकीर्य मोटकादीन्यादाय ॐ अद्यामुकगोत्र पितरमुकशर्म्मन्नि-दमन्नं सतिलं ते स्वधा इति पित्रेऽन्नमुत्सृजेदेवं पितामहादिपञ्चकायापि। क्षत्रियादयस्तु शर्म्म-स्थाने वर्म्मादिकं प्रयुञ्जीरन्। ततः ॐ देवताभ्य इति त्रिर्जपित्वा ॐ प्रमादात्कुर्वतां कर्मेत्यादिना समग्रमन्त्रेण विष्णुं स्मृत्वा तदन्नं ब्राह्मणाय प्रतिपादयेदिति॥

इति विविधविरुदावलीविराजमान-मानोन्नतमहाराजाधिराज-
मिथिलाधिपति-श्रीलकामेश्वरसिंहमहोदयाश्रितेन तदीय-
संस्कृतमहाविद्यालयाध्यक्षेण कौशिकीप्रान्तान्तर्गत-
गोसपुराभिजनीनेन पण्डितप्रवर 'पदार्थ-
मिश्र'-पुत्रेण श्रीत्रिलोकनाथमिश्रेण
संगृह्य निर्मितः पितृकर्म-
निर्णयः सम्पूर्णः॥



## कुलकम्

लब्धवान् पाणिनीयं यो हरिशङ्करशर्मणः। मीमांसां धर्मशास्त्रञ्च गुरोर्विश्वधराभिधात्॥

नव्यन्याये शब्दखण्डं समग्रं बालकृष्णतः। दर्शनान्तरसंस्कारं तदाशीराशितस्तथा॥

साहित्ये प्रौढ-धिषणो दरभङ्गेशमानितः। श्रीविश्वेश्वरसिंहस्य कृपापात्रं नरेशितुः॥

नेत्राश्ववसुचन्द्रेऽब्दे शाके नभसि मेचके। चतुर्दश्यामिमं ग्रन्थं सम्प्रकाशितवान् स्वयम्॥

'तरौनी'-ग्रामवास्तव्यो रामचन्द्राभिधः सुधीः। साहायकं प्रकाशेऽस्य कृतवानतियत्नतः॥

* श्रीराधाकृष्णार्पणमस्तु *